## ॥ अथ श्रीगीताविवृत्तिः प्रारभ्यते ॥

## ॥ श्रीविजयेष्ट श्रीकृष्णाय नमः ॥

शास्त्रेषु भारतं सारं तत्र नाम सहस्रकम् ॥ वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽजसा ॥
भारतं सर्वशास्त्रेषु भारते गीतिका वरा ॥ विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्द्वयम् ॥
गीता सुगीता कर्तव्या किमन्यैः शास्त्रसंग्रहैः ॥ या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥

इहखलु तापत्रयादिदुःखपरिपूर्णे कामक्रोधादिभीषणभोगिनिवासभयंकरापारानाद्यज्ञानांधकारे संसारे अन्यथारूपत्ववर्जनपूर्वकस्व-स्वरूपस्थितिरूपात्यंतसुखस्योपायभूतं विष्णुसर्वोत्तमताज्ञानं, विष्णोः परस्परं च भिन्नानां ब्रह्मादितृणांतजीवानां जडानां च ( तारतम्यं ) नीचोच्चताज्ञानं, स्वस्य ईशाधीनकिंकरत्वसंबंधज्ञानं, एतेषां दाढर्याभावेन अतिसमीपस्थेपि स्वरूप ( मोक्ष ) सुखे, कर्णस्थकठिन्यन्वे-षणवत्, मृगपतिभीतिपलायितगोगजाइव इतस्ततोदशदिक्षु स्वैरं धावमानानां अन्यत्र शांतिस्थानमलब्ध्वा हा दुःखं, दुःखमिति आक्रोशमानानां वास्तवसुखलेशमप्यलभमानानां सात्विकजनानां तत्रापि मुमुक्षूणां शाश्वतात्यंतसुख ( मोक्ष ) साधन यथार्थज्ञानोपदे-शार्थं प्रवृतापि श्रीकृष्णगीता अविद्यांधानेकव्याख्यातृणां व्याख्यानेन 'नैर्मल्यकरणे सुरास्पृष्टगंगांभइव' यथार्थज्ञानोपदेशासमर्थेति ज्ञात्वा करुणापारावारैः **श्रीमदाचार्यैः** श्रीगीतायाः यथावस्थितार्थं व्याचक्षाणैः गीताशब्दानुकरणपूर्वकं स्वपदवर्णनरूपं केवलगीतार्थविवरणात्मकं "**गीताभाष्यं**" शब्दानुकरणादि विना केवलगीतातात्पर्यवर्णनात्मकं "**गीतातात्पर्य**" चेति, यथार्थज्ञानोपदेशकं व्याख्याद्वयं अनुगृ-हीतम् एवमपि गंभीरवाचा विक्षिप्य वर्णितस्य व्याख्यानद्वयार्थस्य मंदानामपि सुखेनावबोधार्थं श्रीमध्वमतवर्धनैः **श्रीमद्राघवेंद्र** पूज्यपादैः व्याख्याद्वयार्थं एकत्रैव संक्षेपेण दर्शयितुं "**श्रीगीताविवृत्तिः**" इति नाम्ना व्याख्या कृता तत्रापि प्रथमाध्यायस्य द्वितीया-

ध्यायस्थश्लोकदशकस्य च भाष्यतात्पर्याभावात् ज्ञानोपदेशार्थं प्रवृत्तगीतात्वमेव नेति वदतां मोहापनोदार्थं श्रीमदाचार्यैः श्रीमन्महाभारततात्पर्यनिर्णये सूचिताध्यात्मादित्रयर्थवर्णनपरा "त्रिविधार्थविवृत्तिः" इति व्याख्या श्रीनारदानुग्रही पांगरी "श्रीनिवासाचार्यैः" विरचिता, एतच्छ्रवणमननाभ्यासात् मुमुक्षवः गीतायाः यथार्थज्ञानं लब्ध्वा भवबंधनं हित्वा स्वरूप (मोक्ष) सुखं प्राप्य कृतार्थाः भवंतीति सुप्रसिद्धमेवेति नात्र विशेषतोपपादयामः ॥-इतः पूर्वं अन्यत्र गीताविवृत्तिः प्रकाशिता तत्र कतिपयश्लोकव्याख्यानां वाक्यानां शब्दानां च, अभावेन जिज्ञासूनामत्याग्रहेण अत्र प्राचीनलिखितशुद्धपुस्तकैः विशेषतः संशोध्य श्रुतिसूत्रार्थावबोधकटिप्पण्यादिभिरलंकृत्य दशश्लोकाधिकप्रथमाध्यायस्य त्रिधार्थविवृत्ति सहिता गीताविवृत्तिः प्रकाशिता अत्र द्वितीयाध्यायस्थ श्लोकदशपर्यंतं "रा. वि." इति संकेताक्षरपुरःसरं श्रीमद्राघवेंद्रयतिकृता गीताविवृत्तिः "त्रि. त्रि." इति संकेताक्षरपुरःसरं त्रिविधार्थविवृत्तिः श्रीनिवासाचार्यकृता अध्यात्मार्थ, अंशार्थ, प्रसिद्धार्थवर्णनपरा मुद्रितास्ति. अग्रेपि २ अ० ११ श्लो० १२ श्लो० २२ श्लो०, ३ अ० १६, श्लो० १५ अ० ७ श्लो० इत्यादिश्लोकानां श्रीनिवासाचार्यकृता चमत्कृता व्याख्यापि रसिकजनविनोदार्थं प्रवेशिता तथा सर्वेषां सौकर्यार्थं ग्रंथ, अध्याय, विषय, श्लोकानुक्रमणिका गीतामाहात्म्यंच महता प्रयासेन मुद्रितास्ति तस्मात् इमं ग्रंथं दर्शं दर्शं, भक्तोद्धारपरायणं श्रीनारायणं स्मारं स्मारं, भगवदधीनज्ञानपूर्वकं निष्कामकर्माणि कारं कारं, सुकृतजातं चायं चायं, यथा काममिह लोके अर्थकामौ लंभं लंभं, धन्याः सन्तः स्फटिकवन्निर्मलांतःकरणाः बंधुभूताः विष्णुभक्ताः अन्तेच भजन्तु स्वरूपानंदानुभवरूपं मोक्षमिति निष्कामकर्मजन्यज्ञानदायिनं भगवन्तं श्रीकृष्णं तथैव दयालून् गुरून्प्रार्थये ॥

प्रमादेनाप्रबोधेनायुक्तं चेल्लिखितं यदि । परिशोध्य तदस्मासु दयां कुर्वंतु सूरयः ॥

व्यासाश्रम—बेळगांव,
शके, १८४८ विजयादमी.

कृष्णाचार्य पांगरी.



## श्रीमद्भगवद्गीतास्थविषयानुक्रमणिका.

### श्रीगीतायां.

भगवान् श्रीकृष्णः साक्षादिंद्रावतारमात्मनः प्रियतमं विजयं, सार्ववर्णिकसाधारणं क्षत्रियाणां विशेषतोपि परमधर्मं नारायणद्विट्तदनुबन्धिनिग्रहं युद्धं, बंधुस्नेहादधर्मत्वेनाशंक्य, ततोनिवृत्तप्रायं अर्जुनं, निमित्तीकृत्य ज्ञानार्थं प्राप्तानां, श्रीहरितद्भक्तशुश्रूषा, अनसूया, भक्ति, तपोयुक्तलोकानामुपकारार्थं, स्वस्ववर्णाश्रमविहितवृत्त्या भक्त्या भगवदाराधनमेव परमोधर्मः तद्विरुद्धः सर्वोप्यधर्मः भगवदधीनत्वात्सर्वस्येति बोधयति ॥ (इति सारांशः)

तत्र, प्रथमषट्के-ज्ञानोपायोक्तिः-२ द्वितीय षट्के-ज्ञानकथनम्-३ तृतीय षट्के-पूर्वोक्तसर्वप्रपंचनम्

१ अध्याये—गीताबोधनप्रसक्ततया. युद्धारंभवर्णनं अर्जुनस्य गुरुबांधवादिहननप्रसंगेन स्नेहादधर्मेति स्वविहित भगवद्विट्तदनुबंधिनिग्रहरूपयुद्धादुपरम्य विषादकरणम्. ॥ ४७ ॥

२ अध्याये—परमात्मजीवात्मस्वरूपकथनं तज्ज्ञानसाधनरूपयोगाख्यनिष्काकर्मणः लक्षणं, तत्कर्तव्यत्वसमर्थनं, संप्रज्ञातासंप्रज्ञातज्ञानिलक्षणकथनप्रसंगेन इंद्रियनिग्रह, भगवन्महिमा, मोक्षस्वरूपवर्णनम् ॥ ७२ ॥

३ अध्याये—ज्ञानसाधनतया स्वोचितकर्मोदासीनतां विनिंद्य कर्मयोगस्य विशेषप्रपंचनपूर्वकं अवश्यकर्तव्यत्वसमर्थनम् ॥ ४३ ॥

४ अध्याये—पूर्वोक्त ज्ञानकर्मणोर्विशेषविस्तृतया वर्णनपूर्वकं, बुद्धेः परस्य तारतम्यांतगतेन श्रीहरेः माहात्म्यं, कर्मभेदवर्णनं, ज्ञानमाहात्म्यादिवर्णनं च ॥ ४२ ॥

॥ श्रीमद्धनुमद्भीममध्वांतर्गत रामकृष्णवेदव्यासात्मक लक्ष्मीहयग्रीवाय नमः ॥ हरिः ॐ । लक्ष्मीनारायणं नत्वा पूर्णबोधान्गुरूनपि । कुर्मः श्रीकृष्णगीतायाभाष्याद्युक्तार्थसंग्रहं । " स्त्रीशूद्रब्रह्मबंधूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृत " मिति भागवतोक्त्या वेदार्थज्ञानानधिकारिणां स्त्रीशूद्रादीनां धर्मज्ञानद्वारा मोक्षोभवेदिति भगवान्वेदव्यासः संभवसभाऽऽरण्यविराटोद्योगभीष्मद्रोणकर्णशल्यगदासौप्तिकशांत्यानुशासनिकाश्वमेधिकमौसलमहाप्रस्थानस्वर्गारोहणभविष्यत्पर्वभेदेन अष्टादशपर्वात्मकं भारतं कृत्वा तत्र भीष्मपर्वणि भारतपारिजातमधुभूतां सर्वभारतार्थसंग्रहभूतां श्रीकृष्णार्जुनसंवादरूपां भगवद्गीतां निबबंध । तत्रपूर्वषट्के ज्ञानोपायोक्तिः । द्वितीयषट्के तत्साध्यज्ञानस्योक्तिः । तृतीयषट्के प्रागुक्तस्य प्रपंचनं क्रियत इति विवेकः । तत्राद्याध्यायो द्वितिये कति

॥ धृतराष्ट्रउवाच ॥ ॐधर्मक्षेत्रे कुरुक्षेत्र समवेता युयुत्सवः । मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥१॥

॥ अथ श्रीमद्भगवद्गीतादशश्लोकाधिक प्रथमाध्यायस्य त्रिविधार्थविवृत्तिः ॥

पयश्लोकाश्च कृष्णेनार्जुनबोधने प्रसक्तिसंपादनाय प्रवृत्ताः । तत्रायमर्थः । धृतराष्ट्रउवाच । किमित्याह धर्मेति धर्मसाधनभूमौ कुरुक्षेत्रे युयुत्सवः-युद्धमिच्छंतएव समवेता-मिलिताः संतो मामका-मदीयाः पांडवाश्च हे संजय किमकुर्वतेति इति शब्दोयोज्यः । पांडवानां भगवत्प्रियत्वं सर्वसाक्षिकमप्यजानन्धृतराष्ट्रः स्वपुत्राणां विजयविविदिषया संजयं पप्रच्छेत्यर्थः ॥ १ ॥

॥ श्रीलक्ष्मीनृसिंहाय नमः ॥ त्रि. वि. श्रीनारदाभिधगुरोर्हृदयस्थपूर्णप्रज्ञांतरोड्कगरमो गजवैरिवक्त्रः ॥ मत्कामितं प्रवितरन्नमितो यदर्थं प्रत्यूहहा जयति तात्विकमुख्यवंता ॥ १ ॥ श्रीगीताप्रथमाध्यायमध्यात्मादौ विपंचितुं ॥ उद्यतस्यापि मे बाल्यं क्षन्तुमर्हन्ति सूरयः ॥२॥

नन्विदमुद्यमनमयुक्तम् । अस्य व्याख्येयग्रंथस्यैवानारम्भणीयत्वात् ॥ तथाहि—अनारम्भणीयनिमित्तं तु द्वेधा । अप्रामाण्यम्, अनुबन्धवैधुर्यं, चेति । अप्रामाण्यनिमित्तमपि त्रेधा ॥ अनाप्तवचनम् , श्रुतिविरोधो, युक्तिविरोधश्चेति, ॥ अनाप्तत्वहेतुरपि त्रिविधः, वक्तुः, श्रोतुः प्रसंगस्य,च अनानुकूल्यम् ॥ वक्तुरनानुकूल्यमपि त्रिविधम्—विवक्षितार्थतत्वाज्ञानम्, करणापटुत्वम्, विवक्षाभावश्चेति ॥ ततश्चायं ग्रंथः पौरुषेयः, अपौरुषेयोवा नाद्यः । ऋगादीनामेव अपौरुषेयत्वेन तदितरस्य तदभावात् । नच ऋगादिरेवायम् । तत्रानन्तर्भावात् ॥ द्वितीये तु कोस्य? वक्ता व्यास इति चेत् । तस्य जननादिना अस्मत्साद्दश्येन तत्वज्ञानपटुकरणत्वाभावादननुकूलत्वम् ॥ नच भगवानेव व्यासः जननादिमत्वात्, कृतकृत्यस्य च तस्य प्रयोजनाभावाद्विवक्षाशून्यत्वेनाननुकूलत्वं सुस्थमेव ॥ एवं त्रिविधस्यापि वक्त्रानुकूल्यस्याभावाद्वक्तुर्व्यासस्यानाप्तत्वमेव । श्रोत्रननुकूलत्वेनापि तत् । तथाहि—श्रोत्रानुकूल्यमपि द्विविधम् ॥ तत्वज्ञानयोग्यता, वक्तृप्रीतिविषयता चेति । तत्र इह किमस्मदादीनां श्रोतृत्वं, ब्रह्मादीनां वा । नाद्यः विषयैककामत्वेनोभयोरप्यभावात् । न द्वितीयः । तेषां स्वतः सर्वज्ञत्वेनैव श्रवणायोगात् श्रवणानादरेणैव वक्तृप्रीतिविषयताया अप्ययोगात् सुस्थमनाप्तत्वम् ॥ प्रसंगविरहेणापि तत् । प्रसंगोनाम श्रोतृप्रयोजनोद्देशः । तत्र विषयापेक्षाणामस्मदादीनां श्रोतॄणां नहि मोक्षादिप्रयोजनम्. नाप्यनेन विषयलाभः । ब्रह्मादीनां तु देवत्वप्राप्त्यैव तदधिकान्यस्य प्रयोजनस्याभावः ॥ एवं त्रिविधस्यापि आप्तवाक्यनिमित्तस्याभावादप्रामाण्यम् । श्रुतिविरोधीचायम् । तत्र । “ हिरण्यगर्भः समवर्तताग्र”इति ब्रह्मणोऽग्रे विद्यमानत्वकथनेपि, अत्र. “अहमादिश्च भूतानामिति” भगवदुक्तेः ॥ तथैव युक्तिविरोधी-एतद्ग्रंथोक्तं नाचरणीयम्, दुःखसाध्यत्वात्, अग्निस्पर्शवदित्याद्युक्त्या तद्विरुद्धाचरणे सुखोपलम्भात् ॥ एवं श्रुतियुक्तिविरोधानाप्तवाक्यत्वसंभवेन सिद्धादप्रामाण्यादनारम्भणीयत्वं । अनुबन्धवैधुर्यादपि तत् । विषयप्रयोजनाधिकारिसम्बन्धभेदेनानुबन्धस्यापि चातुर्विध्यम् । तत्र नात्र विषयः । अस्त्यध्यात्मज्ञानमिति चेत्, ज्ञातृज्ञेययोर्भेदेन ज्ञानं, किंवा अभेदेन । नाद्यः । भेदस्यैवाप्रामाण्यात् । नांत्यः । ज्ञातृज्ञेययोरेकत्वे ज्ञातुर्ज्ञेयत्वेन ज्ञेयस्य च ज्ञातृत्वेन विद्यमानत्वप्रसक्त्या ज्ञानायोगात् । आत्मनः स्वप्रकाशतया नित्यसिद्धत्वाच्च । संदिग्धोहि



विषयो भवति । आत्मनस्त्वहमित्यनुभवेनैव वेद्यतया शास्त्रस्य सिद्धसाधनतापत्तेश्च ॥ नापि प्रयोजनम्,—किमैहिकं प्रयोजनं आमुष्मिकं वा । नाद्यः । अधीतेप्यस्मिन्कामोपलम्भाभावात् । न द्वितीयः । आमुष्मिकस्यैवाभावात् । भावे वा गीतापाठेनैव मोक्षगन्तुरश्रवणात् ॥ विषयप्रयोजनाभावादधिकार्यभावः ॥ उभयाभावादेव सम्बन्धाभावोपि ॥ एवं चतुर्विधानुबन्धशून्यत्वेन चानारम्भणीयत्वमिति ॥ मैवम् ॥ प्रामाण्यसद्भावात् ॥ यत्तु प्रामाण्यकारणवक्त्रानुकूल्यनिरासाय जननादिहेतुना व्यासस्य नाराय-णत्वाभावः साधितः । तदसाधु । “ स्वयं नारायणोदेवो ब्रह्मरुद्रेन्द्रपूर्वकैः ॥ अर्थितो व्यासतां प्राप्य केवलं तत्वनिर्णयं ॥ चकार पंचमं वेदं महाभारतसंज्ञक”मित्युक्तेः ॥ नचागमानुकूल्यं विना केवलानुमानमर्थसाधकम् । सर्वत्र कर्तुं सुशकत्वात् । तदुक्तम् “सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा । तस्मान्न सा शक्तिमती विनाऽऽगममुदीक्षितु”मिति वाराहे ॥ जन्मादिप्रदर्शनं तु केवलासज्जनमोहनाय । अजातो जातवद्विष्णुरमृतो मृतवत्तथा । मायया दर्शयेन्नित्यमज्ञानां मोहनाय चेति ब्राह्मे ॥ योहि सर्वज्ञकल्पानां ब्रह्मादीनां तत्वोपदेष्टा स कथमतत्वज्ञः । ब्रह्मरुद्रादिदेवेषु मनुष्यापितृपक्षिषु । ज्ञानं संस्थाप्य भगवान्क्रीडते पुरुषोत्तम” इति स्कान्दे ॥ यश्च बव्हागमप्रणेता स कथमपटुकरणो भवेत् । “ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च । अन्यावताररूपैश्च वेदानुक्तार्थभूषितम् । भारतं पंचरात्रं च मूलरामायणं तथा ॥ पुराणं भागवतं चेति संभिन्नःशास्त्रपुङ्गव” इति नारायणाष्टाक्षरकल्पे ॥ “उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयमिति ” स्कान्देच ॥ यच्च कृतकृत्यतया प्रयोजनाभावेन विवक्षाभावसाधनं तदप्यनुचितम् । “मास्तु स्वार्थं प्रयोजनम् तथापि परप्रयोजनार्थं विवक्षाभावसम्भवात् । दृश्यन्ते हि केवलं कृपापारवश्येन परोपकाराय प्रवृत्ताः ॥ एवं त्रिविधस्यापि वक्त्रानुकूल्यस्य सत्वात्, व्यासस्यानाप्तत्वाभावः ॥ यच्च श्रोत्रानुकूल्याभावसाधनं तदप्यनुचितम् । श्रोतारस्तावद्ब्रह्मादयः । न च तेषां सार्वज्ञेन श्रवणायोगः, ईश्वरविषये सार्वज्ञ्याभावात् । तथोक्तं वायुपुराणे “ सर्ववेदेषु येचोक्ता गुणा विष्णोः सुमंगलाः । तानेव भगवान्ब्रह्मा वेत्ति लक्ष्मीस्ततोऽधिकान् ॥ अज्ञाताश्च तया लक्ष्म्या कोटिशः सन्ति ते गुणाइति । अतः श्रवणानादराभावः । ब्रह्मणो

ज्ञानिश्रेष्ठत्वं चोक्तम् । "प्रायो ब्रह्मणोनाप्रतिभासितमिति" तत्वप्रकाशिकायाम् । "अहं ज्ञानिप्रियोनित्य"मिति ह्यत्रैव वक्ष्यति । अतो न श्रोत्रानुकूल्याभावः ॥ यच्च प्रसंगाभावसाधनार्थं देवत्वप्राप्तिरूपहेतुना ब्रह्मादीनां देवत्वाधिकान्यप्रयोजनाभावउक्तः सोऽनुचितः । देवत्वादपि मोक्षस्याधिक्यात् । देवानां भयदुःखादिकं दृष्टम् ॥ "भीषास्माद्वातः पवते" । "यस्माद्बिभेम्यहमपि द्विपरार्धाधिष्ण्य" इत्यादि श्रुतिस्मृतिभ्यः । मोक्षे तु तदभावात् । "नाप्रियं किंचिदपि तु मुक्तानां विद्यते क्वचित् । कुतएव तु दुखं स्यात्सुखमेव सदोदितमिति" नारायणतंत्रे । तस्माद्देवत्वसकाशान्मोक्षस्याधिक्यसद्भावेन प्रसंगानुकूल्यस्याभावाभावात् अप्रामाण्याभावः ॥ ननु वक्त्राद्यानुकूल्येन अप्रामाण्याभावेपि विप्रलिप्सया किं नस्यादिति चेन्न । विप्रलिप्सायाः श्रोतृप्रसंगाननुकूल्यैकनिबन्धनत्वात्तदभावेनाभावात् ॥ यच्चोक्तं "श्रुतिविरोधी" ति तदप्यसत् । नहि "हिरण्यगर्भः समवर्तताग्रे" "अहमादिश्चभूतानामिति" वाक्ययोर्विरोधः । भूताग्रास्थितब्रह्मणोप्यग्रे हरेर्विद्यमानत्वात् । "वासुदेवोवा इदमग्रआसीन्न ब्रह्मा नच शंकर" इति श्रुतिः । "यो ब्रह्माणं विदधाति पूर्व" मिति च । स्वेतरभूताग्र इति श्रुत्यर्थः । ब्रह्मादिभूतानामिति गीतार्थः ॥ यच्च "युक्तिविरोधी" त्युक्तं, तदसम्यक् । न हि दुःखसाध्यत्वेनैतद्ग्रन्थोक्तं नाचरणीयम् । परिणामे सुखोपलम्भात् । न च तद्विरुद्धाचरणेन सुखोपलम्भः । तस्याग्रिमत्वेन राजसत्वात् । राजसस्य च सात्विकाधमत्वात् । तद्वक्ष्यति च–"यत्तदग्रे विषमिव परिणामेऽमृतोपमं । तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ विषयेंद्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् । परिणामे विषमिव तत्सुखं राजसं स्मृतमिति" । "पार्थिवाद्दारुणो धूमःस्तस्मादग्निः त्रयीमयः । तमसस्तु रजस्तस्मात्सत्वं यद्ब्रह्मदर्शनमिति" भागवते ॥ एवं श्रुतियुक्तिविरोधानाप्तवाक्यत्वासंभवेनाप्रामाण्याभावादनारम्भणीयत्वाभावः ॥ यच्चानुबन्धवैधुर्यसाधनाय विषयाभावसाधने "अध्यात्मज्ञानं किं ज्ञातृज्ञेययोर्भेदेनोताभेदेनेति" विकल्प्य पृष्टं । तत्र भेदेनेति वदामः । न च तस्याप्रामाण्यम् । "सत्य आत्मा सत्यो जीवः सत्यंभिदा सत्यंभिदा सत्यंभिदा मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः" इति पैंगीश्रुतेः ॥ आत्मा हि परमः स्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवर" इति भाल्लवेयश्रुतेश्च । "यथेश्वरश्च जीवश्च सत्यभेदौ

परस्परं । तेन सत्येन मां देवास्त्रायन्तु सह केशवा'' इति स्मृतेश्च ॥ यदपि प्रयोजनाभावसमर्थनाय आमुष्मिकाभावकथनं तदतिजुगुप्सितम् । श्रुतिविरुद्धत्वात् । ज्ञानादेव स्वर्गो ज्ञानादेवापवर्ग'' इति कौंठरव्यश्रुतिः । यस्तु श्रुतिं नाभ्युपैति सनास्तिकत्वादुपेक्ष्यः ॥ प्रयोजनाभावेन समयाभावाच्च ॥ लोकोपकाररूपं प्रयोजनमस्तीति चेन्न तन्मते अदृष्टस्यैवाभावेनोपकारस्याप्रयोजकत्वात् ॥ यच्च गीता-पाठेन मोक्षगंतुरश्रवणमुक्तं तदज्ञाननिमित्तम्, ''दामोदरं तथा पूज्यगीतापाठं तदग्रतः । कृत्वा तु स्वायुरानीय देहमन्ते विसृज्यच । जगाम परमं स्थानं योगिनामपि दुर्लभ'' मिति स्कान्दोक्त्या, जडमुक्तस्य मोक्षश्रवणात् ॥ एवं विषयप्रयोजनभावेन नाधिकार्यभावः ॥ अधि-करी चात्र नित्यानित्यवस्तुविवेकवैराग्यशमदमादिसंपत्तिमुमुक्षावान् । तस्यैवाध्यात्मज्ञानेन मोक्षश्रवणात् । अतएव सम्बन्धभावः ॥ अतो नोद्यमनमयुक्तमिति सिद्धम् ॥ नन्वस्यारम्भणीयत्वेपि सत्सु चान्येष्वस्यैव व्याख्याने किं प्रयोजनमस्ति इति चेत्, सर्वशास्त्रेभ्योवरिष्ट-त्वात् तर्हि निखिलमेव भारतं व्याख्येयं किं पुनर्गीतैव व्याख्येयतइति चेत् । भारतेऽपि गीतिकायाएव श्रेष्ट्यात् । तदुक्तं कौर्म्ये— ''भारतं सर्वशास्त्रेषु भारते गीतिका वरे''ति । तथापि समग्रां गीतां विहाय प्रथमाध्यायस्यैव व्याख्यानप्रतिज्ञानं किमर्थं कृतमितिचेत् । समग्रगीताया आचार्यादिभिर्व्याख्यातत्वात् प्रथमाध्यायस्य तु संक्षेपेण व्याख्यानात् । तेनैव निर्वाहे पुनर्व्याख्याऽनुपयुक्तेतिचेन्न । यद्यपि तैर्व्याख्यातं, तथाप्यध्यात्मार्थे विस्तरेण न व्याख्यातम् । एतद्व्याख्यानस्य सविस्तराध्यात्मविषयत्वात् । तर्हि तथा अव्याख्याने पूर्वेषा-मज्ञानप्रसक्तिरिति चेन्न । जानद्भिरेव तैः प्रायेविषयित्वेन जनानामरुचिकरमिति मत्वा तादर्थ्येनाव्याख्यानात् । एवमपि भवद्व्याख्यानस्या-प्यरुचिकरत्वं प्राप्तमिति चेत् । अस्तु विषयिणामरुचिकरत्वं, तथापि मुमुक्षूणां रुचिकरत्वात् । अध्यात्मज्ञानस्यैव मोक्षकारणत्वात् । तैरपि तदर्थमेव व्याख्यातव्यमिति चेन्न । तेषां ते संक्षेपोक्त्यैवावगच्छेयुरित्याशयात् । तथापि श्रुतपरित्यागाश्रुतकल्पनाप्रसक्तिः । कुरुपाण्डवानां प्रथमाध्याये श्रुतत्वेन अध्यात्मस्याश्रुतत्वेन च प्रसिद्धेः । मैवं । ''एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते'' इति तात्पर्य-निर्णयोदाहृतव्यासोक्तेः । ''द्रोणाद्या इंद्रियाण्येव पापान्यन्ये तु सैनिकाः । पाण्डवेयाश्च पुण्यानि तेषां विष्णुर्नियोजक'' इति च । स्यादे-

तत् । यद्ययमध्यायो गीतान्तर्भूतः, स एव नास्ति । यतो गीतोपक्रमः "अशोच्यानन्वशोचस्त्व"मित्येतस्माच्छ्लोकादेव । तत एव भाष्यारम्भाच्च । "कैगैरैशब्द इति धातोः" "गीतं शब्दितगानयो" रिति हैमाच्च । गीतशब्दार्थस्य पूर्वाध्याये अभावः, नह्यौपदेशिकोऽत्र भगवदुक्तिः । तस्माद्गीताप्रथमाध्यायविपंचनमित्युक्तमयुक्तं स्यादिति ॥ अत्रोच्यते ॥ सत्यं तथापि, इयं गीता कुत्र ? कदा ? केन निमित्तेन ? कं प्रति ? केन ? किमर्थं ? मुक्तेति आकांक्षापूरणस्याप्यावश्यकत्वात् । तस्य चाशोच्यानन्वशोचस्त्वमित्याद्युत्तरग्रन्थेऽभावात् । अत्र धर्मक्षेत्रे कुरुक्षेत्रइत्यनेन देशस्य, प्रवृत्ते शस्त्रसम्पाते इत्यादिना कालस्य, दृष्ट्वेमं स्वजनं कृष्णेत्यादिना, निमितस्य, एवमुक्त्वार्जुनः सङ्ख्ये, इत्यादिना श्रोतुः, उवाच मधुसूदनइत्यादिना वक्तुः, अनार्यजुष्टमित्यादिना दोषनिरासरूपप्रयोजनस्य सत्वात् । अस्य ग्रंथस्यैवाकांक्षापूरकत्वसिध्या नानन्तर्भूतत्वमिति सिद्धम् ॥ अतो न कोपि क्षुद्रशंकावकाशः । अथ सर्वज्ञो भगवान् वेदव्यासः स्वकृतभारतस्य महत्वेन मन्दैर्बोद्धुमशक्यत्वात्तदर्थमपि तत्सारभूतार्थप्रतिपादकां गीतामुपनिबध्नन् अत्राधिकारिणं सूचयितुं प्रष्टारमाह ॥ धृतराष्ट्र-इति ॥ धृतो-अवधृतो राष्ट्रः-सांसारिकोपद्रवो येन सतथा मुमुक्षुरित्यर्थः ॥ "राष्ट्रो स्त्री विषये च स्यादुपद्रव"इत्यमरः ॥ उवाच- ॥ गुरुं पप्रच्छेत्यर्थः ॥ धर्मक्षेत्रइति ॥ अध्यात्मार्थे- ॥"धारणाद्धर्मइत्यपी"त्युक्तेः । मक्प्रत्ययांन्तात्."धृञ धारणे"इति धातोश्च । धर्मो-विष्णुः, तस्य क्षेत्रं-निवासस्थानं, तस्मिन्, "क्षिनिवासगत्यो" रित्यतष्टन् ॥ कुरुक्षेत्रे । कुरुशब्दः कर्मवाची "डुकृञ् करणे" इति धातोः, निरुक्तिबलादुभयत्रोकारः । "वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ॥ धातोस्तदार्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्त" मिति । "करोस्मिन्नीयतइति कर्मजीवउदाहृत" इत्यत्र करइति शब्दःकर्मविधिवाचीति गीताविवृत्युक्तेश्च, ॥ तस्य क्षेत्रं उत्पत्तिस्थानं नृशरीरमित्यर्थः । तत्रैव स्वर्गादिसाधनकर्मोद्भवात् ॥ तत्र-समवेताः अधिकारित्वेन मिलिताः, संवासेन अवगता इति-वा । युयुत्सवः-स्वस्वोत्कर्षसिध्यर्थं मिथो योद्धुमिच्छवः ॥ मामकाः, मया-ज्ञानेन, अमाः- अपक्वाःज्ञानरहिताइत्यर्थः ॥ यद्वा ॥ मया-रमाभिमन्यमानया प्रकृत्या, न मान्ति-न जानन्ति, ते । अथवा मया-श्रिया युक्तः अः-वासुदेवः माः । "मः शिवे मा रमायां च" तिविश्वः ।

"अकारो वासुदेवःस्यादि" त्येकाक्षरश्च । तं न मांति-न जानन्ति ॥ "माङ्मान" इति हि धातुः ॥ उतवा । मा-नास्ति मः-ज्ञानं येषान्ते । "अमानोनाः प्रतिषेध" इत्युक्तेः सर्वत्र स्वार्थे कः । "बंधने मः प्रकीर्तित" इत्यभिधानात् । मा-नास्ति, अमः-अबन्धः, कं-सुखं च येषान्तइति वा, । अज्ञाः-तत्वाभिमानिनोऽसुराः । पाण्डवाः पाति-रक्षतीति, पो-विष्णुः, तस्य अण्डं,तदधीनब्रह्माण्डमिति-यावत्, तत् वान्ति-जानन्ति. ते, "वागतिगन्धनयो" रिति धातोः । गत्यर्थानां ज्ञानार्थत्वाच्च ॥ यद्वा. "पडिगता" वित्यतः, पण्डा-ज्ञानम्, तद्विषयो विष्णुःपाण्डः, तस्माद्वं-सुखं. येषांते तत्वाभिमानिनोदेवाश्च किं कर्म, अकुर्वत ॥ सञ्जय । संम्यग्जयति, संसारमिति सञ्जयः ॥ यद्वा । सम्यक्अप्राकृतशरीरेण, जायते-अवतरतीति, संज्ञो-विष्णुःतं याति-जानाति, शरणं प्राप्नोतीति वा सञ्जयः । तत्सम्बुद्धौ सञ्जयेति सद्गुरुसम्बुद्धिः ॥ इत्यध्यात्मार्थे. ॥ अंशार्थे तु- ॥ हे अत्रे स्वप्नसुषुप्तिमूर्च्छारहित, देवयोनित्वात्, हे सञ्जय-हे तुम्बरो गन्धर्व, "संजयस्तुम्बरुर्नामा गन्धर्वपतिरुच्यते" इत्यंशावतरणे, तं प्रति धृतराष्ट्रनामा गन्धर्वः पृच्छतीत्यर्थः ॥ "धृतराष्ट्रः पुरा प्रोक्तोगन्धर्वस्तु सनामकः" ॥ पाण्डवाः-पुण्याभिमानिनोदेवाः । "पाण्डवेयानि पुण्यानि" इति तात्पर्यनिर्णयोक्तेः ॥ धर्मक्षेत्रे-धर्मपक्षे( भूमौ ) स्थिता इति शेषः ॥ मामकाः-धार्तराष्ट्राः पापाभिमानिनोऽसुराः "सर्वदोषात्मकाःपरे । धार्तराष्ट्राः," इति-चोक्तेः, धृतराष्ट्रस्य कल्याविष्टत्वात्, असुरेषु 'मामका' इत्युक्तिः । तच्च तात्पर्यनिर्णये प्रसिद्धमेव । ते कुरुक्षे-कुत्सिते रुक्षे-स्नेह-रहिते च स्थाने ( पक्षे ) स्थिताः ॥ असमवेताःअसमं-अधिकं न्यूनं, यद्वं-ज्ञानं बलं वा, तेन इताः-युक्ताः ॥ युयुत्सवः-स्वाभाविकद्वेषात् योद्धुमिच्छवः सन्तः । किं-सदसद्वा कर्म । अकुर्वत-चक्रुः । इत्यंशार्थे ॥ प्रसिद्धार्थे ॥ मामकाः-मत्पुत्रादुर्योधनादयः । पाण्डवाः-युधिष्ठिरादयः । कुरुक्षेत्रे-कुरुवंशोत्पन्नत्वात् कुरुसंज्ञयोः विचित्रवीर्यपाण्ड्वोः, क्षेत्रे-अम्बिकाअम्बालिकाख्ये, कुंतीमाद्र्याख्ये च भार्यारूपे । समवेताः-समं-समानं, वं गतिरूपं जन्म इताः-प्राप्ताएव । क्षेत्रजौरसयोः कथंचित् कलहो भवतु, समजन्मनोस्तु कथं युद्धेच्छेत्याशयवानाह । धर्मक्षेत्रइति । धर्मेण क्षायाः-भूम्याः इ-विचित्रं तं-त्राणं-रक्षणं यस्मिंस्तस्मिन् राज्यविषये । किं-कथं । युयुत्सवः-योद्धु-

मिच्छवः आसान्निति शेषः । तथापि मामकाः किमकुर्वत, पाण्डवाश्च किमकुर्वतेति प्रश्न; । धर्मेण क्रियमाणे भूत्राणे के धर्म के चाधर्ममकुर्वतेति भावः । पुनरप्यध्यात्मार्थे । मामकाः "मः शिवे मा रमायां चे,, ति विश्वात्, मः-शिवः तं आ—आत्मत्वेन माति-जानातीति मामः-संकरः, शिवोहमिति वक्तृत्वात्, तस्य शिष्या मामकाः-मायावादिन इत्यर्थः । कप्रत्ययः कुत्सने । पाण्डवाः पाण्डुः-शक्लवर्णत्वाद्वायुः, "उद्यद्राविप्रकरसान्निभ" ।मित्युक्तेः, ज्ञानशीलत्वाद्वा, " पडिगताविति धातो " गत्यर्थानां च ज्ञानार्थत्वात्, "ताच्छील्यार्थादुनस्तथे" त्युक्तत्वाच्च, तदीयाशिष्याः पाण्डवाः-वैष्णवाइत्यर्थः । धर्मक्षेत्रे "धर्मोधर्मविदुत्तमः" इत्युक्तेर्धर्मोविष्णुः क्षेत्रे-क्षीयते-ज्ञायते अनेनेति "क्षि निवासगत्यो" गत्यर्थानां च ज्ञानार्थत्वात्, 'ततष्टन्' विष्णुप्रतिपादिकेत्यर्थः । अकुरुक्षेत्रे-अकु-अकुत्सितं-निर्दोषमित्यर्थः, "रुशद्ब" इति धातोः, शद्बक्षेत्रं-शब्दस्थानं-वेदइत्यर्थः, "निर्दोषःशद्बआगम" इत्युक्तेः, वेदे भगवदेकप्रतिपादके सतीति भावः । पाण्डवविशेषणपक्षे, असमवेताइति पदं, न समाः-विषमाः यस्मिन्स्तत्. असमं-तारतम्योपेतमित्यर्थः, तादृशं यद्वं-ज्ञानं. तेन युता-युक्ताइति ॥ यद्वा । "नास्ति नारायणसम" मित्युक्तेः, असमोः-विष्णुः, तस्य वं-ज्ञानं, तेन, युता-युक्ताः ॥ अथवा । "समभेदे समीचीन" इत्युक्तेः, सं-अभेदः, तद्विरुद्धः असम्भेदः, तं भेदं, अवेताः-अवगताः-जानन्तः, अवेतं-अवगतं ज्ञानं-येषामस्तीत्यर्शआद्यच्, भेदमुद्दिश्य ज्ञानवन्तइत्यर्थः । समवेताइति पदेपि. समस्य-निर्दोषब्रह्मणः "निर्दोषं हि समं ब्रह्म" त्युक्तेः, लक्ष्मीयुक्तस्य वा वं-ज्ञानं तेनेता-युक्ताइति वा ॥ मामकविशेषणपक्षे, समवेताइति, "समं सर्वं समानं इति यद्वं-ज्ञानं तेनेताः-युक्ताः । अथवा सं-अभेदं अवेताः-जानन्तः, । स-समानः, मः-महादेवः, वः-वासुदेवश्च यस्मिन्, तेन ज्ञानेनेताः-युक्ताः इति वा । समं-यथायोग्यं, वं-ज्ञानं, इतं-गतं, येभ्यस्तइति वा । अत्राप्यकारप्रश्लेषे असमः-सर्वोत्तमोविष्णुरिति यद्वं-ज्ञानं तत् इतं-गतं येभ्यइति वा । एवं सन्तः युयुत्सवः-वाग्युद्धं कर्तुमिच्छवः किं-कथं वादमकुर्वत । अथवा, अकुरुक्षेत्रे-वेदे आधिकरणे । धर्मक्षेत्रे. धर्माः-ज्ञानानन्दजगत्कर्तृत्वादयः तेषां क्षेत्रे-पात्रभूते भगवति विषये । मामकाः-असमवेताः-नञर्थकाकारेण समवेताः-ज्ञातारः निर्धर्मकं भगवतं जानन्तइत्यर्थः । पाण्डवाः समवेताः सं-अभे-

देन अवेताः-जानन्तः; भगवता तद्धर्माणां चाभेदं जानन्तइत्यर्थः । असमवेतशब्दस्योभयविशेषणत्वे विषमज्ञानवन्तइत्यर्थः । अथवा-अकुरुक्षेत्रे अकुः-अकुत्सिता, निर्दोषेति यावत् या रुक्-प्रभा तस्याःक्षेत्रे-स्थानभूते, धर्मक्षेत्रे, धर्मविधित्वेन वेदोक्तः"वेदप्रणिहितोधर्म" इत्युक्तेः, क्षा-भूर्देवी'क्षा'शब्दस्य वैदिकनिघन्टौ पृथिवीनामसु पाठात्, ई-लक्ष्मीः"लक्ष्मीरीकारउच्यते" इत्येकाक्षरकोशात्, एतत्रितयं त्राति-रक्षतीति, धर्मक्षेत्रः-विष्णुः, तद्विषये युयुत्सवः-द्वेषिणः, मामकाः समवेताः-मिलिताःभक्तिमन्तःपाण्डवा इत्यर्थः ॥ यद्वा-धर्मक्षेत्रे, अकुरुक्षेत्रे, समवे, तायुयुत्, सवः, मामकाः, पाण्डवाः, च, एव, किं, अकुः, बत, सञ्जय, इति पदानि । धर्मक्षेत्रे-धर्मज्ञानसाधने धर्मशास्त्रइत्यर्थः । अकुरुक्षेत्रे-कुत्सितं-दीनमितियावत्, रुवन्ति-शब्दं कुर्वन्ति ते कुरवः-पशवः, तेषां क्षेत्रं-क्षयः"क्षीक्षय"इतिधातो"ष्ट्रन्" अकुरुक्षेत्रं न पशुक्षयो यस्मिंतस्मिंश्च सति । समवे च सति सम्यगुक्तं अवः-अन्नं यस्मिंस्तस्मिंश्च सति"अवः" शब्दस्य वैदिकनिघंटौ अन्ननामसु पाठात्, अत्रासुन्लोपो गयाशिरइतिवत्, उक्तपिष्टपशुके इति यावत् । तायुयुत्"तकारःकीर्तितश्चोरे मोहे युद्धे च कीर्तित" इत्याभिधानात्, तेन मोहेन आ-अद्धा, युयुत्-प्राणवियोगोयस्मिन्सतथा"युयुवियोग"इति धातोःप्रकरणयोग्यतया प्राणेन सम्बन्धः, तादृशः सवो-यज्ञःअकुः-निन्दारहितः किं न? अपि तु निन्दितएव । बत-खेदे, पाण्डवाः वेदाधिकारिणोपि मामकाःअज्ञानिन एव । एवं सति-कौरवाः पाण्डवाश्च विहितहिंसायाअपि निषेधं किमर्थं मिथो हिंसां चक्रुरिति प्रश्नाभिप्रायः ॥ अथवा धृतराष्ट्रः सञ्जयं प्रति युद्धार्थकल्पिता कुरुक्षेत्ररूपा भूमिर्मत्पुत्राणामश्रेयसीत्याशयेनाह ॥ धर्मेति ॥ पाण्डवाः"सप्तसुप्रथमे" ति सूत्रात्प्रथमायास्तृतीयार्थत्वेन, पाण्डवैः युयुत्सवः प्रकरणान्मत्पुत्राइति ग्राह्यम् । कुरुक्षेत्रे धर्मक्षेत्रे सति, धर्मस्य-युधिष्ठिरापितुः क्षेत्रे तदधीनस्थाने इत्यर्थः । तत्र किं समवेताः-कथं मिलिताः, शत्रुपक्षपातिस्थले स्थितानां जयस्य दुर्लभत्वादिति भावः । तत्स्थलगमनं न मत्पुत्रकृतं किंतु देवकृतमित्याह । मामकाइति । मामकाएव, मा-लक्ष्मीः "इंन्दिरा लोकमाता मे" त्यमरः अः-विष्णुः "अकारः सर्ववागात्मा परब्रह्माभिधायक" इत्युक्तेः मः-शिवः "मः शिवेमा रमायां चे"ति विश्वोक्तेः, को-ब्रह्मा, "हिरण्यगर्भः कः प्रोक्त"इत्युक्तेः एते देवाएव । इदमिति शेषः, धर्मक्षेत्रप्रापणमित्यर्थः, अकुर्वत-

चक्रुः, देवकृतातिक्रमणं दुष्करमित्याशयः । यद्वा, पाण्डवाः, असमवे-सम्यक् अवतिः रक्षतीति समवः अः-वासुदेवः समवो-रक्षकः यस्मिंस्तस्मिन्धर्मक्षेत्रे, स्वपितृस्थले किं अताः-कथंसततं गताः "अतसातत्यगमने" इति हि धातुः,मामकाश्च-मत्पुत्रास्तु अत्रे-रक्षकरहिते, कुरुक्षेत्राख्यस्थले "क्षः क्षत्रे राक्षसे स्थले" इति वररुचिकोशात् । किं अताः, वत-वबयोरभेदात् बत-अयं खेदइत्यर्थः । अकुः न कुत्सितः-योग्यएव । स्वपुत्राणां नाशोन्मुखत्वाच्छत्रूणां च जयोन्मुखत्वादिति भावः ॥ यद्वा । मामकाः-दुर्योधनादयः, समवे-स्वभर्तृसमाने, वं-गतिः-प्रवृत्तिर्यस्य तादृशे-बद्धनेतृत्वादिति भावः । धर्मक्षेत्रे-गान्धार्याख्यधर्मपत्न्यां जाताअपीति शेषः । ताएव-चोराएव "तकारः कीर्तितश्चोरे" इत्येकाक्षरः । पाण्डवास्तु कुरुक्षेत्रे-कुरुवंशोत्पन्नत्वात्कुरुशब्दवाच्यपाण्डोः क्षेत्रे-कुन्त्यां माद्र्यां च जाताः-क्षेत्रप्रसूताः नत्वौरसाः, तथापि अताः-अचोराएव किं? एतच्चकाराल्लभ्यते । अत्र सवः-विष्णुः "एकोनैकः सवः कः कि" मिति विष्णुसहस्रनामसूक्तेः । युयुत्-युयोतीति सतथा । "आधिक्येऽधिक" मिति सूत्रात्, "यु मिश्रण" इति धातोश्च. अस्मत्कुले तेषामाधिक्येन मिश्रयितेत्यर्थः । शेषं पूर्ववत् । अपि वा, सएव-विष्णुरेव. अकुः स्वयं निराश्रयः, धर्मक्षेत्रे-धर्मसाधनभूतदेहे, समवेता-योजकः, युयुत्-वियोजकश्च,"युयुवियोग" इति धातोः । एवं सति मामकाः-मत्पुत्राः, पाण्डवाश्च, । उक्षेत्रे- "उकारःशंकरःप्रोक्त"इत्येकाक्षरात्, उवाच्यशंकरस्य क्षेत्रे-अभिमन्यमानाहंममतारूपे, इदं द्वितीयाद्विवचनांतं कर्म । किमकुर्वत-कथं चक्रुः, उत वा, धृतराष्ट्रः स्वपुत्रनाशं निश्चित्यवैपुत्र्याभावमाकांक्षन् स्वस्माद्वैश्यायामुत्पन्नस्य युयुत्सुनाम्नः पुत्रस्यायुष्मत्तायै धर्ममुपदिशन् आशिषं विधत्ते ॥ धर्मेति ॥ एतत्पक्षे पदानि-धर्मक्षेत्रे कुरुक्षेत्रे समवेता-युयुत्सो-अः-मामकाः-पाण्डवाः-च-एव-किं-अकरु-अत-संजय-इति । हे युयुत्सो त्वं पाण्डवाः मामकाः किमेव एवं संशयं अकरु-मा कुरु । अत-सततं गच्छ, तानिति शेषः सं-सुखं च"सममेदे समीचीने सुष्टु पूजासुखेषु" चेति यादवः, जयस्वाधिनं कुरु-प्राप्नुहीति यावत् धर्मं क्षेत्रं चेत्युभयं कुरु । अः-वासुदेवः, क्षेत्रे-अस्मिंस्त्वदीये शरीरे "इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते" इत्यत्रैव वक्ष्यमाणत्वात् । समवेता-सम्बन्धकर्ता अस्त्विति शेषः । देहसन्बन्धस्यैव जीवनरूपत्वादिति भावः । किं वा । हे



सञ्जय मामकाः-मत्पुत्राः, धर्मक्षेत्रे-धर्मभार्यायां-द्रौपद्यां, किंच-किमपि अनिर्वाच्यमित्यर्थः । आगइति शेषः । अकुर्वत-चक्रुः, येन पाण्डवाः कुरुक्षेत्रे समवेताः सन्तः युयुत्सवः आसन्निति शेषः, तस्यैवेदं फलमिति भावः ॥ यद्वा-धृतराष्ट्रोनिर्विण्णः सन् स्वपुत्रसांसर्गिकदोषात्स्वात्मरक्षणं भगवते प्रार्थयति ॥ धर्मेति ॥ धर्मक्षेत्रे-कुरुक्षेत्रे-सं-अवे-अयुयुत्सवः-मा-आमकाः-पाण्डवाः-च-एव-किं-अकु-र्वत-सञ्जय-इति पदानि. हे सञ्जय, आमकाः-आमाः-गर्भे अपक्काः, दुर्योधनादयः "स्वार्थे कः" धर्मक्षेत्रे धर्मश्च क्षेत्रं चेति द्वे, धर्मोनाम विष्णुप्रियं कर्म, क्षेत्रं नाम ज्ञानं"क्षि निवासगत्यो" रिति धातोः, गत्यर्थानां च ज्ञानार्थत्वात्, अकुर्वत किं? 'किमाक्षेपे, नाकुर्वतेत्यर्थः । पाण्डवा-एव कुरुक्षेत्रे-कुरु-कर्म, क्षेत्रं-ज्ञानंचेति द्वे सं-सम्यक् अकुर्वत्अतस्तानिति शेषः, सञ्जय-"अत्रअन्तर्णिच" सम्यग्जयं प्रापयेत्यर्थः । एतत्पक्षे अयुयुत्सेति पृथकपदं कृष्णसम्बोधनार्थे । न युयुत्सा-युद्धेच्छा यस्येति विग्रहः । सञ्जयेति सम्बोधनपक्षे अयुयुत्सुश्चासौ वश्चेति व्युत्पत्या एकमेव पदं"नामैकदेशग्रहणान्नामग्रहण" मिति न्यायेन वः-वासुदेवइत्यर्थः, ज्ञानरूपत्वाद्वा, मेति मां, अवेत्-रक्षेत्, अत्रात्मनेपदमार्षं । यद्वा-हे अयुयुत्सवः-युद्धेच्छारहिताः-व्यासकृष्णसञ्जयाः यूयं मा-मां-अवेत-रक्षेत् मध्यमपुरुषोलिङबहुवचनम् । केवलं परोपकारायेत्याकांक्षया परस्मैपदप्रयोगः, दुष्पुत्रसंसर्गजपातकादिति शेषः ॥ अध्यात्मार्थे ॥ यद्वा-मामकाः-मं-शिवं माति-स्वात्मत्वेन जानातीति ममः-सङ्करः-कप्रत्ययः-कुत्सने,तदीयशिष्यामामकाः-मायावादिनइत्यर्थः । पाण्डवाः-ज्ञानशीलत्वाच्छुक्लवर्णत्वाद्वा वायुः तच्छिष्याः-पाण्डवाः—वैष्णवाइत्यर्थः "पडिगताविति"धातोः, "ताच्छील्यार्थादुनस्तथे"त्युक्तेश्च । उक्षेत्रे-उः-रुद्राभिमन्यमानोऽहंकारः, क्षीयते—विनश्यति-अनेनेति तादृशे । धर्मक्षेत्रे, धर्मः विधिरूपेण वसत्यस्मिन्निति धर्मक्षेत्रं--वेदः "वेदप्रणिहितोधर्म" इत्युक्तेः । 'अथवा धर्मो—विष्णुः "वीरः शक्तिमतां श्रेष्ठो धर्मोधर्मविदुत्तम इति विष्णुसहस्रनामसूक्तेः, क्षीयते—ज्ञायते, अनेनेति विष्णुसर्वोत्तमत्वज्ञानसाधनरूपोवेदस्तस्मिन्, असमवेताः-असमं-विषमं यद्वं-ज्ञानं तेन इताः-युक्ताः, सन्तः, कुः प्रथमायाः सप्तम्यर्थकत्वात् कौ-भुवीत्यर्थः, युयुत्सवः वाग्युद्धं कर्तुमिच्छवः, किं-कथनं वादं जल्पं वितण्डं वा "वादोजल्पवितण्डेति त्रिविधा विदुषांकथे"त्युक्तेः, अकुर्वत-चक्रुः

एतत्प्रश्नोत्तरं तु शंखवादनकाले ज्ञेयं ॥ एवं पुनरनेकार्थसंग्रहवत्यपि व्यासवाक्ये स्वबुद्धिमान्द्याद्ग्रन्थविस्तरभयाच्चोपरम्यते ॥ १ ॥
रा. वि. धृतराष्ट्रप्रश्नस्य संजय उत्तरमुक्तवानित्याह वैशम्पायनो जनमेजयं प्रति। सञ्जय उवाचेत्यादि नवभिः श्लोकैः। दुर्योधनकृतव्यापार-माह। दृष्ट्वेत्यादिना। दुर्योधनस्तु राजा तदा युद्धार्थं मिलितसमये व्यूहं-व्यूहात्मना रचितं पाण्डवसैन्यं दृष्ट्वा तु दृष्ट्वैवेति वा तोरन्वयः। द्रोणाचार्यसमीपमागत्य वचनमुवाच ॥ २ ॥ त्रि. वि. सञ्जयः सद्गुरुस्तुम्बरुर्वा, गावल्गणिर्वा, ॥ असुरादिपक्षीयदोषमाविष्कुर्वन्नाह दृष्टवेति अध्यात्मार्थे ॥ तदा-उभयसंमेलनानन्तरकाले, दुर्योधनः-स्वभावदुष्टान् योधान् नयति-प्रवर्तयति सतथा, अतएव राजा-महापाप्मा, पाण्डवा-नीकं-देवसैन्यं तु-विशेषेण"तुविशेषे"इत्युक्तेः,व्यूढं-वौ-विष्णौ ऊढं आश्रितं"विः पक्षिपरमात्मनौ"रित्यभिधानम्। दृष्ट्वा असहमानः सन्निति

**संञ्जय उवाच। दृष्ट्वा तु पाडवानीकं व्यूढं दुर्योधनस्तदा। आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥२॥**
**पश्यैतां पांडुपुत्राणामाचार्य महतीं चमूं। व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

शेषः, अवचनं-प्रत्युत्तरमदातारं, आचार्यं-रुद्रं "त्वं च रुद्र महाबाहो मोहशास्त्राणि कारये" त्युक्त्या तदधिकारकशास्त्रकर्तृत्वात, उप-संगम्य-समीपं गत्वा अब्रवीत,॥ यद्वा-राज्ञोवक्तुमयोग्यमभिप्रायमब्रवीत्॥ अंशार्थे ॥ दुर्योधनः-कलिः "दुर्योधनः कलिर्ब्रह्मवाय्वोरावेशयु-क्तसदे"त्युक्तेः। आचार्यं-अन्यथाज्ञानित्वेन शुक्रबुध्या बृहस्पतिं ॥ प्रसिद्धार्थे ॥ दुर्योधनः-ज्येष्ठधार्तराष्ट्रः आचार्यं-द्रोणं ॥ २ ॥
रा. वि. तद्वचनमेवानुवदति संजयः। पश्यैतामित्यादिना। हे आचार्य तव शिष्येण धीमता धृष्टद्युम्नेन व्यूढां पाण्डुपुत्राणां एतां महतीं चमूं सेना पश्य ॥ ३ ॥ त्रि. वि. ॥ वचनमेवाह पश्येति ॥ अध्यात्मार्थे ॥ हे आचार्य-रुद्र! शुक्र! द्रोण! वा एतां अंगुलिनिर्देश्यां पाण्डुपुत्राणां"समाने लोप"इति सूत्रेण-पाण्डवाणामिति स्थिते-पाण्डुः-विष्णुः"पडि गतौ""मृगय्वादित्वाकुः पृषोदरादित्वा"द्दीर्घः-तस्य पुत्रो-वायुस्तस्मात्राणं-

रक्षणं यस्यास्तां. अतएव महतीं-पूज्यां. धीमता-बुद्धिमता. तव उत्पादितत्वात्पुत्रेण, शिक्षितत्वाच्छिष्येण च स्कंदेन व्यूढां-कृतव्यूहरचनां-चमूं पश्य हे द्रुपद द्रुः-वटवृक्षः पदं-स्थानं यस्यसतथा रुद्रस्य वटाधःस्थितिः प्रसिद्धैव ॥ यद्वा-द्रु-दारु, पदं-स्थानं यस्य तस्याग्नेःपुत्रेण स्कंदेन"सेनानीरग्निभूर्गुह"इति कोशात् ॥ अंशार्थे ॥ ॥ हे आचार्य-शुक्र? पाण्डुपुत्राणां-पुण्याभिमानिना देवानां"पाण्डवेयानि पुण्यानि" इति वचनात्, द्रुपदपुत्रेण-द्रुतं पदानि-सुप्तिङन्तानि तदुपलक्षितवाक्यानि च, यस्मात्सशीघ्रवक्ता गुरुरित्यर्थः, तत्पुत्रेण-कचेन तव शिष्येण सञ्जीवनीविद्यादानात्, व्यूढां-सर्वेषु प्राणिषु ऊढः-मृत्युः प्रसिद्धः विगतः ऊढोमृत्युर्यस्यास्तां ॥प्रसिद्धार्थे॥ ॥हे आचार्य-द्रोण पाण्डु-पुत्राणां-युधिष्ठिरादीनां चमूं पश्य। ननु दृष्टैव पुनर्दर्शने कोविशेषोऽत आह॥महतीमिति॥तव एकादशाक्षौहिण्यपेक्षया तत्सप्ताक्षौहिणीभिर्म-हत्वं कथमित्यतः॥द्रुपदपुत्रेण व्यूढामिति॥उभयसाधारणेन भीष्मेण व्यूढाया अधिकाया अपि सकाशात्त्वत्कृतपितृपराभवत्वं, अस्मत्कृतभ-

## अत्र शूरा महेष्वासा भीमार्जुनसमा युधि । युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

गिनीक्लेशादिकं चासहिष्णुना धृष्टद्युम्नेन व्यूढत्वान्महत्वमिति भावः। ननु व्यूहरचनायां धृष्टद्युम्नस्य भीष्मसादृश्यं कथं भवेदित्यत उक्तं॥तव शिष्येणेति॥ त्वच्छिक्षयाऽऽधिक्यं भवेत्किमु सादृश्यमिति भावः। तवापि मच्छिक्षैवातस्तस्यैवाधिक्यं, कुतइत्यत उक्तं ॥धीमतेति॥ शिक्षाग्रहणे न-तादृशी मद्बुद्धिरिति भावः। अतोविशेषसद्भावेन पुनःपश्येति विज्ञापयामीत्याशयः ॥ ३ ॥ रा० वि० अत्र-सेनायां महेष्वासाः-महाधनुष्काः युधि भीमार्जुनसमाः शूराः सन्ति। ते के इत्यत आह। युयुधानइत्यादिना। महारथइति प्रत्येकमन्वेति ॥ ४ ॥ त्रि०वि० ॥ तेषां विशेषान्तरमाह ॥ अत्रेति ॥ ॥ अध्यात्मार्थे-अत्र-अस्यां चम्वां युधि-सम्प्रहारविषये शूराः-विक्रमिणः, भीमार्जुनसमाः भृताः-पूर्णाः, माः-ज्ञानोपलक्षितबलादीनि यस्य स भीमः "भृतमोभीम" इत्युक्तेः सवायुरित्यर्थः "वायुर्भीम"इत्युक्तेः, अर्ज्यते पार-मेष्ठ्यं पदमनेनेति अर्जुनो-ब्रह्मा, "अर्जअर्जने" 'अर्जे अर्जिणि लुकेत्यनत्र' "अल्पाच्तरं पूर्व"मिति सूत्रात्, भीमशब्दस्यादौ निपातः,

तावुभौ, समौ-महदभिमानित्वेन समानयोग्यतावन्तौ येषु ते । महेष्वासाः-इषुः-ज्ञानं "इषगतिहिंसादर्शनेषु" गत्यर्थानां च ज्ञानार्थत्वात्, "इषःकिषेत्युः" तस्मिन् आसा-निष्ठा, इष्वासा, महती-पूर्णा महेष्वासा येषान्ते, सन्तीति शेषः । विक्रामिणो देवानेवाह । युयुधानइति "युयुवियोग"इति धातोः, विविक्तधानाकारचिन्हवान् शेषः, गोधूमाकृतिचिन्हानां नागे प्रसिद्धेः । विराटः-विशिष्टं-सर्वोत्कृष्टं, रमणं-सुखं यस्य तं विष्णुं अटयति-गमयति वाहयतीतियावत्, सगरुडइत्यर्थः । द्रुपदो-रुद्रः, उभयसमुच्चये च शब्दौ, एते त्रयः अहंकारतत्वाभिमानिनः । अतएव' महारथा ' इत्युक्तं, महत्-महत्तत्वं, रथः-कारणत्वेन गतिर्यस्य सोऽहंकारः "रथगता"विति धातोः । अभिमान्यभिमन्यमानयोरैक्यव्यपदेशादिति भावः । एकवचनं तु पार्थक्येन योज्यं ॥ ॥ अंशार्थे ॥ भीमार्जुनौ-वाय्विन्द्रौ "भीमसेनः पुरा वायु"रित्युक्तेः "अर्जुनः पूर्वमेवेन्द्र" इति चोक्तेः, समत्वकथनं तु अन्यथाज्ञानित्वात् । युयुधानः-कृष्णपक्षाभिमानी देवः "कृष्ण-

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् । पुरुजित्कुंतिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥ युधामन्युश्च विक्रांत उत्तमोजाश्च वीर्यवान् । सौभद्रो द्रौपदेयाश्च सर्वएव महारथाः ॥ ६ ॥ ॥ ॥**

पक्षो युयुधानाभिधेय" इत्युक्तेः, विराटः-हाहानामा ब्रह्मगायको गन्धर्वः, "विराटस्तु हाहानामा गायको ब्रह्मणः पुरा" इत्युक्तेः । द्रुपदो-हूहूगन्धर्वः "द्रुपदस्तु पुरा प्रोक्तः स हूहूर्नाम गायकइत्युक्तेः ॥ ॥ प्रसिद्धार्थे ॥ युयुधानः-सात्यकिः, तेषामेव महारथत्व-कथनं तु स्वपक्षीयवचोब्रुवाणस्य रामस्य कृष्णसमक्षमपि सात्यकिना निराकरणात् । विराटोत्तरगोग्रहणे पराजितत्वात् । गुरुदक्षिणादान-काले द्रुपदेनापि पराजितत्वादिति बोध्यं ॥ ४ ॥ रा० वि० वीर्यवानिति विशेषणं । नरपुंगवो नरश्रेष्ठइत्यपि त्रयाणां विशेषणम् ॥५॥ महारथत्वं नाम " एको दशसहस्राणां योधयेद्यः स धन्विनां । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृत" इत्युक्तरूपं । विक्रान्तः-पराक्रमवान् । सौभद्रः-अभिमन्युः । द्रौपदेयाः-द्रौपदीपुत्राः ॥ ६ ॥ त्रि० वि० शेषानप्याह ॥ धृष्टकेतुरिति ॥ ॥ अध्यात्मार्थे । धृष्टं-यक्षरूपं



ब्रह्म, प्रश्नार्थमग्न्यादेरागमनेऽपि तत्प्रश्नात्पूर्वं स्वयमेव प्रश्नकरणे निर्भयत्वात्, तस्य केतुः-ज्ञानं प्रथमं यस्य स धृष्टकेतुः-इन्द्रइत्यर्थः "केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माये" त्यभिधानमिति गीताभाष्ये "इन्द्रस्तु प्रथमं ब्रह्म व्यजानात्तेन तूत्तम"इति ब्रह्मसारोक्तेः । चेकितानः-चकंते ते चेकिनः "चकदीप्ताविति"धातोः "पृषोदरादित्वा"द्गुणः बर्हाइत्यर्थः तेषां तानो-विस्तारोयस्य स चेकितानो-मयूरः सोस्य वाहनत्वेनास्तीति "अर्शआद्यच्"-स्कन्दइत्यर्थः "विशाखः शिखिवाहन"इत्युक्तेः, इमौ द्वौ मनस्तत्वाभिमानिनावित्याशयः । काशीराजः-काश्यंते सर्वत्रेति काश्यः-दिशः, विभुत्वात्तासां राजः-स्वामिनः-दिग्देवाः, इमे श्रोत्राभिमानिनइत्यर्थः । वीर्यवान्-"अंतर्णीतण्यर्थात्" "वीगता" विति धातोर्गत्यर्थानांच ज्ञानार्थत्वात्, वीः-स्पर्शज्ञापकः यवान्-यवीजाभिमानी प्राणः अयं त्वगभिमानीत्यर्थः । पुरु-पूर्णतमः जयतीति पुरुजित्-सूर्यः चक्षुरभिमानीत्यर्थः । कुंतिभोजः-कुं-भूमिगुणं-गन्धं तनोति-विस्तारयतीति कुन्ति-अन्नादि, तद्भोजयति-तद्रसं ज्ञापयतीति यावत्, सवरुणः-जिव्हाभिमानीत्यर्थः । शैब्यः-शवान्ति-गच्छन्ति-जानन्ति गन्धमनेनेति शिवि-घ्राणेन्द्रियं, 'बाहुलकादित्वं वयोरभेदश्च' तदभिमानित्वाच्छैब्यः-अश्विनौ,-जात्येकवचनम् घ्राणाभिमानिनावित्यर्थः । चनरपुंगवः, एतद्युधामन्योर्विशेषणम्, च-परं नरपुंगवोयस्येति । युधा-सम्प्रहारेण सहिताःमन्यवः-यागाःयस्मात् आग्नेयास्त्रेण युद्धसाधनत्वात्, हुताशनत्वेन यज्ञसाधनत्वाच, युधामन्युः-अग्निः-वागभिमानीत्यर्थः । नरपुंगवः-जीवश्रेष्ठः, तस्यैव दक्षत्वात् पाण्यभिमानित्वम् । विक्रान्तः-विक्रमवान्, तस्यैव जयविस्तारकत्वाज्जयन्तः-पादाभिमानी । उत्तमौजाः महासामर्थ्यवान्, तस्यैव मानत्राणकर्तृत्वान्मित्रः-पाय्वभिमानी । वीर्यवान्-वीर्यं-रेतः अधीनत्वेन अस्यास्तीति, सतथा मनुः, अतएवोपस्थाभिमानी । सौभद्रः-शोभनानि भद्राणि-मंगलानि यस्याःसकाशात्सर्वेषामिति, सर्वमंगलत्वात् सुभद्रा-पार्वती, तत्पुत्रःसौभद्रः-गणपतिः-आकाशाभिमानी-तदुपलक्षितमरीचिकादयः, वाय्वाद्यभिमानिनइत्यपि ग्राह्यं ॥ ननु सर्वेषां पार्थक्येन वचनादस्य वाय्वादिचतुष्टयस्य देवानामेवोपलक्ष्यत्वे किं निमित्तमिति न शंक्यं । त्वग्वाग्जिव्हादैवतत्वेन वायुतेजोऽब्देवानां प्राणाग्निवरुणानामुक्तत्वात्पृथिव्याश्च तन्नामदेवताकत्वादिति ध्येयम् ॥ द्रौपदेयाः-द्रुपदः-शिवइति पूर्वमुक्तः, तत्पुत्राद्रौपदेयाः-प्राणापानव्यानोदानसमानाः-पंच श-

ब्दादिविषयाभिमानिनः । "शब्दाद्याः पंच शिवजाः शब्दनात्स्पर्शनादपीत्यादि" गीतातात्पर्ये । सर्वे ब्रह्मवाय्वादयो महारथाः-महान्तः-अराः-दोषाः यस्मिंस्तस्मिन्महारं-शरीरं तस्मिन्नधिकृत्य, थः-स्थितिर्येषान्ते तथाविधाएव "तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ" इत्युक्तेः "ब्रह्मा तु पुरुषः स्मृतः । महांश्चाव्यक्तनाम्नी तु ब्रह्माणी सम्प्रकीर्तिता ॥ एवं वायुरपि ज्ञेयो भारती चैव तत्त्रयम् । रुद्रोऽहंकारउद्दिष्टःस्कन्देन्द्रौ मनउच्यते । अहंकारः शेषवीन्द्रावपि विद्वद्भिरीरितौ । दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि । वन्हिदक्षाविन्द्रसूनुर्मित्रश्चैव मनुस्तथा । इन्द्रियाख्याः शब्दनामा बृहस्पतिरुदाहृतः । अन्ये तु सूनवो वायोरुद्रस्यापि प्रकीर्तिता" इति तन्त्रसारे॥ ॥ अंशार्थे-धृष्टकेतुः-संवर्तोमरुत् "धृष्टकेतुः शैशुपालिः संवर्तोमरुदुच्यते" इत्युक्तेः । चेकितानः-प्रतिभाख्योमरुत् "चेकितानः पुरा प्रोक्तः प्रतिभोनाम वै मरुत्" इत्युक्तेः । काशीराजः-कश्चिद्देवः देवांशपक्षसाहाय्यकारित्वात् "ये पाण्डवानामभवन्सहाया देवाश्च देवानुचराः समस्ताः" इत्युक्तेः । पुरुजिदिति विशेषणं । कुन्तिभोजः-कूर्माख्यः प्राणः "भोजराजः कूर्मकाख्यमरुदंशयुतः सदे" त्युक्तेः । शैब्यः ऋभ्वा-

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम । नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥७॥**

ख्योदेवः "शैब्यस्तु ऋभुदेवते" त्युक्तेः । युधामन्युः- विश्वावसुगन्धर्वः "युधामन्युःपार्षतस्य ब्रह्मावेशयुतोबली । सुतोविश्वावसुर्नामा गन्धर्वः समुदाहृत" इत्युक्तेः । उत्तमौजाः-परावसुगन्धर्वः "उत्तमौजा यमावेशयुक्तश्चैव परावसु" रित्युक्तेः । सौभद्रः-बुधः "अभिमन्युर्बुधः पूर्व" मित्युक्तेः । द्रौपदेयाः-विश्वेदेवाः "पंच पार्थसुताः प्रोक्ताविश्वेदेवाः पुरातना" इत्युक्तेः । महारथाः-पूज्यरूपाः "मह-पूजायां" "शरीरं रथमेवचे" ति काठकश्रुतेः ॥ ॥ प्रसिद्धार्थे ॥ धृष्टकेतुः-शिशुपालसुतः, धर्मजशालकत्वादंतरंगः । चेकितानः-यादवः कृष्णसेवकत्वात्, काशीराजः-भीमश्वशुरत्वात्, कुन्तिभोजः-कुन्तीपितृत्वात्, शैब्यः-श्रीकृष्णभक्तत्वात्, युधामन्युः-पार्षतवंश्यत्वात्, उत्तमौजाः-तद्वंश्यत्वात् , सौभद्रः-अभिमन्युः-अर्जुनपुत्रत्वात्, द्रौपदेयाः-द्रौपदीसुतत्वात्, अन्तरंगाएव । न केवलमन्तरंगाः किन्तु महारथाअपीति परोत्कर्षासहिष्णुत्वेन वर्णनं बोध्यम् ॥ ५ ॥ ६ ॥ रा० वि० अस्माकान्त्विति पाण्डवव्यावर्तकस्तु शब्दः । अस्माकं

सम्बन्धिनो विशिष्टाः-बलिष्ठाः-मम सैन्यस्य नायकाः-नेतारो ये तान्निबोध-बुध्यस्व जानीहि । ते-तव सम्यग्ज्ञानार्थं तान्ब्रवीमि । द्विजोत्तमेत्याचार्यसम्बोधनं ॥ ७ ॥ त्रि० वि० ॥ अथ स्वेषामन्तरंगत्वाभावं द्योतयितुमाह ॥ अस्माकमिति ॥ अध्यात्मार्थे ॥ ॥ हे द्विजोत्तम-द्विजानां सनकादीनां सकाशादुत्तम रुद्र? अस्माकं मध्ये ये तु-विशिष्टा-बहुश्रेष्ठाः, तु विशब्दस्य बहुनामसु पाठात् । तान् निबोध-जानीहि । ये च मम सैन्यस्य नायकाः-प्रणेतारः, तान् संज्ञार्थं-नामार्थमुद्दिश्य ब्रवीमि ॥ ॥ अंशार्थे । हे द्विजोत्तम द्वे शब्दार्थतत्वे जानंति ते द्विजाः-कवयः "जाज्ञाने" धातूनामनेकार्थत्वात्,'औणादिकोत्यलोपोवा, तेषामुत्तम शुक्र "कवीनामुशना कवि"रित्युक्तेः तुविशिष्टाः-तुना-असुरावेशरूपविशेषेण विशिष्टाः "तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे" इत्युक्तेः, संज्ञार्थं-सम्यग्ज्ञानार्थं ॥ ॥ प्रसिद्धार्थे हे द्विजोत्तम-ब्राह्मणोत्तम-द्रोण? विशिष्टशब्दस्य-शिष्टविरोधित्वार्थं मनसि निधाय बहिः श्रेष्ठत्वरूपार्थं दर्शयन्द्व्यर्थकं तं शब्दं प्रायुंक्त । ये

## भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः । अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

सैन्यस्य नायकाः ममेति संज्ञार्थं तु मदीया इति संज्ञारूपार्थमेव प्राप्ताइति शेषः,नान्ततो मद्धितकारिण इति भावः।तान्ब्रवीमित्यन्वयः ॥७॥ रा० वि० तानाह द्वाभ्यां ॥ भवानित्यादिना ॥ ॥ समितिंजयः युद्धे जयशीलः सौमदत्तिः सोमदत्तसुतो भूरिश्रवाः ॥ ८ ॥ त्रि०वि० प्रतिज्ञातानाह ॥ भवानिति ॥ ॥ अध्यात्मार्थे-भवान् "भ उररीकरण"इति धातोः, भं भयांगीकारः "नामैकदेशग्रहणे नामग्रहणमिति न्यायाद्वा-भं-भयं, तद्वान्. "भयात्कंस" इत्युक्तेः, कंसस्य कालनेमित्वात्, तस्य कामाभिमानित्वाद्भवान्कामाभिमानी कालनेमिः "असुराअशुभेष्वेव कामादेरभिमानिनः ॥ तत्र कामः कालनेमि"रिति गीतातात्पर्ये ब्रह्मतर्कोक्तेः । भीष्मः-भीषयतीति व्युत्पत्त्या क्रोधाभिमानी खरः । "खरः क्रोधस्त्वया दृष्ट"इत्युक्तेः । यद्वा-भवान्-कामाभिमानी मधुः भीष्मः-क्रोधाभिमानी कैटभः, तथा हरिवंशोक्तेः । कर्णः-केन-सुखेन ऋण्यते-ऊनीक्रियते स कर्णः-मत्सराभिमानी, वेनांशः पौण्ड्रकः, मत्सरिणएव परोत्कर्षदर्शनेन हि सुखाभावः "एवं

मत्सरिणं हत्वा पौंड्रकं ससखं हरि''रिति भागवतोक्तेः । ''पापोवेनः पौण्ड्रकोवासुदेवः'' इति च तात्पर्यनिर्णयोक्तेश्च । कृपः-''कृतिछेदने''इति धातोः, कृत्तं-छिन्नं पाति-रक्षति सतथा । कृतशब्दोपपदात्पातेः कर्तरीडः । उपपदान्त्यलोपश्च, मोहाभिमानी डिम्भकः, मोहितएव हि नष्टरक्षणे यतते । समितिञ्जयः-मित्या-मानेन सहितः, समितिः-मानी, तं जयतीति स तथा-महामानी निकुम्भः, अत्रालुक् । अश्वत्थामा-नश्वयन्ति-नजानान्ति ते अश्वाः''डुहांश्विगतिवृध्योः''''गत्यर्थानां ज्ञानार्थत्वाच्च''-अज्ञानिन इत्यर्थः, तेषु तिष्ठति सोऽश्वत्थः-अहंकारः ''ष्ठागतिनिवृत्तौ, सुपीति कः, पृषोदरादिः, ततोमतुबर्थे आतोमनिन्'' अहंकाराभिमानी विप्रचित्तिः । विकर्णः-विशेषेण करोति स्वसत्कर्म प्रसिद्धमिति '' कृवृपृ इत्यादिना नन्'' दम्भाभिमानी वज्रनाभः असुरः । सौमदत्तिः-सुत्तरां मदः सुमदः सएव सौमदः तं तनोतीति सौमदत्तिः ''पृषोदरादित्वादंते द्वित्तता''मदाभिमानी कुंजरः ''कुंजरोमदउच्यते''इत्युक्तेः ॥ ॥ अंशार्थे-भवानिति द्रोणं प्रति वचनात् बृहस्पतिः ''द्रोणोबृहस्पतिः प्रोक्त''इत्युक्तेः । भीष्मः-द्युनामा वसुः '' भीष्मस्तु द्युवसुर्नामे''त्युक्तेः । कर्णः-सूर्यस्यांशः सहस्रवर्माख्यासुरावेशी '' कर्णः सूर्यः समाख्यातः संनिधानयुतोहरेः । सहस्रवर्मनाम्नाऽपि आविष्टोनरकेण चे''त्युक्तेः । कृपः-विष्कम्भो-रुद्रः '' कृपाचार्यः पुरा प्रोक्तो विष्कंभो नाम रुद्रक''इत्युक्तेः । ननु ते देवांशा एव कथं कालिना स्वीयत्वेनोच्यन्ते इत्यत उक्तं 'समितिञ्जय इति' '' मिनु हिंसायामिति''धातोर्मितिं-मृत्युं जयन्ति ते असुराः तैः सहितत्वाद्युक्तमुक्तमित्यर्थः । एकवचनोपि समितिञ्जयशब्दः पार्थक्येन सर्वत्र योज्यइति सूचयितुं समुच्चयार्थकाश्चशब्दाः । अश्वत्थामा-रुद्रः ''अश्वत्थामा नीलकण्ठ''इत्युक्तेः । विकर्णः-अतिकायासुरः ''विकर्णोप्यतिकायक''इत्युक्तेः । च शब्दस्त्वर्थे विशेषद्योतकः, स्वभावादेव दुष्टः नावेशतइति । सौमदत्तिः-भूरिश्रवाः-अहिर्बुध्न्यः तथैव तात्पर्यनिर्णयोक्तेः । तथा द्रोणादिवदावेशतएव, चः समुच्चये, भूरिश्रवाअपि मदीयइति भावः ॥ ॥ प्रसिद्धार्थे ॥-यमभिमुखीकृत्योच्यते तद्दाक्षिण्यमधिकमित्यतो द्रोणं प्रत्यादौ भवानित्युक्तिः । सैन्यनायककथनप्रसंगे मम सेनाधिपतित्वेपि द्रोणस्यादौ ग्रहणे व्यर्थोममायास इति भीष्मोमन्येतेत्याशंक्य तदुत्तरमेव भीष्मइत्युक्तम् । च शब्देन ब्राह्मणत्वात्तदग्रोक्तिरिति

सूचितम् । कर्णभीष्मयोर्वैमनस्याद्भीष्मनामग्रहणेन विवर्णवदनं कर्णं दृष्ट्वा अव्यवधानेनाग्रे कर्णइत्युवाच । तथापि तन्मानसीं प्रीतिमदृष्ट्वा अनन्तरं कृपोपन्यासः । अनेन भीष्मस्य ब्राह्मणान्ते ग्रहणात् कर्णस्य तु ब्राह्मणादौ ग्रहणात् भीष्मापेक्षयापि कर्णस्य महाविश्वासपात्रत्वं ध्वनितम् । स्वापेक्षयाऽऽदौ कर्णस्य ग्रहणाद्रुष्टं कृपमवेक्ष्य सर्वेषामविशेषितत्वेपि तमेव समितिञ्जयपदेन विशेषितवान् । गुरुपुत्रत्वेन ब्राह्मणत्वेन महाशौर्येण मित्रत्वेन चादौ स्वनाम्नोग्रात्यत्वेऽपि तदभावमालोक्य सञ्जातोपेक्षमश्वत्थामानं स्वभ्रात्रादौ जग्राह । अनेन बन्धोः सकाशादपि तदाधिक्यं निरूपितम् । बात्द्यानामेव ग्रहणात् स्वभ्रातरोयुद्धविमुखा भवेयुरित्यतोऽश्वत्थामान्तेच भ्रातृग्रहणम् । तत्रापि दुःशासनादीन्विहाय विकर्णस्यैव ग्रहणे निमित्तन्तु द्यूतकाले विरुद्धभाषितत्वं ज्ञेयम् । अनेन तद्ग्रहणाभावे तथा भाषितत्वात्तान्प्रति गच्छेदिति भीर्दृश्यते । स्वसाक्षाद्भ्रातृग्रहणेन दूरस्थस्य महावीरस्य भूरिश्रवसः वैमनस्यमाशंक्य तथैवेत्युक्तम् । साक्षाद्भ्रातृसमानइत्यर्थः, न तु दूरस्थत्वेन सोदरन्यू-

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः । नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**

नइति भावः ॥८॥ रा० वि० शूरा एवेति वा मदर्थएवेति वाऽवधारणान्वयः । त्यक्तजीविताः-प्राणत्यागे कृतनिश्चया इत्यर्थः । प्रह्रीयंते एभिरिति प्रहरणानि-अस्त्राणि । नानाविधानि शस्त्राणि प्रहरणानिच येषांते नानाशस्त्रप्रहरणाः । युद्धविशारदाः-युद्धकुशलाः ॥९॥ त्रि० वि० अन्येषां स्वनामाग्रहणेन खिन्नत्वं समीक्ष्य तानपि शंसति ॥ अन्ये चेति ॥ ॥अध्यात्मार्थे-अन्ये-नमुचिपाकेल्वलादयः शूराः त्यक्तजीविता आसन् । ये च मदर्थे अत्यक्तजीविताः-धृतदेहाभिमानाः राहुविरोचनमन्देहादयः । ते च नानाशस्त्रप्रहरणाः-अनेकशस्त्रप्रहारशीलाः । न केवलं तथा अपि तु सर्वेपि युद्धे विशारदाः-कुशलाः ॥ ॥ अंशार्थे ॥ शल्यदुःशासनजयद्रथाद्याविष्ट संल्हादेन्द्रजित्कालकेयादयो असुराः मदर्थे-मदिष्टार्थे त्यक्तजीविताः, अत्यक्तजीविताः-धृतमनुष्यदेहा वा ॥ ॥ प्रसिद्धार्थे ॥ ॥ अन्ये-जरासन्धैकलव्यपौण्ड्रकादयः, त्यक्तजीविताः ॥ ये चात्यक्तजीविताः शल्यादयः तेऽपि शूराएव । अत्यक्तेत्यत्रा-

कारप्रश्लेषाभावे क्तप्रत्ययस्यातीतार्थकत्वेन पूर्वं मृतानामिदानीं योत्धृत्वासम्भवात् । यद्वा जीवितशब्देन तदाशा लक्ष्या ॥ ९ ॥ रा० वि० दलद्वये बलिष्ठपरिगणने पांडवविजये मम संदेहोऽस्ति । ततो भवदादयः सर्वे बहुसन्नद्धा भवंत्विति भावेनाह ॥ अपर्याप्तमिति ॥ सेनापतिभूतभीष्माभिरक्षितं अस्माकं तत् प्रागुक्तबलिष्ठोपेतं बलं अपर्याप्तं-पांडवजये न समर्थं प्रतीयते। भीमाभिरक्षितमिदं पांडवानां बलं तु पर्याप्तं-अस्मद्विजये शक्तं प्रतीयते ॥ १० ॥ त्रि०वि० प्रशंसारूपसाम्ना सेनापत्यदानेन च भीष्मानुकूल्यं सम्पादितं, इदानीं भेदेनापि सम्पादयन् तद्रोषजननायाह ॥ अपर्याप्तमिति ॥ अध्यात्मार्थे ॥ ॥ अत्र तदित्यव्ययम् तत्रार्थे-तदुभयपक्षमध्यइत्यर्थः । असन्निकृष्टपरामर्शकस्य तस्य सन्निकृष्टपरामर्शकत्वायोगात् । अस्माकं बलं-सैन्यं भीष्माभिरक्षितमिति हेतुगर्भविशेषणम् । देवासुरेषु साम्याद्वर्तमानेन भीष्मेण क्रोधेन तदभिमानिनेति यावत् अभिरक्षितत्वादित्यर्थः । अपर्याप्तं-शत्रूणां जये अलं न भवेत् । यद्वा-परितः-

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितं । पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितं ॥ १० ॥

सर्वतः आप्तं-हितकारी नास्ति । अथवा परः-परमात्मा अस्त्यस्मिन्निति परि आप्तं च पर्याप्तं, तद्विरुद्धमपर्याप्तम् विष्णुरहितम्, अनाप्तं चेत्यर्थः । तेषां-देवानां तु बलं भीमेन-पूर्णज्ञानिना प्राणेन अभिरक्षितत्वात् । अत्राप्यस्माकमित्यावर्त्य । दमे-अस्मन्निग्रहे, पर्याप्तं शक्तं । ज्ञानित्वस्येकपक्षएव वर्तमानत्वादिति भावः । अतइति शेषः । इ-आश्चर्यं'इ विचित्रे स्मरे पुमानिति'' यादवः । इदमेतच्छब्दाभ्यां दूरस्थसैन्यतत्पतीनां परामर्शायोगादियमेव योजना युक्ता । परि-विष्णुसहितं आप्तं चेति वा ॥ अंशार्थे ॥ ॥ भीष्मस्य वस्वंशत्वेन तत्पक्षीयत्वादिति भावः । भीमस्यांशावेशाभ्यामुभाभ्यामप्यस्मत्पक्षानंगीकारादिति च ॥ ॥ प्रसिद्धार्थे ॥ ॥ भीष्मस्योभयपक्षसमानत्वाद्भीमस्यास्मन्निरसने सत्यप्रतिज्ञत्वादिति भावः । वाग्बाणभेदेनापि भीष्मः स्वार्थे यतेतेति तात्पर्यं ॥ १० ॥

रा० वि० हि यस्मादेवमतोभवंतः सर्व एव सर्वेष्वयनेषु व्यूहप्रवेशमार्गेषु यथाभागमवस्थिताः-स्वस्वरणभूमिस्थानेषु दृढमवस्थिताः संतः भीष्ममेवाभिरक्षंतु । अन्यैर्युध्यमानो भीष्मः पृष्ठतोऽरिभिर्यथा न हन्येत तथा रक्षन्त्विति द्रोणाचार्यमुक्त्वा विषसाद, ॥११॥ त्रि०वि० इदानीं भीष्मोपर्यन्ततः कुपितः सन्बहिर्वर्धयन्सैनिकानाज्ञापयति ॥ अयनेष्विति ॥ ॥ अध्यात्मार्थे ॥ सर्वेष्वयनेषु-जीवस्थानरूपेषु देहेषु । यथाभागं-यथाधिकारं, हि-यस्मात्, भीष्मस्य-क्रोधस्य रक्षणात्सर्वमस्मदभिप्रेतं भवेदिति भावः ॥ ॥ अंशार्थे सर्वेष्वयनेषु-भीष्मद्रोणादिसर्ववीरेषु, यथाभागं-यथांशं, अवस्थिताः भवन्तः-कालनेम्यादयः । भीष्मं-क्रोधाभिमानिनं, खरं,कैटभं वा, अभिरक्षन्तु । तेनैवास्मत्कार्यसिद्धिरिति भावः ॥ ॥ प्रसिद्धार्थे ॥ ॥ अयनेषु-वाहनेषु, यथाभागं-व्यूहस्य यथोक्तपूर्वादिभाग-

अयनेषु च सर्वेषु यथाभागमवस्थिताः । भीष्ममेवाभिरक्षंतु भवंतः सर्वएव हि ॥ ११ ॥ तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः । सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥ १२ ॥ ॥ ॥

मनतिक्रम्यावस्थिताः, सर्वएव भवन्तः भीष्ममेवाभिरक्षन्तु, किमस्मद्रक्षयेत्याक्षेपोक्तिः ॥ वर्धनपक्षे । तस्मिन्रक्षिते सति सर्वे वयं रक्षिताः स्यामेति भावः ॥ ११ ॥ रा० वि० एवं विषादिनस्तस्य-दुर्योधनस्य हर्षं संजनयन्-जनयितुं "लक्षणहेत्वोः क्रियायाः" इति हेतौ शत्रंतं । प्रतापवान्कुरुवृद्धः पितामहो-भीष्मः सिंहनादं उच्चैर्विनद्य शंखं दध्मौ । ध्मा शब्दे ॥ १२ ॥ त्रि० वि० सैनिकानां निजरक्षणस्याज्ञापनेन तुष्टः क्रोधाभिमानी, स्वस्वामिनोहर्षजननाय कृतां कृतिमाह ॥ तस्येति ॥ ॥ अध्यात्मार्थे ॥ ॥ मह इत्यत्र पृषोदरादित्वान्मकारोत्तरोकारलोपः । तथा "सप्तसु प्रथमेति" सूत्रात्प्रथमा षष्ठ्यर्थे, तथाच-महः-मोहस्य पिता-उत्पादकः 'क्रोधाद्भवति संमोह' इत्युक्तेः । कुरुवृद्धः-ककाररेफोत्तरवर्तिनौ यावुकारौ ताभ्यां विभागयोगेन क्रो इति वर्णे स्थिते तेन वृत्-युक्तः धकारो

यत्रेति स कुरुवृद्धः-क्रोधः, । तदभिमान्यसुरः । तस्य-कलेः, हर्षं सञ्जनयन् सम् । सिंहनादं-आट्टहासं विनद्य-कृत्वा 'वचनमब्रवीदिति-वज्ज्ञेयम् ॥ शंखं-शं-सुखं, खनति-उन्मूलयति तत् अन्यथाज्ञानं । दध्मौ-नादयामास, प्रख्यापितवानिति यावत् । तथा विष्णुतोमीति मानित्याह ॥ प्रतापवानिति ॥ प्र-विष्णुः " अ क थ प्र वि सं भूम स ख हा विष्णुवाचका" इत्यभिधानात् तस्मात्तापयुक्त इत्यर्थः ॥ इत्यध्यात्मार्थे ॥ ॥ अंशार्थे ॥-कुरुवृद्धः-भीष्मः आवेशपात्रत्वेन यस्यास्तीति, "अर्शआद्यच्" पितामहो-ब्रह्मा, तथैव तात्पर्यनिर्णयोक्तेः । तस्य-कलेः हर्षं सञ्जनयन् सन्निवेति लुप्तोत्प्रेक्षा । सिंहइति नादः-शब्दः, नृसिंहनामेति यावत् । दुरितनिवृत्तये इतिशेषः "नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये" इति भाष्योक्तेः । विनद्य-उच्चैरुच्चार्य । शंखं-शं-सुखसाधनं, खं-ज्ञानं, दध्मौ-व्यधमत्, निःसारयामासेति यावत् । यतःप्रतापवान्-प्रार्थं-विष्णवर्थं, तापः-तपः तद्वान् ॥ ॥ प्रसिद्धार्थे ।-तस्य-दुर्योधनस्य,कुरुवृद्धः पितामहो-भीष्मः, शंखं-कम्बु,॥ १२॥

ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः । सहसैवाभ्यहन्यंत स शब्दस्तुमुलोऽभवत् ॥ १३ ॥

रा० वि० ततः-तच्छंखध्वानानंतरं पणवानकगोमुखाः-वाद्यविशेषाः सहसैव-युगपदेव । तुमुलः-सर्वत्र परिपूर्णोऽभवत् ॥ १३ ॥ त्रि० वि० ॥ आनन्तरिकं वृत्तमाह ॥ तत इति ॥ ॥ अध्यात्मार्थे ॥ शंखः-शमुपलक्षितवस्तुजातकारणं खं-शून्यं येषु ते शंखाः-शून्यवादाः । भेर्यः-भा-भवानी"नामैकदेशग्रहणेन नामग्रहणात्"शक्तिरिति यावत्, ईर्या-प्रतिपाद्या यस्मिन्स भेर्यः-शक्तिवादः । "पण-व्यवहार"इति धातोः, पणो-व्यवहारः, वं-बलं यस्मिन्स पणवो-मायावादः । तस्मिन्व्यावहारिकी सत्तांगीकारात्, ओ-विष्णुः, कः-शब्द-रूपत्वाद्वेदः, तौ अकौ यद्वादे न स्तः सोऽनकः-नास्तिकवादः, । गौः-नन्दीश्वरः, यद्वा शाकपार्थिवत्वाद्गोमान्-पशुपतिः मुखः-मुख्यो यस्मिन्सगोमुखः-पाशुपतवादः । एते सहसैव-बलात्कारादेव अभ्यहन्यन्त"हन हिंसागत्योरिति धातोः" "उपसर्गाणामर्थद्योतकत्वाच्च,, अभ्युपगताः-अंगीकृत्यावर्तिताः इति यावत् । अनेनैव तेषां निषिद्धत्वं द्योतितम् । तुमुलः-सान्द्रः ॥ अंशार्थप्रसिद्धार्थयोः शंखादयो



वाद्यभेदा एव ॥ १३ ॥ रा० वि०ततः-तेषां घोषानंतरं श्वेतहयैः-शुक्लवर्णाश्वैः युक्ते स्यंदने-रथे पांडवः-अर्जुनः । स्थितावेवेत्यन्वयः ॥ ॥ १४ ॥ त्रि०वि० इदानीं देवपक्षीयवृत्तमाह ॥ ततः श्वेतैरिति ॥ ॥ अध्यात्मार्थे।-"डुहोश्विगतिवृध्योः"रिति धातोः,श्वं-ज्ञानं, तत्सहितं इतं-गमनोपलक्षितसर्वकर्मजातं येषां तैः, ज्ञानकर्मकरणैरित्यर्थः । हयैः-गच्छन्ति-स्वविषयानिति हयैः-इन्द्रियैः "हयगता" विति धातुः, युक्ते-सहिते । महति-सर्व योनिषु श्रेष्ठत्वात्पूज्ये, स्यन्दने-रथरूपे-नृदेहे "शरीरं रथमेव तु" इति काठकम् । स्थितौ-आश्रितौ "द्वासुपर्णेति"श्रुतेः, माधवः-रमापतिः, पाण्डवः-पाण्डं-प्रमेयं, वाति-जानातीति स तथा जीवइत्यर्थः । तावुभौ-दिव्यौ-पूर्वोक्तविलक्षणौ । शंखौ-सुखसाधनभूतज्ञानसाधनवादौ, प्रदध्मतुः-व्याकुरुतां ॥ ॥ अंशार्थे ॥ माधवो-भगवान्, पाण्डवः-नरःइन्द्रोवा, ॥ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यंदने स्थितौ । माधवः पांडवश्चैव दिव्यौ शंखौ प्रदध्मतुः ॥ १४ ॥ पांचजन्यं हृषीकेशो देवदत्तं धनंजयः । पौंड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥१५॥ ॥ ॥

प्रसिद्धार्थे ॥ माधवो-भगवान्, पाण्डवो-अर्जुनः ॥ १४ ॥ रा० वि० तद्विवृणोति ॥ पांचजन्यमिति ॥ हृषीकेशशब्दार्थ उक्तो भाष्ये एकादशे हृषीकाणामिंद्रियाणामीशत्वाच्च हृषीकेश-, इत्यादि ॥ दध्मावित्यन्वयः ॥ १५ ।. त्रि० वि० ॥ वाद्यवादकौ विविच्याह ॥ पाञ्चजन्यमिति ॥ ॥ अध्यात्मार्थे-हृषीकेशः-इन्द्रियनियन्ता भगवान् बिम्बरूपः । पाञ्चजन्यं-पञ्च-धर्मार्थकाममोक्षतत्साधन-ज्ञानानि, जन्यानि-उत्पाद्यानि यस्य तं वादं । स्वार्थे अण् । धनञ्जयः-धनं-मोक्षसाधनम् जायते यस्मात्तद्धनञ्जं-ज्ञानं, तद्यातीति सतथा, ज्ञानयोग्यः प्रतिबिम्बो जीव इत्यर्थः । देवदत्तं-स्वयोग्यतानुसारेण, देवेन-भगवता, दत्तं-ज्ञापितं वादं । प्रदध्माविति पूर्वोक्तवचनविपरिणामेन प्रत्येकमन्वयः । भगवदनन्तरमेव प्राणादीनां वक्तव्यत्वेपि अधुना जीवस्य बोध्यत्वेन प्राधान्यात्तदन्तएव वाय्वादिवादानाह

॥ ११ ॥ ननु कुतोनशोचंति कुतश्च मदीया वादाः प्राज्ञमतविरुद्धाः । "दृष्ट्वेमं स्वजनं कृष्णे" त्यादिनोपपत्तेरुक्तत्वादिति चेत् । तत्किं तेषां जीवनाशात्तव शोकः उत देहनाशात् । अथ देहान्यात्मनोऽभावाद्देहनाशएव तन्नाश इति ॥ नाद्यः ॥ जीवानामनादिनित्यत्वादित्याह ॥ नत्वेवेति ॥ जातु कदापि अहं न नासं-नासमिति न ॥ किंत्वासमेव ॥ त्वं न नासीः । विपरिणामेन क्रियान्वयः । अपित्वासीरेव । इमे जनाधिपाश्च न नासन् आसन्नेव । अहं यूयं च वयं सर्वे एव अतः परं-अनंतरकाले न न भविष्यामः किंतु भविष्यामएव । अत्र पूर्वोत्तरार्धाभ्यां कालद्वयसंबंधोक्त्याऽनादित्वं नित्यत्वं चोक्तं । वर्तमानकालसंबंधस्तु स्फुटत्वान्नोक्तः । "द्वौ नञौ

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः परं ॥ १२ ॥ ॥

प्रकृतमर्थं सातिशयं गमयत"इति न्यायेन नञ्द्वयप्रयोगादेवावधारणसिद्धौ पुनस्तदुक्ति "र्नित्योनित्यानां" स्वदेहयोगवियोगौ नाम जन्ममृती पुरा । इष्येते ह्येव जीवस्य मुक्तेर्न तु हरेः क्वचिदि"ति श्रुतिस्मृतिप्रसिद्धिद्योतनार्था । च शब्दोऽनादित्वेन सह, नित्यत्वस्य समुच्चयार्थः । तु शब्दस्तु स्मृत्युक्तदिशा ईश्वरस्येतरेषामिव देहतोप्युत्पत्तिनाशौ नेति विशेषार्थः ॥ तदाह ॥ "ॐ असंभवस्तु सतोऽनुपपत्तेःॐ" । ॐ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ,, । इति सूत्राभ्यां । तत्राणुभाष्यमपि । "सोनुत्पत्तिलय"इति । ये तु कृष्णस्येश्वरत्वमनादित्वं च न जानंति तान्प्रति यथाश्रुतैवोक्तयोजना । ये तु तज्ज्ञात्वा जीवानादिनित्यतामेव न जानंति तान्प्रति

---

१. ॥ २ अ० ३ पा० ३ अ० सू० ९ ॥ सतः-ब्रह्मणः असंभवस्तु-अनुत्पत्तिरेव, अनुपपत्तेः असतःसकाशादुत्पत्तेरयोगात् ॥ २ ॥ २ अ० ३ पा० १० अ० सू० १७ ॥ आत्मा-परमात्मा, न-देहनाशात्स्यलयवान्नभवति अश्रुतेः-ब्रह्मलयस्य क्वाप्यश्रवणात् ताभ्यः-सनित्योनिर्गुणइत्यादि-श्रुतिभ्यः सकाशात् नित्यत्वात्- ब्रह्मणः नित्यत्वावगमाच्च ॥

तु यथैवं पदयोरध्याहारेण दृष्टांतदार्ष्टांतिकभावेन यथाहं न नासमनादितो वर्ते एवं त्वमेते च सर्वे यूयं न नासुः अनादितो वर्तध्व मिति योजना । अत्रेतौ प्रयोगावभिमतौ-कृष्णत्वदादिचेतना न नाशवंतः भावत्वे सत्यनादित्वात्, नासतइति श्लोके वक्ष्यमाणप्रकृत्यादिवदिति । द्वितीययोजनायां तु, त्वदादयो जनाधिपा न नाशवंतः चेतनत्वे सत्यनादित्वात् कृष्णवदिति, स्वरूपासिद्धिस्तु देहिन इत्यत्र निरसिष्यते । न च साधनवैकल्यं । "नित्यो नित्यानामिति श्रुतेः" । तत्रानादित्वस्याप्युपलक्षणात् । एवं चैवमनादिनित्या जीवाः कथं नाम शोच्याः अनादिनित्यजीवानां नाशभीत्या न योत्स्य इत्यादि त्वदीया वादाः कथं नाम प्राज्ञमतविरुद्धा न भवेयुरिति भावः ॥ १२ ॥ अथ नारदानुग्रही पांगरी श्रीनिवासाचार्यकृतव्याख्यानम् ॥ श्रीगुरुभ्यो नमः ॥ श्रीनृसिंहो जयति ॥ ॥ ॥ नत्वेवेति ॥ पूर्वत्र नानुशोचन्ति पण्डिताइत्युक्तम्, तेन गतासुविषये पंडितानां शोकाभावः सूचितः पण्डितत्वं च न घटादिज्ञत्वं,

न तु एव अहंजा तुना आसं न त्वं न इमे जनाधिपाः न च एव न भविष्याः मः सर्वे अवं यं अतः परम् ॥ अहमिति शेषः ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

किन्तु सर्वोत्तमत्वज्ञत्वमेव, त्वयि तद्वति जाते सत्येव शोकाभावः स्यादित्याशयेनाह ॥ नत्वेवेति ॥ ॥ अहं, अहंजा-अहंकारोत्पन्नाभूतमात्रेन्द्रियपरंपरा । तुना-"तुर्विशेषे च भेदे च स्वसिद्धान्तेऽवधारणे" इति शब्दनिर्णयात्, तुना-स्वसिद्धान्तरूपेण तु-विशेषेण नैवासं-नाभवम् । अनेन पूर्वमपि भेदःप्रतिपादितः ॥ नन्वस्तु जडैर्भेदः, चेतनैस्त्वभेदः स्यादित्याशंक्य तन्निराकुर्वंस्तावद्वर्तमानैरभेदं निराकरोति ॥ नत्वमिति ॥ ॥ त्वं-अर्जुनः, इमे-एतत्कालिका जनाधिपाः-राजानः, अहं तत्तदभिन्नोनास्मीत्यर्थः । युष्मदिदं शब्दयोर्विद्यमानार्थगमकत्वादिति भावः ॥ अथावशिष्टभविष्यैरभेदं निराह ॥ ॥ नचैवेति ॥ अहं भविष्याराजानश्च नैव भविष्यामः ॥ अस्तूत्पन्नोत्पद्यमानोत्पत्स्यमानैः क्षुद्रैस्तव भेदः तथापि जगत्सृष्टिसंहारकर्त्रैस्तु तवाभेदः स्यादत आह ॥ मइति ॥ ॥ "मः-

शिवश्चंद्रमावेधाः'' इत्येकाक्षरात् । शिवो ब्रह्मा वा 'म'शब्दवाच्यः, सोपि नाहं, । इति तृतीयपादगतद्वितीयनकारेणान्वयः । अतः-कारणात् । सर्वे-''सप्तसु प्रथमे''ति सूत्रात् प्रथमा पंचम्यर्थे, सर्वेभ्यःउक्तेभ्यइत्यर्थः । परं-विलक्षणं, श्रेष्ठं, पालकं वा । यं-ज्ञानरूपं ''येति ज्ञानं समुद्दिष्ट'' मिति भागवतदशमतात्पर्योक्तेः ॥ यद्वा ॥ सर्वे-सृगतौ, ''वा गतिगंधनयो''रिति धातोः, औणादिना प्रत्ययलोपश्च । सरणेन-गमनेन, वीयते इति सर्वः-वायुः, सदागतिनामवत्वादिति योगार्थांगीकारात् । सर्वनामसंज्ञाभावेन तस्मिन्नित्यादेशस्य प्रसक्त्या सर्वे इति सप्तमी, वायावित्यर्थः । यं-याति प्राप्नोतीति तं प्राणान्तर्यामिणमित्यर्थः । मामिति शेषः । अव-जानीहि, अवगत्यादौ गत्यर्थानां च ज्ञानार्थत्वात् । एवं पण्डितोभवसि चेदशोको भवसीति भावः ॥१२॥ रा० वि० देहनाशभयादिति द्वितीयपक्षं निराह । देहिन इति । देहिनो-देहवतो जीवस्यास्मिन्-इदानीं वर्तमाने स्थूलदेहे कौमारं यौवनं जरा च यथा प्राप्नोति तथा देहांतरप्राप्तिः । अयं भावः ।

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ॥ तथा देहांतरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥

कौमारावस्थाविशिष्टदेहहाने यौवनावस्थाविशिष्टदेहहाने च शोकस्तावन्नास्तीति प्रसिद्धं । तत्कुतइति वाच्यं । जरादिविशिष्टदेहांतरलाभात् । समानलाभेन हानिर्हि समाधीयत इति चेत् । मृतावपि शोको न कार्यः देहांतरलाभादेव । यदा तु जीर्णदेहलाभेन समीचीनयौवनदेहहानेः प्रतिनिधिः । तदा सुतरां समीचीनदेहांतरलाभेन जीर्णदेहहानेरिति । अतो धीरो बुद्धिमांस्तत्र देहनाशविषये न मुह्यति-न मोहं प्राप्नोति एतेषां देहाः नश्यंतीति शोकं न प्राप्नोतीत्यर्थः । तत्रावस्थामात्रहानिः । अत्रावस्थावतोपीति वैषम्यमनुपयुक्तं । निष्कदानेन पटग्रहणदृष्टेरिति । अत्र देहिनइत्युक्तया देहवतो जीवस्यैव नतु देहदेहिभेदहीनस्य हरेर्जराद्यवस्था देहांतरावाप्तिर्वेति सूचितं । देहान्यजीवएव नास्ति । एवं च त्वदादयो जनाधिपाः नित्याः अनादित्वादिति प्रागुक्तप्रयोगे देहपक्षीकारे असिद्धिबाधौ जीवपक्षीकारे



चाश्रयासिद्धिरिति तृतीयपक्षमप्याशंक्य परिहरति ॥ देहिनइति ॥ अत्र कौमारादिविषयेण तदनुभवो विषयी लक्ष्यते । देहिन इत्यस्य देहादन्यस्येत्यर्थः । देहोस्यास्तीत्यर्थे मतुबर्थे नि प्रत्ययविधानात् । एकवचनादेकस्येत्यपि लभ्यते । देहांतरशब्दोत्रानेकदेहपरः । तथा चायमर्थः । अस्मिन्देहे कौमारं-कौमारानुसंधानं, यौवनं-यौवनानुसंधानं, जरा-जरानुसंधानं । योऽहं कौमारशरीरवानभवं स इदानीं युवशरीरवान्वर्ते । योऽहं युवशरीरवानभवं स इदानीं जीर्णशरीरवान्वर्ते इत्येवं रूपेण तावदस्ति, तच्च देहिनो देहवतो देहादन्यस्येति यावत्, देहशब्दोऽत्र देहेंऽद्रियांतःकरणसंघातपरः देहेंद्रियांतःकरणेभ्योन्यस्य चेतनस्य भवति देहादेर्जडत्वेनानुसंधानकर्तृत्वायोगात् । एवं च देहेंद्रियादितोऽतिरिक्तजीवसिद्धिः । तथाचैकवचनबलादेकस्यैव देहादन्यस्य कौमाराद्यनेकदेहानुसंधानं यथा तथा देहांतरप्राप्तिः-अनेकदेहप्राप्तिर्देहिनो देहादन्यस्यैकस्यैव भवतीति पूर्वार्धेन देहादन्यासिद्धिः । त्रिपाद्या चोक्तविधयाऽनेकदेहप्राप्तिमान्सिद्धइति देहादन्य-

मात्रास्पर्शास्तु कौंतेय शीतोष्णसुखदुःखदाः । आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥

जीवपक्षीकारे नाश्रयासिद्धिः । प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वपूर्वतरदेहानुसंधानेन सिद्धानेकदेहानुगत्याऽनादित्वसिद्धेर्न हेतोः स्वरूपासिद्धिरिति भावः । ननु देहाद्यन्यतमस्यैवास्त्वनुसंधानं । चार्वाकाद्युक्ततर्कबलादित्यत आह ॥ धीरइति ॥ बुद्धिमांस्तत्र-देहादन्यात्मविषये न मुह्यति । देहादीनां जडत्वकरणत्वादिना कर्तृत्वायोगइत्यादिरूपेण ते तर्का निरस्या इति भावः ॥१३॥ सत्यमेतत्सर्वं भवदुक्तं उक्तविधया आत्महानेरभावात् देहहानावपि समीचीनदेहांतररूपप्रतिनिधिलाभात् बांधवानां हानिर्भविष्यतीति धिया शोको न युक्तइति । तथापि तन्मृतौ ममैव सुखहानिर्दुःखावाप्तिश्च स्यात् । तद्देहदर्शनस्पर्शनसंभाषणादेः सुखहेतोरभावात् । छेदभेदादिना विकृततद्देहदर्शनस्य दुःखहेतोर्भावादित्यत आह ॥ मात्रेति ॥ मीयंतइति मात्राः । 'माङ्माने'इत्यतः कर्मणि त्र प्रत्ययः । स्त्रीत्वं शब्दस्वाभाव्यात् । ज्ञानविषयाः-गंधरसरूपस्पर्शशब्दाः तेषां स्पर्शाः-संबंधाः । शीतोष्णशब्दौ शीतस्पर्शोष्णस्पर्शवाचकौ लक्षणया गंधरस-

रूपस्पर्शशब्दाख्यसर्वविषयपरौ भूत्वा तदनुभवलक्षकौ । लाक्षणिकोक्तिकृत्यमग्रे व्यक्तं । गंधरसरूपस्पर्शशब्दाख्यविषयाणां घ्राणरसनचक्षुस्त्वक्श्रोत्ररूपेंद्रियैर्यथाक्रमं ये सन्निकर्षास्ते मात्रास्पर्शाः शीतोष्णसुखदुःखदाः । सुगंधसुरससुरूपसुस्पर्शसुशब्दविषयकसाक्षात्काररूपानुभवजननद्वाराऽऽत्मनः सुखप्रदाः ॥ अनिष्टगंधरसादिविषयकसाक्षात्कारजननद्वारा दुःखप्रदाः । तेषां मृतौ च मम तन्निमित्तसुखदुःखप्राप्तिहानी भवत इति किल कौंतेय तवाशयइति पार्थहार्दमनूद्य भगवान्कृष्णः काकुस्वराशीरस्कं 'तु'शब्देनावधारणार्थकेन निराचष्टे । हे कौन्तेय, मात्रास्पर्शा एव-गंधादिविषयेंद्रियसन्निकर्षाएव इष्टानिष्टस्वविषयसाक्षात्कारद्वारा सुखदुःखदाः किं? इति काकुस्वरेणाक्षेपः । केवलं तन्मात्रा एव न भवंति । किंतु विषयेषु शोभनाध्यासनिमित्तस्नेहरूपेण वा अरित्वादिभ्रमहेतुकद्वेषरूपेण वा देहेंद्रियांतःकरणेषु ममतातिशयहेतुकाविवेकरूपेण वाऽभिमानेनसहिता एव तथेत्यर्थः । कुत एवं. तन्मात्रा एव स्वस्वविषयानुभवद्वारा सुखदुःखहेतवोभवंतीत्यत आह ॥ आगमेति ॥ यत इति शेषोवा हेतुगर्भविशेषणं वा । एतच्चागमापायित्वं शीतोष्णसुखदुःखदाः मात्रास्पर्शाः आगमापायिन इत्येवं स्वस्वविषयकधीद्वारा सुखदुःखदत्वविशिष्टमात्रास्पर्शानां विशेषणं सत् "सविशेषणे हि विधिनिषेधौ विशेष्ये बाधाद्विशेषणमुपसंक्रामत" इति न्यायात् । मात्रास्पर्शानां स्वस्वविषयकधीद्वारा यत्सुखदुःखदत्वं तस्यागमापायित्वादिति सुखादिदत्वरूपविशेषणमुपसंक्रामति । सुप्त्यादौ स्त्रीचंदनाग्निकणादि शीतोष्णस्पर्शसंबंधे अविनाभूतमनस्संबंधात्मसन्निकृष्टत्वगिंद्रियस्य सत्त्वेपि स्वविषयानुभवद्वारा सुखदुःखादिदत्वस्यादर्शनात् । जाग्रद्दशायामभिमानसत्वे एव तद्दर्शनात् । अन्वयव्यतिरेकाभ्यामभिमानसहिता एव मात्रास्पर्शाः स्वस्वविषयकधीद्वारा सुखदुःखादिदाः न तु केवलाइति भावः । सुप्तावन्येंद्रियाणामुपरमेऽपि त्वगिंद्रियस्य नोपरमः । तस्य तदाऽपि विषयसन्निकर्षोऽस्तीति ज्ञापनायैवेतरविषयलक्षकशीतोष्णपदप्रयोगः । आगमापायित्वं चात्र गंगोदकस्येव प्रवाहतोनित्यत्वेपि व्यक्तिरूपेणानित्यत्वं विवक्षितं । मात्रास्पर्शानां सुखादिदत्वे तदयोगात् । तथात्वे सुप्त्यादौ सत्वेनाभिमानस्य प्रकृतान्वयव्यतिरेकोक्त्ययोगात् । अर्जुनस्याभिमाननिवर्तनबोधानुपयोगाच्च । किंतु किंशुककुसुमानामिव प्रवाहतोऽपि विच्छिद्यमानत्वं । सुप्तिमूर्छासंप्रज्ञातसमाधिषु

च्छेदेन प्रवाहविच्छेदसंभवात् । तस्य प्रकृतोपयोगाश्चेति भावेन आगमापायित्वं व्यनक्ति ॥ अनित्याइति ॥ शीतोष्णसुखदुःखदा मात्रास्पर्शाः अनित्याः प्रवाहतोप्यनित्याः । तेषां सुखादिदत्वं प्रवाहतोप्यनित्यं यतोऽतोन्वयव्यतिरेकाभ्यामभिमानयुता एव सुखादिदा इत्यर्थः । अतइति शेषः । अभिमानहीनमात्रास्पर्शानां सुखादिदत्वाभावात् । अभिमानत्यागेन तान्-मात्रास्पर्शांस्तितिक्षस्व-विफली-कुरु । सुखदुःखादिदा यथा न भवंति तथा कुरु । नह्यभिमानं विना कृतोमात्रास्पर्शरूपः सामग्र्येकदेशः सुखादिदाने शक्तो भवतीति भावः ॥ १४ ॥ ननु दुःखाभावस्य युद्धाकरणेपि संभवात्किं तत्कृत्वा दुःखाभावायाभिमानत्यागेनेत्याशंक्य देहाद्यभिमानत्यागेन भवन् दुःखाभावः स्वयं फलरूपोऽपि परमपुमर्थहेतुश्च भवतीत्याह ॥ यं हीति ॥ पुरुषर्षभ-पुरुषश्रेष्ठ पार्थ एते मात्रास्पर्शाः-विषयेंद्रियसन्नि-कर्षाः, पुरुषं-पुरं-देहं सरति-गच्छति "स्वगतो" प्रत्यक्षतो जानाति । उपपदांतस्योकारः । सरतेर्डप्रत्ययः । षत्वं । शरीरदर्शनवंतं ।

## यं हि न व्यथयंत्येते पुरुषं पुरुषर्षभ । समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

यद्वा पुरु-पूर्णं ब्रह्म । तत्सरत्यवगच्छतीति ब्रह्मज्ञानीं तं धीरं सुखे दुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तंभकप्रयत्नवंतं अत एव समदुःखसुखं । अनुपादेयत्वेन धर्मेण दुःखेन समं सुखं यस्य स तथा तं दुःखं यथाऽपुमर्थत्वहेतुनानुपादेयं तथा वैषयिकं सुख-मपि अमृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः तं । दुःखसमसुखमिति यावत् । अत एव यं अभिमानहीनं जीवं स्त्रीजनं पुंजनं वा न व्यथयंति-न बाधयंति सुखदुःखकृतोच्चत्वनीचत्वलक्षणविकारं न प्रापयंति । सोऽधिकारी अमृतत्वाय-मुक्तये कल्पते-समर्थो भवति । अत्र धीरमिति समदुःखसुखत्वे हेतुः । तच्चाभिमानत्यागे हेतुः । समदुःखसुखो जीवः कथं सुखहेतुषु शोभनाध्यासलक्षणाभिमानवांस्तद्वि-रोधिषु द्वेषरूपाभिमानवांश्च भवेदिति सुप्त्यादौ पामराणामपि अभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरिति शंकाव्यावृत्तये पुरुषं शरीरदर्शनवंतमित्युक्तं । तथा व्यथाभावमात्रेण कथममृतत्वं "तमेवं विद्वानि" त्यादिश्रुतिविरोधादित्यपि शंकापनुत्तये पुरुषं ब्रह्मज्ञानि-

नमित्युक्तं । "पुरु ब्रह्म गुणाधिक्यात्तज्ज्ञानात्पुरुषः स्मृत"इत्युक्तेः । अत्र नरहरितीर्थीये "ब्रह्मानिरभिमानित्वादि"ति स्मृतिमुदाहृत्य चतुर्मुखादन्येषां अतिव्यथाराहित्यमेव लिंगभंगात्प्राग्देहाद्यभिमानाभावादित्युक्तं ॥ १५ ॥ ननु "पापमेवाश्रयेदस्मान्हत्वैतानाततायिन" इत्यादिना बंधुहननादिरूपयुद्धात्परलोकदुःखहेतुतयोक्तं । अतः शोक इत्यत आह ॥ नासतइति ॥ अत्र सदसच्छब्दौ साध्वसाधुकर्मपरौ । भावाभावशब्दौ सुखदुःखवाचकौ । "सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते । प्रशस्ते कर्मणि तथे"त्यादेः "सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचिन"इत्यादेः । असतः दुष्कर्मणः सकाशात् भावः-सुखं नास्ति । यथेति दृष्टांततयाऽस्योपयोगः । सतः-साधुकर्मणः सकाशादभावो दुःखं नास्ति । एतच्च युद्धं नारायणद्विट्तदनुबंधिनिग्रहरूपत्वेन सत्कर्मत्वान्न परलोकदुःखहेतुः । प्रत्युत सुखहेतुरेवेति भावः । किमत्र प्रमाणमित्यत आह ॥ ॥ उभयोरपीति । अंतो-निर्णयः पूर्वार्धोक्तार्थस्यावधारणं । अन्यदर्शनस्यान्यान्

## नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽतस्त्वनयोस्तत्वदर्शिभिः ॥ १६ ॥

प्रत्यप्रत्यायकत्वाद्दर्शनमूलः संप्रदायोऽत्र लक्ष्यते । उभयोरप्यनयोः सदसत्कर्मणोः दुःखसुखे यथाक्रमं न विद्येते इत्यर्थयोरपि तत्वदर्शिभिः अंतस्तु-संप्रदायस्तु प्रमाणतया दृष्टइति वा दृष्टस्तु दृष्टएवेति वा तु शब्दान्वयः । सत्कर्मणोदुःखं नास्ति असत्कर्मणः सुखं वा नास्तीत्यनयोरर्थयोर्निर्णायकोपदेशपरंपरारूपसंप्रदायोमहात्माभिर्दृष्ट एवेत्यर्थः । नन्वनादित्वहेतुनाऽहमीप पक्षे निक्षिप्य नित्यत्वेनानुमातव्य इति यदुक्तं त्वया सत्वयुक्तः पक्षः । दृष्टांताभावेन व्याप्तिग्रहासंभवात् । अन्यस्यानादिनित्यस्य मानाभावेनाभावादित्यतोन्यदप्यनादिनित्यमित्येतदप्यनेनोच्यते ॥ ॥ नासतइति । असतः-कारणस्य प्रकृतेरभावः-प्रागभावः प्रध्वंसश्च न विद्यते-नास्ति । तथा सतः-ब्रह्मणश्चाभावो द्विरूपोभावः न विद्यते । अत्रासतः सतश्चाभावो न विद्यतइत्येकवाक्ये संभवति वाक्यद्वयग्रहणं प्रागुक्तानादित्वानुमाने व्याप्तिसद्भावे आदरसूचनार्थं । अत एवाग्रेऽविनाशित्वित्यादिना व्याप्तिग्रहणस्थलमनेकं दर्शयति । अत्र व्याप्ति-



स्थलप्रदर्शनार्थं नासतो विद्यते भावइत्येतावदेव वाच्यं । तथापि प्रागुक्तद्वितीयप्रयोगे कृष्णो दृष्टांतितः । तत्र साध्यसाधनानुगतिसूचनाय "नाभावो विद्यते सत"इत्यप्युक्तिः । तथाच द्वितीयप्रयोगेऽपि व्याप्तिः सुदृढा । नन्वन्यस्यानादिनित्यत्वे माना ( भावात् ) भाव इत्युक्तमित्यत आह ॥ ॥ उभयोरपीति ॥ सदसतोः-अनादिनित्ययोरंतस्तु-निर्णयभूतपरंपरोपदेशलक्षणसंप्रदायस्त्वित्यर्थः । तत्वदर्शिभिर्दृष्टइत्यर्थः । नरहरितीर्थास्तु तत्वदर्शिभिरपीत्यपि पदं भिन्नक्रममुपेत्य "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तमे"त्यागमोऽत्रार्थे मानत्वेन समुच्चीयत इत्याहुः ॥ १६ ॥ ननु "प्रकृतिः पुरुषःकाल" इत्यादिवाक्यानामुपासनार्थत्वात्संप्रदायस्य च मूलानिश्चयात्प्रकृतिपुरुषयोः स्वरूपस्यैवासिद्धेः पुनरनुमानस्य व्याप्त्यसिद्धिरित्याशंक्य भगवान् किमिदानीं प्रकृत्यादिस्वरूपसाधनेन किंचेदं नित्यं इदं नित्यमिति प्रत्येकमुक्तेन च यद्देशतो अनंतं तत्सर्वं नित्यमेवेत्येवं

## अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् । विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥ अंतवंत इमे देहानित्यस्योक्ताः शरीरिणः । अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥ ॥ ॥

संग्राहकसंगृहीतं वर्णादि जीवादन्यदप्यस्ति तद्व्याप्तिग्रहणस्थलं भविष्यतीत्याह ॥ अविनाशित्विति ॥ येनेदं सर्वं ततं-व्याप्तं तदकारादिवर्णजातं । अव्याकृताकाशश्चेत्येवमादि सर्वं अविनाशि तु नित्यमेवेति तुरेवेत्यर्थः । अनादिचेत्यपि ग्राह्यं । ननु "सुप्यजातौ णिनिस्ताच्छील्य"इति सूत्रेण सोपसर्गस्यापि छांदस ताच्छीलिक णिनि प्रत्ययांताविनाशिशब्देन स्वाभाविकविनाशाभावोक्तावपि शापेन वा बलवत्प्रयत्नादिना वा विनाशः किं नस्यादित्यत आह ॥ विनाशमिति ॥ ॥ अस्य व्याप्तस्य वस्तुनो विनाशं ध्वंसं कश्चिदपि कर्तुं नार्हति । कुत इत्यत उक्तं ॥ अव्ययस्येति ॥ ह्रासहीनस्येत्यर्थः । ह्रासएव नास्ति तादृशस्य नाशं न कोपि कर्तुमीष्टे इति किमु वाच्यमित्यर्थः ॥ ॥ १७ ॥ "ननु रूपं रूपं प्रतिरूपो बभुवे"ति श्रुतेः जीवः प्रतिबिम्बः । प्रतिबिंबश्चोपाधिकृतः प्रतिमुखमिव दर्पणोपाधिकृतं । देह एवात्र जीवोपाधिर्नान्योस्ति । तथाच जीवचेतना न नित्याः, नाशवद्देहोपाधिकत्वात्, दर्पणोपाधिकप्रतिमुखवत् । नश्वरबिंबोपाधिसन्निधिक-

त्वात् नश्वरमुखदर्पणसंनिधिकप्रतिमुखवदिति प्रतिपक्षग्रस्तमनादित्वेन नित्यत्वानुमानमित्यत आह ॥ अंतवंतइति ॥ एकवचनं बहुवचनार्थे । शरीरिणां नित्यानामिमे-परिदृश्यमानाः भौतिकाः देहाः अंतवंतः-विनाशिन इति योजना । इम इति विशेषणादन्येंतहीना अपि देहाः संतीति सूच्यते । तएवोपाधयोजीवानां नांतवद्भौतिकदेहा इत्याद्यप्रतिपक्षहेतुरसिद्धः । अत एव नित्यस्येति साध्योक्तिः । जीवाः नित्याः नित्योपाधिकत्वात् व्यतिरेकेण प्रतिमुखवदित्युक्तं भवति । नित्यस्येत्येवोक्तावीश्वरस्यापि देहोंतवानिति प्राप्नोतीत्यतः शरीरिण-इति विशेषणं । द्वितीयहेतुरप्यसिद्ध इत्याह ॥ अनाशिनइति ॥ बिंबोपाधिमान्निधिनाशकृतनाशहीनस्य शरीरिण इत्यन्वयः । जीवाः नित्याः नित्यबिंबोपाधिसान्निधिकत्वात्, व्यतिरेकेण प्रतिमुखवदित्युक्तंभवति । ननूपाधेर्नित्यत्वेऽपि परिच्छिन्नपरिमाणस्यैव वस्तुनो बिंबत्वयोग्यत्वात्परिच्छिन्नयोश्च बिंबोपाध्योः सन्निधेः दर्पणमुखसन्निधेरिव कादाचित्कत्वनियमात्कथं तस्य नित्यतेत्यत आह ॥ अप्रमेयस्येति ॥ प्रमा-परिमितिः अपरिच्छिन्नस्येत्यर्थः । सर्वगतस्येति यावत् । जीवे सर्वगतत्वस्याभावादतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति सिंहश्चैत्रइत्यादौ प्रसिद्धेः सर्वगतेश्वरसरूपस्येत्यर्थः । तत्प्रतिबिंबस्येति यावत् । सर्वगतेश्वरप्रतिबिंबस्य कथं बिंबोपाधिसन्निधिनाशेन नाशः स्यादिति भावः । नच सर्वगतस्य प्रतिबिंबत्वायोगः । तत्सारूप्यस्यैव प्रतिबिंबताशब्दार्थत्वात् । तदाह सूत्रकारः "ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ इति" । उपसंहरति॥ तस्मादिति ॥ बिंबोपाधितत्सन्निधीनां नाशाभावेन तन्नाशप्रयुक्तनाशस्य जीवचेतने अनाशंक्यत्वेन प्रतिपक्षानुत्थानात् । नत्वेवाहमित्यत्रोक्तानादिनित्यत्वानुमानेन जीवस्य नित्यत्वात् । जीर्णदेहहानेऽपि समीचीनदेहांतरलाभरूपप्रतिनिधिना समाधानसंभवात् । बंधुदेहस्पर्शनदर्शनाद्यभावनिमित्तशोकस्य च परमपुमर्थहेत्वभिमानत्यागेन निवर्तितुं शक्यत्वात् । भगवत्पूजार्थं हे भारत युध्यस्वेति । नन्वेतदयुक्तं । जीवेश्वरयोर्नित्यत्वाविशेषात् कुत ईश्वरस्य पूज्यतेत्यतोवा जीवाद्धरेर्विशेषं वक्तुं अविनाशित्वित्यादिश्लोकद्वयं प्रवृत्तं । तथाहि-येन भगवता इदं-जगत् कालः गुणजातं ततं-व्याप्तं । कालतो गुणतो देशत

१॥ अ० २ पा० ३ सू० ३० जीवस्य, यावत्परमात्मसत्वात् नित्यत्वेन, सोनादिनेति श्रुत्यप्रमाण्यदोषोनास्ति, "सनित्य"इति श्रुत्या नित्यत्वस्य दर्शनात्,

श्च यद्विष्ण्वाख्यं ब्रह्म ततिमत्तद्विष्ण्वाख्यं ब्रह्माविनाशि । तुर्विशेषे । "अनित्यत्वं देहहानिः दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तः तदभावोहरेः सदे" त्युक्तदिशा चतुर्विधनाशहीनमिति विद्धि—जानीहीत्यर्थः । विनाशमित्यादि प्राग्वद्व्याख्येयं । वर्णाकाशादेर्देशकालाभ्यां व्याप्तत्वेपि न गुणतः साऽस्ति । जीवस्य कालतस्ततत्वेपि न देशगुणाभ्यां ततिरस्तीति हरेस्ततत्वे विशेषः । अस्त्वेवं हरेः सर्वप्रकारेण विनाशाभावः । तावता जीवादविनाशविषये कोहरेर्विशेषइत्यत आह ॥ ॥ अंतवंतइति ॥ शरीरिणां शीर्यमाणदेहवतां संसारिणामिति यावत् । स्वरूपतो नित्यानां जीवानामिमे देहाः अंतवन्तः विनाशवंतोजानिमंतश्चेत्यपि ग्राह्यं । संसारिदेहाः आद्यंतवंतइत्युक्त्या मुक्तदेहो नैवमिति लाभान्मुक्तेश्वरस्य हरेः कैमुत्यसिद्धो नित्यदेहः । एवं चोत्पत्तिविनाशवद्देहवतां च दुःखप्राप्तिः अवर्जनीयैव । गुणतोऽपूर्णता व्यक्तैवेति । स्वरूपतो नित्यत्वेऽपि त्रिविधनाशवत्त्वाज्जीवस्य ततो हरेश्चतुर्विधनाशहीनस्यास्ति महान्विशेषइति

## यएनं वेत्ति हन्तारं यश्चैनं मन्यते हतं । उभौ तौ न विजानीतोनायं हंति न हन्यते ॥ १९॥

तत्पूजा कार्येत्युपसंहरति ॥ ॥ अनाशिनइति ॥ तस्माज्जीवेभ्योतिशयवत्त्वात् । अनाशिनश्चतुर्विधनाशहीनस्याप्रमेयस्य देशकालगुणापरिच्छिन्नस्य हरेः पूजार्थं युध्यस्वेति । किंच न केवलं सर्वप्रकारेणाविनाशित्वात्तत्पूजा कार्येति । किंतु सर्वथैवाविनाशित्वात्स एव स्वतंत्रः ततश्च तदधीनत्वान्मुक्तेः युद्धादिस्वकर्मणाराधितश्च मोक्षं ददातीत्यतस्तत्पूजा कार्येति भावेन चोक्तमनाशिनोऽप्रमेयस्येति ॥ १८ ॥ ननु यदुक्तं जीवचैतन्यस्य नित्यत्वं । यच्चोक्तं सर्वथैकप्रकारेणाविनाशित्वादीश्वरः स्वतंत्रः । अनिच्छया देहनाशात्तन्निमित्तदुःखवत्वाच्च जीवः परतंत्रइति । तज्जीवनित्यत्वपारतंत्र्ये न युक्ते । हन्तायमस्य हतश्चायमिति हननादिक्रियायाः जीवे तत्र स्वातंत्र्यस्य च प्रतीतेरित्यत आह ॥ ॥ य इति ॥ यः पुमानेनं-जीवं हंतारं-जीवांतरस्य स्वातंत्र्येण घातकं वेत्ति । यश्चैनं केनचित्स्वातंत्र्येण हतं मन्यते । तावुभौ जीवस्याऽनित्यत्वज्ञानी, हननादिक्रियायां जीवस्वातंत्र्यज्ञानी चेत्युभौ न विजानीतः । जीवनित्यत्वभगवत्स्वातंत्र्याज्ञानिनौ भ्रांता-

विति यावत्।कुतोबाधकाद्भ्रान्तित्वकल्पनेत्यत आह।। ॥नायमिति।।।बिंबनित्यत्वोपाधिनित्यत्व बिंबसन्निधिनित्यत्वानादित्वरूपोक्तहेतुभ्यो नायं हन्ति जीवं । न हन्यते च जीवः । प्रतिबिम्बत्वादेव हेतोर्न स्वतंत्रः सन्कश्चन हन्तीत्यर्थः । अतो बाधकाद्भ्रान्तित्वमिति भावः । अत्र हननक्रिया जीवक्रियांतरोपलक्षणं । सर्वत्र तस्यास्वातंत्र्यादिति । एनमीश्वरं जीवचेतनस्य हंतारं योमन्यते सोऽपि भ्रांतएव । चेतनहननस्येश्वरेणाकरणादित्यपि योजना तात्पर्योक्ता ।। १९ ।। यदुक्तं जीवेश्वरयोरुत्पत्तिविनाशराहित्यं, ईश्वरस्य देहतोप्युत्पत्त्यभावेन स्वातंत्र्यं, जीवस्य स्वरूपतोजन्मादिशून्यस्यापि देहोत्पत्त्यादिनाऽस्वातंत्र्यं, तेष्वर्थेषु प्रमाणत्वेन मंत्रवर्णमुदाहरति ॥ ॥ नजायत-इति । तथाहि जीवविषये तावदियं योजना । अयं जीवः स्वरूपेण न जायते न म्रियते न नश्यति च । वा शब्दश्चशब्दार्थः । अग्रेतन नञोऽनुकर्षः । जीवो न जायते चेत्तर्हि यथेश्वरज्ञानं वृद्धिह्रासविवर्जितं भूत्वैव कयाचिदचिंत्यशक्त्या भूतमिव व्यवहारावलंबनं भवति ।

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥ ॥ ॥ ॥ ॥**

तदैक्षतेत्यादिश्रुतेः । तथा जीवेपि किं जननव्यवहारस्तन्निमित्तइत्यतो नेत्युच्यते । अयं जीवः स्वरूपेण भूत्वा कयाचिद्विवक्षया ईश्वरज्ञानवद्भविता न भवति । कुतो न जायते न म्रियते वेति स्वरूपोत्पत्तिविनाशाभावो जीवस्येत्यत उक्तं॥ ॥अजोनित्यः शाश्वतइति ॥ स्वरूपोत्पत्तिविनाशशून्यसदैकरूपभगवत्सरूपत्वादित्यर्थः । अतद्भावे सामानाधिकरण्यस्य सारूप्यगमकत्वात् । अजनित्य पदाभ्यां बिम्बोत्पत्तिविनाशाभावः । शाश्वतपदेन बिंबोपाधिसन्निधिजन्मनाशाभावश्च हेतुरुक्तोभवति । ईश्वरज्ञानवद्भूत्वा भवितापि चेन्न जीवः तर्हि किं निमित्तो जननव्यवहारो जीव इत्यत उक्तं ॥ ॥ पुराणइति । पुराणि देहानणति " अणपणगतौ " गच्छति देहाद्देहांतरं प्राप्नोतीति देहयोगनिमित्तइत्यर्थः । एवं तर्ह्युपाधिभूतदेहनाशान्नाशः स्यादित्यत आह ॥ न हन्यत इति ॥ ॥"अंतवंतइमे देहा"

इत्यत्रोक्तदिशा नित्योपाधेरन्यस्य भावात् एतच्छरीरनाशेपि न जीवनाशइति भावः । ईश्वरविषये तु पूर्वोत्तरार्धे ईश्वरजीवरूपविषयभेदेन योज्ये । तथाहि 'वा' शब्दादेव पूर्वनञोम्रियते वेत्यत्रानुकर्षस्य सिद्धेः नञंतरवैयर्थ्यात् नायं भूत्वेत्यत्र श्रुतो न शब्दो न नञ् किंतु नृ शब्दः । तथाचायं ना परमपुरुषः न जायते न म्रियते-देहयोगवियोगवान्नभवति नित्यदेहएवेत्यर्थः । अत एव स्वरूपानाशः कैमुत्यसिद्धः । देहोत्पत्तिविनाशयोरप्यभावेन स्वातंत्र्यमपि सिद्धमेवेति भावः।एवंचेत्कथं तर्हि रामकृष्णादिरूपेण जननव्यवहारइत्यतो भूत्वा रामकृष्णादिरूपेण सर्वदा भूत्वैव कदाचिज्जनदृग्विषयत्वादिरूपेण भूयः पुनर्भविता । नतुदेहयोगेनापि-भविता । "किंतु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुं । प्रदर्शयति लोकस्य जनिरित्युच्यते हरेरिति' तत्वनिर्णयोक्तेः । अयं जीवोप्यजो नित्यश्च । ईश्वरस्येव जीवस्याप्यनादिनित्यत्वे स्वातंत्र्यस्यापि प्राप्तेः ईश्वरादविशेषः स्यादित्यत उक्तं॥ ॥शाश्वतइति । सदैकरूपः अनाद्यनंतकालमत्यक्तपारतंत्र्यादिस्वभाव इत्यर्थः । कुत एतदित्यत उक्तं ॥ ॥ पुराणइति । अनिच्छयापि देहाद्देहांतरप्राप्तिमत्त्वादिति हेतुगर्भविशेषणमिदं ।

**वेदाविनाशिनं नित्यं य एनमजमव्ययं । कथं स पुरुषः पार्थ कं घातयाति हन्ति कं ॥ २१ ॥**

नहि तादृशस्य स्वातंत्र्यसंभावनापीति भावः । एतावान्गुण इत्याह । " न हन्यते हन्यमाने शरीर " इति ॥ २० ॥ यएनमिति श्लोके जीवचैतन्यस्य हननं वा हननक्रियायां स्वातंत्र्यं वा मन्यमानो न जानातीत्यत्र जीवचितोबिम्बोपाधिसन्निध्यनाशहेतुकनित्यत्वप्रतिबिंबत्वहेतुकावस्वातंत्र्यरूपहेतू उक्तौ । यस्तु जीवचितो नित्यत्वं हरेः स्वातंत्र्यं च जानाति स ज्ञानी ॥ स्वातंत्र्याभिमानाभावात् । हंताहमिति वा अस्यायं हंतेति वा न जानातीत्यज्ञानेऽभिमानाभावोऽपरोहेतुरुच्यते ॥ ॥ वेदेति ॥ अविनाशिनं-बिम्बनाशादिनिमित्तकनाशहीनं । मात्रास्पर्शाइत्यत्रोक्तदिशाऽभिमानकृताएव रागद्वेषसुखादिदोषाः न तु स्वतइति स्वतोदोषहीनमिति वा । दुष्टेषु नष्टशब्दप्रयोगान्नाशोऽत्र दोषोध्येयः । नित्यं-स्वाभाविकनाशहीनं । अजं-उत्पत्तिहीनं । अव्ययं-स्वरूपविकारशून्यं एनं-जीवं । यद्वा

अविनाशिनं नित्यं-स्वरूपतोनाशहीनं अजं-जन्महीनं अव्ययं-निर्विकारं अतएव सर्वस्वतंत्रमेनमीश्वरं योवेद-जानाति सपुरुषोज्ञानी कथं केन प्रकारेण कं घातयति कं वा हन्ति । घातयाम्येनमिति वा हन्म्येनमिति वा भावं न करोतीत्यर्थः ॥ २१ ॥ पूर्वत्र पुराणपदेन जीवस्य देहाद्देहांतरप्राप्तिरुक्ता । सा तु देहान्यनित्यजीवसत्वएव युक्ता । कौमारं यौवनं जरेत्यत्र देहात्मविवेकोक्तावपि कौमारादिदेहानाम तिभिन्नत्वाभावान्न तेन देहात्मनोर्विनाशित्वाविनाशित्वलक्षणो विवेकः स्फुटमनुभवारूढोभवतीत्यतोदृष्टांतांतरेण तमुपपादयति ॥ ॥ वासांसीति ॥ यद्वा ईश्वरस्य देहतः स्वरूपतश्च नित्यत्वेन तद्विषये शोकाभावेऽपि जीवविषये तु स भविष्यति । जीवोनित्यस्तद्देहयोग वियोगौ कौमारादिदेहवदेवेत्युक्तावपि सर्वलोकप्रसिद्धजनिमृतिसत्वात् युद्धे च तत्प्राप्तेस्तन्निमित्तः शोकइत्यत आह ॥ ॥ वासांसीति ॥ शरीरयोगवियोगयोः कौमारादिवच्छोककारणत्वाभावोंगीकृतश्चेत्तर्हि जनिमृती अपि न शोककारणं । देहयोगवियोगयोरेव जनिमृतिशब्दार्थत्वादिति भावः । यद्वा वाससोजरावत्स्वशरीरे जरादावस्वातंत्र्यदर्शनात्सर्वत्रास्वातंत्र्यं जीवस्य ज्ञेयमित्यनेनोच्यते । श्लोका

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥ ॥ ॥ ॥ ॥

र्थस्तु व्यक्तः ॥ २२ ॥ श्रीनृसिंहोजयति । अत्र जीर्णदेहविसर्जनानंतरं नवदेहप्राप्तिर्वासोदृष्टांतेनोक्ता; । भागवते तु "देहांतरमनुप्राप्य प्राक्तनं त्यजते वपुः" । इत्यनेन नवदेहप्राप्त्यनन्तरं जीर्णदेहविसर्जनमुक्तम् ॥ अतो विरोधः । वासोदृष्टान्तोप्यत्र न युज्यते । तथा प्रतीत्यभावात् । नहि कश्चित्पूर्वं जीर्णं विसृज्य नवग्रहणे प्रवर्तते । अतो विरोधान्तरं च । अत्र केचित्समादधुः-अविहायेति पदप्रश्लेषेण दृष्टान्ते न विरोधइति । दार्ष्टान्तिके अकारप्रश्लेषासंभवेन साम्यानुपपत्तेः । नरः-जानुकंचुकवान्मनुष्यः, अपराणि-नव जीर्णेतराणि कौपीनादीनि धृत्वैवेति शेषः, जीर्णानि-पूर्वधृतानि जानुकंचुकाख्यानि, विहाय-त्यक्त्वा, नवानि-तदाख्यानि वासांसि गृण्हाति यथा । अप

रशब्देन कौपीनादेः, तथा धृत्वैवेति शेषस्य चाग्रहणे, जीर्णनवकंचुकहानग्रहणानुपपत्तेः । उभयोर्नवजीर्णशब्दयोर्ग्रहणेनैव चारितार्थ्ये अप राणीति पदस्य वैयर्थ्यापत्तेश्च । तथा अन्यानि-नवजीर्णेतरलिंगशरीराणि, अधिष्ठायैव , जीर्णानि विहाय, नवानि संयाति-प्राप्नोति अत्रापि अन्यशब्देन लिंगशरीरादेः तथा अधिष्ठायैवेति शेषस्य चानंगीकारे जीर्णदेहत्यागनवदेहप्राप्त्योरनुपपत्तेः । नहि जीर्णदेहं विहायानावृतएव देहान्तरं गच्छेत् । लिंगानावरणे मोक्षसिद्धिप्रसंगात् । अन्यपदस्य च वैयर्थ्यापत्तिः । जीर्णान्नवस्य स्वतएवान्यत्वसिद्धेः॥ तस्मादुक्तार्थस्य युक्तत्वेन नोक्तविरोधापत्तिरिति भावः ॥ श्रीमन्नारदशिष्येण श्रीनिवासेन लेशतः ॥ वासांसीत्यादिपद्यं तु विवृतं श्री शतुष्टये ॥ २२ ॥ ननु जीवाचितः कालकृतस्य विनाशादिनिमित्तकृतस्य च नाशस्याभावेपि दक्षशिरच्छेदइव शस्त्रादिप्रबलहेतुना नाशोऽस्ति किमित्यत आह ।। नैनमिति॥ ॥एनं देहीति प्रकृतं जीवं न क्लेदयंति । मृदुकरणेन शिथिलं न कुर्वंतीत्यर्थः॥ २३ ॥ननु न

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ २३ ॥ अच्छे-द्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥ ॥**

छिंदंतीत्यादि लट्प्रयोगेन वर्तमानस्यैव छेदादेर्निषेधादिदानीं दृश्यमानत्वेनात्मनः प्राग्विनाशाभावेऽप्युत्तरत्र शस्त्रादिना विनाशः स्यादि त्यतः छेदादियोग्यतैवात्मनोनास्तीत्याह ॥ ॥ अच्छेद्योयमिति । अयं जीवः "कृत्याःप्राङ्ण्वुल" इति सूत्रेणोक्तकृत्यसंज्ञकस्य ण्यत्प्रत्ययस्य "अर्हेकृत्यतृचश्च" त्यर्हार्थे " छिदि दहे " इत्यादेर्धातोर्विधानाच्छेदनाद्यर्हो न भवतीत्यर्थः । अयमयमिति पृथग्वचनं योयोजीवः ससर्वोप्येवं रूपइति प्रदर्शनाय । कुतोनार्हतेत्यतउक्तं ॥ ॥ नित्यइत्यादि । सर्वगतः स्थाणुरिति पदविभागः । नित्यइति सर्वगतइत्यस्य विशेषणं । सर्वगतपदेन सर्वगतत्वविशिष्टउच्यते।नित्यः सर्वगतत्वविशिष्ट इत्युक्ते "सविशेषणे ही " ति न्यायेन नित्यत्वं सर्वगतत्वरूपविशेषणमुपसंक्रामति । नित्यं यत्सर्वगतत्वमिति तद्वान्सर्वगतइत्यर्थः । स्थाणुरिति यत्किंचिन्निमित्तकृतविकारहीनः

"अजोनित्यः शाश्वत" इत्यत्र शाश्वतपदेन सामान्यतोविकाराभावोक्तावपीह नैमित्तिकनिषेधप्रकरणान्नैमित्तिकविकाराभावोक्त्यर्थं स्थाणुरित्युक्तं । अतो न पुनरुक्तता । अचलः-प्राकृतचलनहीनः । सनातनः-वक्ष्यमाणदिशा सशब्दइत्यर्थः ।"त्वयीश्वरे ब्रह्मणि नो विरुध्यते" " विज्ञानशक्तिरहमासमनन्तशक्तेः । परास्यशक्तिर्विविधैव श्रूयते " इत्यादिश्रुतिस्मृतिरूपशब्दसहितः तत्प्रतिपाद्यइति यावत् । तथाच स्थाणुत्वेऽपि हरेस्तदक्षैतत्याद्युक्तकर्तृत्वमचिंत्यशक्त्यैव युक्तं, न तु पररीत्या मायावशादित्युक्तं भवति । ननु नित्यइत्यादिविशेषणविशिष्टस्येश्वरत्वादयं जीवोनित्यः सर्वगतस्थाणुरिति भगवदभेदोक्तिरयुक्तेति चेत् । सत्यं । उक्तानुपपत्तेरेवाभेदोक्तिरत्र " अतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति " न्यायाद्गौणी नेया । नित्यसर्वगतत्वादियुक्तभगवत्स्वरूपोऽयं जीवइति । उक्तगुणकेश्वरप्रतिबिंबोजीवइति यावत् । तावता कथं छेदनाद्यनर्होजीवइति शंकानिरासइति चेत् । योयत्प्रतिबिंबः सोऽसति विरोधे तत्समानधर्मकइति व्याप्तिबलेन जीवस्य स्थाणुत्वादीश्वरधर्मसमानधर्मप्राप्तेरिति तात्पर्यात् । " अनाशिनोऽप्रमेयस्येत्यत्राजोनित्यः शाश्वतइत्यत्र " नित्यइति प्रकृतार्थे च जीवस्येश्वरप्रतिबिम्बत्वोक्तावपि न पुनरुक्तता शंक्या । तत्तच्छंकानिवर्तकाभिन्नगुणविशिष्टेश्वरप्रतिबिंबत्वस्य तत्र तत्र कथनादिति ज्ञेयं । ननु सयुक्तिकमच्छेद्यत्वाद्युक्त्यैव नैमित्तिकनाशशंकानिरासात् नैनमिति व्यर्थमिति चेत् । " प्रवृत्ते शस्त्रसंपात " इत्युक्तेः प्रसक्तौ सत्यामपि वर्तमानस्य छेदादौ दृष्टेरात्मनः छेदाद्ययोग्यत्वं युक्तमिति प्रदर्शनार्थत्वात् । यद्वा नैनमित्यादिश्लोक ईश्वरविषयः । तथाहि । वेदाविनाशिनमित्यत्रेश्वरस्य स्वतोनाशाभावोक्त्या तन्निमित्तशोकाभावेऽपि युद्धगतशस्त्रादिकरणविशेषेण छेदादिप्रसक्तेस्तन्निमित्तशोकोममेत्यतआह ॥ ॥ नैनमिति । "यएनं वेत्तीति" श्लोके प्रकृतमीश्वरं । शिष्टं व्यक्तं । एतेनेश्वरस्य देहतोऽपि छेदाद्यभावात् स्वातंत्र्यमित्युक्तं भवति । एनमेनमिति पृथक् पृथग्वचनं सर्वरूपाणामेवंभावप्रदर्शनाय । एवमव्यक्तोऽयमित्यत्रापि । ननु जीवस्य स्वतो नाशाभावेऽपि युद्धगतशस्त्रादिकरणविशेषेण छेदादिः स्यादित्यत आह॥ ॥अच्छेद्योऽयमिति । अयं-जीवः । ननु जीवस्यापीश्वरवदच्छेद्यत्वादिसत्वे सर्वसाम्यं स्यात् । तथाच किंतत्पूजयेत्यतोजीवस्य नित्यमीशाधीनतामाह ॥ ॥ नित्यइति । सर्वगतस्थाणुरित्येकं पदं । नित्यइति योग्यतया स्थितिरूपक्रियाविशेषणं ।



क्रियाव्ययविशेषणानां च नपुंसकत्वमेकवचनांतत्वंच वाच्यमित्येतच्चाश्रितं । अयं जीवः नित्यं सर्वगते हरौ तिष्ठतीति नित्यः सर्वगतस्थः तदधीनतया सदा स्थितइति यावत् । सचासावणुश्च सर्वगतस्थाणुरित्यर्थः।ईशजीवयोःसर्वगतत्वाणुत्वरूपवैषम्यान्न सर्वसाम्यमिति भावेन सर्वगतेति अणुरिति चोक्तं । ननु जीवस्येशाधीनत्वं यदा न स्यात्तदा स्यात्सर्वसाम्यं । तथाच न तत्पूजा कार्येत्यत आह ॥ ॥ अचलइति।"सर्वगतस्थ" पदं बुद्धिविविक्तमाकृष्यते भावप्रधानं।सर्वगतस्थत्वान्न कदाचिच्चलतीत्यचलः।'नित्यं सर्वगतस्थइ'त्युक्त्यैवास्यार्थस्य लाभेऽपि केनचिद्वरादिनिमित्तेनापि तदधीनत्वस्य ( नाशइति ) नैमित्तिकनाशाभावोक्त्यर्थमचलइत्युक्तिः । कुतः सदा हर्यधीनत्वं जीवस्येत्यतउक्तं ॥ ॥ सनातनइति । नादेन विधिनिषेधरूपशब्देन सह वर्ततइति सनादः । सनाद एव सनातनः । द शब्दस्य छांदसस्तनादेशः । विधिनिषेधबद्धत्वात्सदा तदधीनइति भावः । तदुक्तं विष्णुपुराणे । "नित्यं सर्वगते विष्णावणुर्जीवोव्यवस्थित" इत्यादि

**अव्यक्तोऽयमचिंत्योऽयमविकार्योऽयमुच्यते । तस्मादेनं विदित्वैवं नानुशोचितुमर्हसि ॥ २५ ॥**

॥२४॥ नन्वणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत्कुतस्तथा न दृश्यतइत्यतआह ॥ ॥ अव्यक्तोयमिति । अयं सर्वगतपदेन प्रकृतो हरिः । ननु नैनमिति श्लोके देहतोऽपि छेदाद्यभावात्स्वतंत्रोहरिरित्युक्तं । देहवान्सर्वगतश्चेत्कथमव्यक्तइत्यतोऽचिंत्योऽयमिति । अचिंत्यशक्तिकइत्यर्थः । एतेन हरेरव्यक्तत्वे तद्दर्शनश्रुत्यप्रामाण्यमिति निरस्तं । तदाह"सूत्रे । ॐ अतोनंतेन तथाहि लिंगम् ॐ इति।अचिंत्यशक्तेः प्रतिबंधे नाशे वा तस्य प्रतीतिप्रसंगइत्यतउक्तं ॥ ॥ अविकार्योयमिति ॥ सा शक्तिर्न कदाप्यन्यथा भवतीत्यर्थः । कुतएतदुच्छेद्य देह ( व ) त्वादीत्यतउक्तं उच्यतइति । "सदेहःसुखगंधश्चे"त्यादि तात्पर्योदाहृतश्रुतिष्वेतत्सर्वं हरेरुच्यतइत्यर्थः । अयमयमिति पृथग्वचनं

॥अ० ३।पा० २। सू० २७॥ अतः-ईश्वरस्य अव्यक्तत्वेपि प्रत्यक्षत्वे प्रमाणसद्भावात् । अनंतेन-अपरिच्छिन्नेन ब्रह्मणा तत्प्रसादेन अव्यक्तस्याप्यापरोक्ष्यंभवति । हियस्मात्, तथा लिंगं,-तस्याभिध्यानादित्युक्तं ईश्वरप्रसादस्य बंधनिवृत्तिहेतुत्वरूपं, दर्शनहेतुत्वज्ञापकमस्ति. तस्मात्।ईश्वरप्रसादः, अपरोक्षजनकः, बंधनिवृत्तिहेतुत्वात् राजप्रसादवत्

सर्वरूपाणामेवंभावप्रदर्शनार्थं । तेनायमयमव्यक्तोऽयमयमचिंत्योऽयमयमविकार्यः इतीदं शब्दोवीप्सारूपेणानेकरूपपरामर्शीति सूचितं । नैनमित्यत्रापि पूर्वश्लोके एनमेनमिति बहुशब्दयोगेन बहुरूपपरामर्शइत्युक्तं भवति । अन्यथा नञः एनमित्यस्य च पुनःपुनरुक्तिरयुक्ता स्यादिति भावः । एवं सर्वशंकोद्धारेणात्मनित्यत्वं प्रतिपाद्योपसंहरति ॥ ॥ तस्मादिति ॥ बिंबोपाधितत्सन्निधिनाशनिमित्तस्य शापादिनिमित्तस्य शस्त्रास्त्रादिनिमित्तकस्य च नाशस्याभावेनात्मनोनित्यत्वादेनं-जीवमेवं-नित्यत्वादिना विदित्वा शोचितुं नार्हसीति । अथवा अस्त्वेवं भगवानेव "नित्यः सर्वगतस्थाणु" रित्यादावुक्तदिशा स्वतंत्रः ततश्च किमित्यतआह ॥ तस्मादिति ॥ ॥ हरेरेव सर्वस्वतंत्रत्वेनाखिलदुःखनिवृत्तिविशिष्टपुमर्थप्रदत्वात् एवं युद्धादिस्वकर्मणाऽव्यक्तत्वादिरूपेणैनं भगवंतं ज्ञात्वा शोचितुं संसारदुःखमनु

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतं । तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥
जातस्य हि ध्रुवोमृत्युर्ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिवेदना ॥ २८ ॥

भवितुं नार्हसि-मुक्तोभविष्यसीत्यर्थः । अतउक्तरूपेण तं ज्ञात्वा युद्धादिस्वकर्मणा तमाराध्याशेषदुःखं परिहरेति भावः ॥ २५ ॥ अस्त्वेवमात्मनोनित्यत्वं अथापि देहयोगवियोगरूपजनिमृती स्तएव । युद्धे च मृतिर्नियता । अतस्तन्निमित्तं च दुःखं मदीयानां भविष्यतीति मे शोकइत्यतआह ॥ अथचेति ॥ ॥ नित्यशब्दोऽत्रावधारणे । एनं-जीवं नित्यजातं—देहयोगरूपजनिमंतमेव नित्यं मृतं-देहवियोगरूपमृतिमंतमेव त्वं मन्यसे चेत्तथापि हे महाबाहो-एनं-जीवं शोचितुं नार्हसीत्यर्थः ॥ २६ ॥ पूर्वार्धेनार्जुनशंकामनूद्योत्तरार्धेन तथापि त्वं न शोचितुमर्हसीत्येवोक्तं । न तु तत्र हेतुरुक्तः । अतः शोकाभावे हेत्वाकांक्षायां जन्ममरणयोर्यावन्मोक्षं नियतत्वादिति हेतूक्तिपूर्वं साध्यमाह ॥ जातस्येति ॥ ॥ ध्रुवोनियतइत्यर्थः । मृत्युः-मृतिः । तस्माज्जन्ममृत्योर्नियतत्वादित्यर्थः ॥ २७ ॥ ए

देव जन्ममृतिस्वरूपोक्त्या स्पष्टयति ॥ अव्यक्तेति ॥ ॥ अव्यक्तं-प्रधानमादिः-उत्पत्तिकारणं येषां तानि भूतानि-जीवशरीराणि व्यक्तमध्यानि-व्यक्तं-कार्यतापत्त्याऽवस्थानं मध्यं-जन्मनिधनांतरालमेषां तानि व्यक्तमध्यानि ।अव्यक्ते-प्रधाने निधनं-लयोयेषांतानि अव्यक्तनिधनान्येव । तत्र तेष्वेवं रूपेषु भूतेषु का परिवेदना-कः शोकइति । यद्वा कृष्णेनैवं स्वयं युक्तीरुक्त्वा शोकोन कार्यइत्युक्तं । तत्र देहनाशस्यावश्यंभावित्वं यदुक्तं तन्नास्माभिः साध्यं भवतोऽपि सिद्धं तेनैव शोकोन कार्यइत्याह ॥ अथचेति ॥ ॥ अत्र नित्यशब्दो नियतवाची "नित्यं नियतमेव चेति" वचनात् । अथेत्यस्य तिष्ठतु तावदयं प्राचीनोविस्तारइत्यर्थः । एनं-जीवं नित्यजातं-नियतजनिमंतं मृतं वा-नियतमृतिमंतं त्वं मन्यसे चेत्—यदि यावन्मोक्षं जीवस्य जन्ममरणे नियते इति स्वयमेव मन्यसे । तथापि तावन्मात्रज्ञानेनापि एनं जीवं शोचितुं नार्हसि । जन्ममरणयोरवर्जनीयतया नियमेन प्राप्नुवतोस्त्वयैव ज्ञातत्वात् । अवर्जनीये कथं शोकइति

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥

भावः । एवं चास्मिन्नेव श्लोके शोकाभावे जनिमृतिनियमरूपोहेतुः स्पष्टमेवावगम्यतइति पुनस्तत्र हेत्वाकांक्षाभावादेतद्विवरणपरे जातस्येत्यादिश्लोकद्वये जीवस्य जनिमृतिनैयत्यानुवादः प्रागभिप्रेतजीवास्वातंत्र्ये च हेतुत्वेनेति का तत्र परिवेदनेत्यनंतरं तस्माज्जीवस्य जनिमृतिनियमवत्त्वाज्जीवे शोकोयथा न कार्यः । तथा स्वातंत्र्यबुद्धिश्च न कार्येति श्लोकद्वयतात्पर्यार्थोज्ञेयः ॥ २८ ॥ तर्हि कुत्र सा कार्या "नैन"मित्यादौ सा बुद्धिर्भगवति कार्येत्युक्तावपि सा किं भगवत्येव कार्या । अथ ततोन्यत्रापि क्वचिदित्याशंकां'वति'प्रत्ययप्रयोगबलेन परिहरन् भगवत्स्वातंत्र्यं प्रागुक्तमुपसंहरति ॥ ॥ आश्चर्यवदिति ॥ कश्चित्सात्विकप्रकृतिः एनं अव्यक्तइत्यत्र प्रकृतमेनमीश्वरमाश्चर्यवत्पश्यति । आश्चर्यत्वेन सर्वस्वतंत्रत्वेन संतमेव तमाश्चर्यवत्स्वतंत्रवद्यथा भवति तथा पश्यतीति क्रियाविशेषणं । " गगनं गगनाकार "

मित्यादिवत् । आश्चर्यभूतस्य हरेरेवाश्चर्यवदिति स्वोपमामुखेन हरेरितरस्य स्वातंत्र्याभावज्ञापनायाश्चर्यवदिति वत्यंतोक्तिः । अन्यश्च तथैव द्रष्टृवदेव आश्चर्यत्वेन संतमेनमाश्चर्यवद्यथा भवति तथा वदति । " सागरः सागरोपम"इति वदन्यदाश्चर्यवस्तुनेति ज्ञापनाय स्वोपमत्वेन वक्तीत्यर्थः । अन्यश्च सात्विकः आश्चर्यत्वेन संतमेनं हरिं आश्चर्यवद्यथा भवति तथा । "रामरावणयोर्युद्धं रामरावणयोरिवेति" वत् । अन्यदाश्चर्यतया श्रोतव्यं वस्तुनेति ज्ञापनाय स्वोपमत्वेन श्रुणोति । कश्चिच सात्विकएनमाश्चर्यतया संतं हरिं श्रुत्वाऽपि नैव वेद । अत्यद्भुतवस्तुत्वादिति भावः । ईश्वरस्य सर्वान्प्रत्याश्चर्यत्वेपि विपरीतदर्शिनामसुरादीनां बहूनां भावात् यथावद्दर्शी यथावद्वादी च कश्चित्कश्चिदेवेति ज्ञापनाय कश्चिदित्याद्युक्तिः ॥ २९ ॥ यदेतज्जीवस्य " नत्वं नेम " इत्यादिना नित्यत्वमुक्तं । तत्स्वाभाविकत्वान्नेशाधीनं । तथाच सर्वं परमेश्वराधीनं सएव सर्वस्वतंत्रइत्युक्तमतस्तद्विरोधइत्यतः तदपि " द्रव्यंकर्मचे " त्यादेरीश्वरायत्तमित्याह ॥ ॥ देहीति ॥

देही नित्य मवध्योऽयं देहे सर्वस्य भारत । तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

सर्वस्य देहिनोदेहे स्थूलदेहे सूक्ष्मे लिंगदेहे च अयं पूर्वप्रकृतोहरिः रक्षकत्वेन तिष्ठति । अतोदेही जीवोनित्यमवध्यः । हे भारत तस्माद्रक्षकतया स्थितत्वेन नित्यमवध्यत्वात्सर्वाणि भूतानि त्वं शोचितुं नार्हसीत्यर्थः ॥ ३० ॥ यद्वोपसंहारपरोत्तरश्लोकोपयुक्तत्वेनाप्रमेयस्येत्यादिना प्राङ्महिमोक्तावपि पुनर्महिमांतरमाह ॥ ॥ आश्चर्यवदिति ॥ " वति " रत्र एवकारार्थः । एनं-पूर्वत्र प्रकृतं जीवं यः कश्चिदजादिलक्षणेश्वरस्वरूपत्व तदधीनत्वादिना पश्यति सपुमानाश्चर्यवत्-आश्चर्यएव । उक्तरूपेणैनं जीवं वदन् श्रृण्वंश्चाश्चर्यएव-दुर्लभएवेत्यर्थः । सर्वेषामप्यहमित्यात्मदर्शनादिभावात् दर्शनादिमान्कथं दुर्लभइत्यतउक्तमुपपादयति । श्रुत्वेति ॥ ॥ दृष्ट्वा उक्त्वेत्यपि ग्राह्यं।सामान्यतोदर्शनादौ सत्यप्युक्तरूपेण सम्यक् न वेदेति सम्यग्ज्ञानी दुर्लभइत्यर्थः । प्रतिबिंबभूतजीवस्यापि सम्यग्ज्ञानी दुर्लभः । किमीश्वरसामर्थ्यं वर्णनीयमितीश्वरसामर्थ्योक्तिर्ज्ञेया ॥ २९ ॥ देहयोगवियोगयोर्नियतत्वादात्मनश्चेश्वरस्वरूपत्वाद्विनाशादिनिमित्तनाशाभावान्न शोकः कार्यइत्युपसंहरति ॥ ॥ देहीति ॥ प्राग्वदेव पूर्वार्धस्यार्थः । तस्मादित्यस्य तु देहयोगवियोगयोरवर्जनीयत्वादात्मनश्चेश्वरस्वरूपत्वेन सर्वथैवानाशादित्यर्थः । भगवत्स्वरूपत्वेप्यनाशः कुतइत्यतोऽतिसमर्थोभगवानिति तत्सामर्थ्यं प्रागुक्तमिति तस्य तदुपसंहारोपयुक्तता ध्येयेति ॥ ३० ॥ यदुक्तं "प्राग्वेपथुश्च शरीरे मे रोमहर्षश्च जायत" इति तत्राह ॥ ॥ स्वधर्ममिति ॥ यद्वा न केवलमात्मनित्यत्वादशोकः । किं तर्हीत्यतआह ॥ ॥ स्वधर्ममिति ॥ न केवलात्मनोऽविनाशादेवाविकंपः स्वधर्ममप्यपेक्ष्य विकंपितुं शरीरे कंपं सर्वावयवचेष्टां कर्तुं नार्हसीत्यर्थः । यच्चोक्तं "नचश्रेयोनुपश्यामि हत्वा स्वजनमाहव" इति तत्राह॥ ॥ ॥ धर्म्यादिति ॥ परलोकसुखहेतुर्धर्मः । तत्संबंधि तज्जनकमिति यावत् । यद्वा धारकत्वाद्धर्मोहरिः तत्पूजारूपं यत्तद्धर्म्यं तस्माद्युद्धा-



स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि । धर्म्याद्धि युद्धाच्छ्रेयोन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतं । सुखिनः क्षत्रियाः पार्थ लभंते युद्धमीदृशं ॥ ३२ ॥ अथचेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि । ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥ ॥ ॥ ॥

दन्यच्छ्रेयः क्षत्रियस्य न विद्यते हि-प्रसिद्धमेतत ॥ ३१ ॥ किंच स्वयमेव महति श्रेयसि प्राप्ते विकंपोऽनुचितइत्याह ॥ ॥ ॥यदृच्छयेति ॥ यदृच्छया-अप्रयत्नेन उपपन्नं-प्राप्तं । " यदृच्छाहि तदिच्छास्यादि " त्युक्तेरीश्वरेच्छाप्राप्तमिति धीः । अपावृतं-अपगतावरणं स्वर्गद्वारं च पारत्रिकसुखसाधनमिति यावत् । ईदृशं-भगवत्पूजात्वेन स्वधर्मत्वेन स्थितं युद्धं, सुखिनः- सुखहेतुपुण्यवंतः क्षत्रियाः हे पार्थ लभंते-प्राप्नुवंति । यद्वा ईदृशं युद्धं ये क्षत्रियाः लभंते ते सुखिनइत्यर्थः । तेन " स्वजनं हि कथं हत्वा सुखिनः स्याम " ति निरस्तं ॥३२॥ युद्धाकरणेऽनर्थप्राप्त्युक्त्या च तत्कर्तव्यतामाह ॥ अथचेदित्यादिचतुर्भिः । अथचेत् यदृच्छया पारत्रिकसुखहेतुत्वेन च प्राप्तमपि धर्म्यं प्राग्वत् इमं संग्रामं-युद्धं न करिष्यसि-न कुर्याः । तर्हि ततः-स्वधर्मभूतयुद्धाकरणात् न केवलं धर्मकी-

स्योर्हानिः स्वधर्मत्यागात्पापं चावाऽप्स्यसि ॥ ३३ ॥ अपकीर्तिं चावाप्स्यसीत्याह ॥ ॥ अकीर्तिंचेति ॥ अपिच अकीर्तिं-अपकीर्तिं, । अव्ययां-शाश्वतीं । अस्तु कोदोषइत्यतआह ॥ ॥ संभावितस्येति ॥ लोके बहुमतस्यातिरिच्यते-अधिका भवति॥ ३४॥ दयालुत्वान्निवृत्तोऽयमिति कीर्तिमेव कथयिष्यंतीत्यत आह ॥ ॥ भयादिति ॥ मंस्यंते-ज्ञास्यंते । महारथस्वरूपमुक्तं पूर्वाध्याये (षष्ठश्लोके) । मन्यंतां ते ततः का हानिरित्यत आह ॥ ॥ येषामिति ॥ येषां महारथानां त्वं बहुमतोभूत्वाऽसीः तेषां पुरत एव लाघवं यास्यसीत्यर्थः ॥ ॥ ३५ ॥ न केवलं लाघवप्राप्तिः । तवाहिताः-शत्रवः, अवाच्यवादान्-वचनानर्हशब्दान्बहून्वदिष्यंति ।

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययां । सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥ भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः । येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवं ॥ ३५ ॥ अवाच्यवादांश्च बहून्वदिष्यन्ति तवाऽहिताः । निन्दन्तस्तव सामर्थ्यं ततोदुःखतरं नु किं ॥ ३६ ॥ हतोवा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीं । तस्मादुत्तिष्ठ कौंतेय युद्धाय कृतनिश्चयः ॥ ३७ ॥ ॥ ॥

ततः-शत्रुकृतनिंदादिश्रवणात् दुःखतरं-अतिशयितदुःखं । किं नु-न किमपीत्यर्थः॥ ३६ ॥ यच्चोक्तं "नचैतद्विद्मःकतरन्नो गरीयोयद्वा जयेम यदि वा नोजयेयु" रिति जयः संदिग्धइति पक्षद्वयेऽप्यहानिरित्याह ॥ ॥ हतोवेति ॥ " जित्वा वा भोक्ष्यसे महीं" मित्यत्र स्वर्गं च पश्चात्प्राप्स्यसीत्यपि ध्येयं। "ये युध्यंते प्रधनेषु शूरासोये तनूत्यजः ।ये वा सहस्रं दक्षिणास्तांश्चिदेवापि गच्छतादि"ति श्रुतौ ये शूराः प्रधनेषु-युद्धेषु युध्यंति ये च तत्र म्रियंते ये च सहस्रसंख्याकदक्षिणादातारः तानेवायं प्रेतोपि गच्छतादिति यमं प्रति प्रेतस्य स्वर्गप्रार्थनात् तत्र च ये युध्यंते तान्प्रेतोगच्छतादिति युद्धशूराणां जयेपि स्वर्गप्राप्तेरत्र श्रुतावगमात् । तस्मात्पक्षद्वयेऽपि फलभावाद्युद्धाय कृतनि-

श्रय: सन्नुत्तिष्ठ-सन्नद्धोभवेत्यर्थः ॥ ३७ ॥ यच्चोक्तं “ पापमेवाश्रयेदस्मानि ” ति तत्राह ॥ ॥ सुखेति ॥ यथा दुःखमनुपादेयं तथा वैषयिकं सुखमप्यनुपादेयमित्यनुपादेयत्वेन दुःखसमं सुखं कृत्वेत्यर्थः । लाभालाभावित्यादावपि समावित्यनुषंगः । अनुपादेयत्वे-नालाभसमं लाभं कृत्वेत्यर्थः । जयाजयावित्यत्राप्येवमर्थोध्येयः । सुखाद्यभिलाषं हित्वा भगवत्पूजारूपोऽयं स्वधर्मइति बुद्ध्वेति यावत् । युद्धाय युज्यस्व-युंक्ष्व। ततोभगवद्भक्तिपूर्वकं स्वधर्मतयानुष्ठानात्पापं नैवाप्स्यसि प्रत्युत पुण्यमेवाप्स्यसीत्यर्थः॥ ३८॥ “नत्वेव” इत्यादि ग्रंथो-क्तार्थोपसंहारपूर्वकं तत्संगतत्वेनोत्तरप्रकरणारंभं प्रतिजानीते ॥ ॥ एषेति ॥ अत्र सांख्यशब्दोजीवेश्वरज्ञानपरः । “नत्वं नेम” इत्या-दिना जीवस्य प्राधान्येन तादर्थ्येन “ नत्वेवाहमि ” त्यादिनेश्वरस्येति द्वयोरपि प्रकृतत्वात्। बुद्धिशब्दश्च बुध्यतेऽनयेति करणव्युत्प-त्त्या बोधजनकवा (क्परः) क्यपरः। योगशब्दश्च युज्यते-प्राप्यते-फलमनेनेति करणव्युत्पत्त्योपायपरः। अयमर्थः। हे पार्थ सांख्ये—जीवेश्वर

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ । ततोयुद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**
**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां श्रृणु । बुद्ध्या युक्तोयया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९॥**

स्वरूपज्ञानविषये तज्ज्ञानार्थमिति यावत् । एषा-“नत्वेवाहमि” त्यारभ्य “ देही नित्यमवध्य ” इत्यंता बुद्धिः तदुभयस्वरूपबोधजनिका वाक्-वाक्यानीति यावत् । ते-तुभ्यमभिहिता-उक्ता । योगे-तज्ज्ञानहेतूपायविषये तूपायज्ञानार्थमिति यावत् । इमां-“ त्रैगुण्यविषया ” इत्यादिनाऽऽध्यायसमाप्ति वक्ष्यमाणां बुद्धिं-उपायबोधजनिकां वाचं वाक्यानीति यावत् । श्रृणु-श्रवणमात्रस्य विधिना विनापि संभवाच्छ्रु-त्वा तत्र निष्ठां कुर्वित्यर्थः । अत्र वागभिहितेति यौगिकबुद्धिपदेन तदुक्तिर्नाविशदं वाङ्मात्रमुक्तं, किंतु तत्त्वबोधोयथोत्पद्येत-तथो-क्तमिति ज्ञापनायेति ध्येयं । आदरजननाय योगं प्रशंसति॥ ॥ बुद्ध्येत्यादि सार्धश्लोकेन । यया-मद्वाग्जन्यया बुद्ध्या-ज्ञानोपा-यबुद्ध्या युक्तः सन् तदनुष्ठानद्वारा ब्रह्मसाक्षात्कारातिशयं प्राप्य कर्मबंधं-संसारं निःशेषतः प्रहास्यसि-मुक्तोभविष्यसि ॥ ३९ ॥ किंच

इह वक्ष्यमाणे योगशब्दितज्ञानोपायभूतनिष्कामविष्ण्वाराधनरूपकर्मविषये अभिक्रमस्य-उपक्रमस्य नाशोनास्ति । उपक्रममात्रस्यापि निष्फलता नास्तीत्यर्थः । "प्रारंभमात्रमिच्छावे" त्यादेः । उपक्रांतविष्णुधर्मविच्छेदे वा विष्णुधर्मवतोऽन्यधर्माकरणे वा प्रत्यवायोन विद्यते । अस्य-धर्मस्य विष्णुपूजात्मकनिष्कामकर्मणः स्वल्पमपि-एकांशोपि महतोभयात्-संसारभयात् त्रायते-रक्षति । तस्मात्तत्र निष्ठां कुर्विति भावः । ननु "ज्ञानं हि जैवमुक्तमि" ति भाष्योक्तेः । जीवतत्वं प्रागुक्तं ब्रह्मज्ञानोपायश्च वक्ष्यते । नहि निवृत्तकर्मानुष्ठानादिरूपोयोगोजीवज्ञानहेतुः । अतः कथं पूर्वोत्तरप्रकरणयोः साध्यसाधनविषयतया संगतत्वं । मैवं । "श्रुत्वाप्येनमि" त्यत्र भगवत्प्रतिबिंबत्वादिना जीवचैतन्यवेदी दुर्लभइत्युक्त्या तादृशत्वेन तज्ज्ञानोपायस्याकांक्षितत्वेन वक्ष्यमाणनिवृत्तकर्मानुष्ठानाराधितभगवत्प्रीतेरेव जीवेश्वरतत्वज्ञानस्योपायत्वात् । तादर्थ्येन प्रकृतस्यापीश्वरस्य "तस्मादेवं विदित्वैनमि" त्यत्र स्वातंत्र्यादिना ज्ञानस्य मोक्षादिसर्वपुमर्थहे-

नेहाभिक्रमनाशोऽस्ति प्रत्यवायोन विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतोभयात् ॥ ४० ॥
व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन । बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनां ॥ ४१ ॥

तुत्वोक्त्या तज्ज्ञानोपायस्याप्याकांक्षितत्वात् । वक्ष्यमाणसाधनस्यच यथावत्तया परापरतत्वज्ञानोपायत्वान्न पूर्वोत्तरप्रकरणयोरसंगतिः । अत्र योगस्यानेकाध्यायप्रतिपाद्यत्वाच्छ्रोतृमनःसमाधानाय पूर्वसंगतत्वेन प्रतिज्ञाकरणसार्थक्यं ज्ञेयं ॥ ४० ॥ ननु ज्ञानोपायविषयावाचोऽन्योन्यविरुद्धाबह्व्योमतभेदेन संति । अतः कथमेकत्र त्वदीयायामेवोपायविषयवाचि निष्ठाशब्दितं विश्वासं करोमीत्यतआह॥ ॥ ॥ व्यवसायेति ॥ व्यवसायात्मिका प्रमाणनिर्णीतार्थनिश्चयात्मिका, निश्चयजनिका, बुद्धिः-करणव्युत्पत्त्या वाक् । एकैव-एकोपायविषयैव इह-लोके वेदे च । न तत्र विप्रतिपत्तिरस्ति । सएव वैष्णवधर्मानुष्ठानहेतुः । अव्यवसायिनां-प्रमाणनिर्णीतार्थनिश्चयहीनानां बुद्धयः-उपायविषयाः, वाचः बहुशाखाः- बहुमुखाः, विरुद्धनानार्थविषयाः, अनंताश्च । तथाच कथमप्रामाणिकमतविवादेन प्रामाणिकेऽर्थे



अविश्वासः । मया वक्ष्यमाणोपायस्तु प्रामाणिकइति तत्र तत्र व्यक्तीभविष्यतीति भावः ॥ ४१ ॥ नन्ववैदिकमतानामप्रामाणिकत्वेन तत्राविश्वासेपि वैदिकेष्वपि केचित्कर्माणि स्वर्गफलान्येवाहुः । त्वया तु काम्यार्थान्येव स्वर्गादिफलानि । निष्कामानि-ईश्वरार्पणबुद्ध्याऽनुष्ठितानि तु ज्ञानार्थानीत्यभिप्रेयते । तथाच कथं त्वद्वचने निष्ठा स्यादित्यतस्तेषां वैदिकाभासताप्रदर्शनाय निन्दामाह ॥ ॥ यामित्यादित्रयेण ॥ वेदवादरताः-वेदैर्यदापाततउच्यते कर्मादि तत्रैव रताः । वेदोक्तविष्णुमहिमविवादपूर्वकं वेदपाठकावा निरर्थकवेदपाठकावा । अतएवाविपश्चितः-वेदतात्पर्यार्थापरिज्ञानिनः अन्यन्मोक्षाख्यफलं वा ब्रह्मस्वरूपं वा नास्तीति वादिनः कामात्मानः-काम्यफलमनस्काः भोगचित्ताइति वा स्वर्गपराः-स्वर्गतात्पर्यकाः स्वर्गमेव परमपुमर्थं मन्यमानाइति यावत् । जन्म कर्म च तत्फलं च प्रददातीति

यामिमां पुष्पितां वाचं प्रवदंत्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदां । क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसां । व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

तथाविधां क्रियाविशेषबहुलां-बहुकर्मविशेषप्रतिपादिकां यामिमां वाचं पुष्पितां-संजातपुष्पां मोक्षफलमपेक्ष्य पुष्पस्थानीयस्वर्गादिफलकां भोगैश्वर्यप्राप्तिं प्रति प्रवदंति । तया वाचा-अपहृतचेतसां-भोगैश्वर्ययोरासक्तचित्तानां व्यवसायात्मिका-सम्यक् प्रमाणनिर्णीतार्थनिश्चयरूपा बुद्धिः समाधौ-भगवति मनःसमाधानार्थं न विधीयते। तस्यैव परमपुमर्थहेतुत्वादिति भावः। यद्वा अव्यवसायबुद्धिः केन कारणेन भवति। यत्परित्यागात्सा बुद्धिर्न भवति इत्यतोऽव्यवसायबुद्धेः कारणमाह ॥ ॥ यामिति ॥ योजना तु पूर्ववदेव । वेदतात्पर्यविषयीभूतभगवत्स्वरूपमोक्षस्वरूपयोरज्ञानिनामापातप्रतीतार्थमादाय स्वर्गादिफलकावेदाइति वादिनां भोगैश्वर्यप्रसक्तानामसद्वादिनां वाक्यान्यव्यवसायबुद्धिकारणं । तत्त्यागे च सा बुद्धिर्न भवतीति भावः । अत्र पक्षे समाधावित्यस्य तत्वविषयतया दार्ढ्यार्थमित्यर्थः । तस्यैव

विष्णुधर्मानुष्ठानहेतुत्वादिति ॥ ४२ ॥ ४३ ॥ ४४ ॥ एवं "योगे त्विमां शृण्वि"ति योगोक्तिं प्रतिज्ञाय तत्रादरजननाय सार्धश्लोकेन तं प्रशस्य स्वोक्तौ निष्ठाभावे कारणीभूतमतांतरविधानं च श्लोकत्रयेण तन्निंदोक्तया निरस्येदानीं प्रतिज्ञातं योगं प्राधान्येनाह । त्रैगुण्ये-त्यादिना आषष्ठाध्यायसमाप्ति । "बहूनि मे व्यतीतानी"त्यादेः प्रासंगिकत्वेनाप्रधानत्वात्। त्रयाणां गुणानां सत्वरजस्तमसामिदं त्रैगुण्यं। त्रिगुणसंबं(ध्य)धार्थे 'विचित्राहि तद्धितगति' रिति ष्यङ्प्रत्ययः। त्रिगुणजन्यं यत्स्वर्गादि तद्विषया: आपाततः स्वर्गादिफलककर्मादिप्रतिपाद-काः प्रतीयंते वेदाः "वादोविषयत्वं च मुखतोवचनं तथे"त्युक्तेः। हेअर्जुन त्वं तु निस्त्रैगुण्यः निष्क्रांतस्त्रैगुण्यात् । त्रिगुणसंबंधिस्वर्गादि-तोनिस्त्रैगुण्यः त्रैगुण्यबुद्धितोनिर्गतोभव । आपाततः प्रतीतार्थे भ्रांतिं माऽकार्षीरित्यर्थः । यद्वा त्रैगुण्यं-त्रिगुणसंबंधिस्वर्गाद्यस्थिरफलं संसारबंधनं वा तदेव विषं त्रैगुण्यविषं यापयंति-अपगमयंतीति त्रैगुण्यविषयाः। 'यातेरंतर्णीतण्यर्थादातोनुपसर्गेकःइति'कः । नित्यपुमर्थ-

## त्रैगुण्यविषयावेदा निस्त्रैगुण्योभवार्जुन । निर्द्वन्द्वोनित्यसत्वस्थो निर्योगक्षेमआत्मवान् ॥ ४५ ॥

हेतुभगवत्स्वरूपविषयाइति यावत् । तानाश्रित्येति शेषः । निस्त्रैगुण्योभव प्राग्वदेवार्थः । वेदतात्पर्यविषयीभूतार्थं बुद्ध्वा क्षुद्रफलककर्मादि-रूपापातप्रतीतार्थे भ्रांतिं माऽकार्षीरिति भावः । किंच निर्द्वंद्वः-"सुखदुःखे समेकृत्वे"त्यत्रोक्तदिशा समदुःखसुखादिगिति वा सुखदुःखा-दिप्राप्तावुत्सेकानुत्सेकहीनइति वार्थः । नित्यं सत्वे-साधुगुणोपेते हरौ तिष्ठतीति नित्यसत्वस्थः नित्यं हरिस्मृतिमान्भवेति सर्वत्रान्वेति । कथं नित्यं हरिस्मृतिरित्यत आत्मवान्-परमात्मवान् तथा स्मृतिमानिति । "ॐ आत्मेतितूपगच्छन्तिग्राहयन्तिच ॐ" इति सूत्रोक्तदिशा मम स्वामी हरिरिति स्मृतिमानिति यावत् । अप्राप्तप्राप्तिर्योगः प्राप्तपरिरक्षणं क्षेमः । शास्त्रविरुद्धविषये योगक्षेमाभ्यां निष्क्रांतोनिर्योगक्षेमः ।

१ अ. ४ पा. १ अ. २ सू. ३आत्मा( स्वामी ) इत्येव [ ज्ञानिनः ] उपगच्छन्ति-जानन्ति, उपासतेच, ग्राहयन्तिच-शिष्यान्प्रति उपदिशन्तिच, तस्मादात्मेत्येवोपासनंकार्यम्.

शास्त्रविरुद्धविषये योगक्षेमहीनोभवेत्यर्थः । उपलक्षणमेतत् । तादृशयोगक्षेमेच्छाहीनोऽपि भवेत्यर्थः । निर्द्वंद्वत्वादिविशेषणयुक्तः सन् नित्यपुमर्थहेतुर्भगवानेव वेदतात्पर्यविषयो न काम्यकर्मेति ज्ञात्वा काम्यकर्मत्यागेन सर्वत्र संततः-साधुगुणोहरिः मम स्वामीति नित्यस्मरणमेव ज्ञानोपायोनन्तैक्यस्मृतिरित्युक्तं भवति॥४५॥ननु यामिमामिति त्रयेण काम्यकर्मिणां समाध्यभावेन ज्ञानाभावान्न मोक्षइति निंदां कृत्वा निस्त्रैगुण्योभवेति काम्यकर्मत्यागेन योगानुष्ठाननियमउक्तः । सत्वयुक्तः । ज्ञानफलं कर्मिणामिव फलं स्वर्गादिकं ज्ञानिनां नास्तीति ज्ञानकर्ममार्गयोः साम्यादित्यत आह । यावानिति । सामर्थ्याद्यथैवं पदयोरध्याहारः । यावान् तावानित्यनयोरावृत्तिः । अयमर्थः । यथा यावानर्थः प्रयोजनमुदपाने-उदकं पीयतेऽस्मिन्निति व्युत्पत्त्या कूपे भवतितावान्स्नानपानादिरूपोऽर्थः सर्वतः संप्लुतोदके-महासमुद्रेतर्भवति । एवं सर्वेषु वेदेषु सर्ववेदोक्तकाम्यकर्मिणां यावानर्थः-स्वर्गादिरूपं फलं तावानर्थः-तावत्फलं विजानतः-परोक्षतोभगवंतं जानतो

यावानर्थउदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥

ब्राह्मणस्य-ब्रह्मापरोक्षज्ञानिनः भवत्येवेत्यर्थः । ज्ञानिकर्मिणोरन्योन्यफलाभावेऽपि ज्ञानिफलं महासमुद्रोदकमिव महत्, कर्मिफलं तु कूपोदकमिवात्यल्पमतः कुतस्तयोः साम्यं । तथाचाल्पास्थिरफलककर्मनिंदया महानंतफलज्ञानसाधने योगे प्रेरणं पूर्वश्लोकोक्तं युक्तमिति भावः। अत्र विजानतइति परोक्षज्ञानस्य ब्राह्मणपदोक्तापरोक्षज्ञानस्य च हेतुहेतुमद्भावेन द्वयोरुक्तिः । पूर्वत्र स्वामित्वेन हरिस्मरणस्य योगशब्दितज्ञानोपायत्वप्रकटनाय स्वरूपकथनमिति टीकोक्तिस्त्वभ्युपगमवादेनेति ज्ञेयं । यद्वा पूर्वत्र निस्त्रैगुण्योभवेति स्वर्गादिक्षयिष्णुफलककाम्यकर्मरूपे आपाततः प्रतीते वेदार्थे भ्रांतिं माऽकार्षीरित्युक्तकाम्यकर्मनिवृत्तौ त्रैगुण्यविषहारि वेदाश्रयणं कार्यमित्युक्तेऽर्थे वेदतात्पर्यार्थं निवृत्तकर्माराध्यं विष्णुं सम्यग्जानतोऽतिशयितफलावाप्तिरूपयुक्तिमाह । यावानिति । सर्वतः संप्लुतोदके-प्रकृत्यात्मके महाप्रलयोदके । अधिकरणसप्तमी । तत्र स्थितइत्यर्थः उदपाने-परमात्मनि । उत्-उद्रेकात् अपः-पालकराहित्यात् अनः-चेष्टकत्वाद्धेतोः उच्चासावपश्च अनश्चेत्युदपानस्तस्मिन्प्रलये अत्युद्रिक्तगुणतया पालकवर्जितःसन्कालादिचेष्टकतया स्थिते हरौ प्रसन्ने सति यावानर्थः- धर्ममोक्षादिर्भवति

ष्टमनसा निराशीः-विष्णुभक्तिज्ञानाद्यन्यकामरहितः निर्ममः-कर्मण्यहमेव स्वातंत्र्येण करोमीति स्वतंत्रकर्तृताभिमानहीनोभूत्वा सर्वाणि कर्माणि मयि संन्यस्य-भगवान् कृष्णएव मयि स्थित्वा सर्वकर्माणि करोतीति ज्ञात्वा तानि च श्रीकृष्णपूजारूपाणीति मयि समर्प्य । विगतज्वरः-त्यक्तशोकः सन् युध्यस्वेति । तदुक्तं " नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिल"मित्यादि ॥ ३० ॥ विद्वांसःएवं कर्म कुर्वंतीत्येतावता मयाप्युऽक्तविधया कर्म कार्यमिति कुतइत्यतः स्वोक्तस्य करणे अकरणेच फलमाह ॥ ॥ "येम"इत्यादि श्लोकद्वयेन । ये मानवाः श्रद्धावंतः-मद्वाक्येष्वास्तिक्यबुद्धिमंतः अनसूयंतः-कष्टे कर्मणि प्रवर्तयतीति मयि दोषदृष्टिमकुर्वंतः संतः इदं पूर्वश्लोकोक्तरीत्या कर्मानुष्ठानरूपं मे मतं नित्यमनुतिष्ठंति तेऽपि कर्मभिर्निर्वृत्तकर्मभिर्मुच्यंते ज्ञानद्वारेति योज्यं । किमुतापरोक्षज्ञानिनोमुच्यंतइति कैमुत्यसूचनार्थोऽपिशब्दः । एतत्सूचनं च प्रासंगिकं ध्येयं ॥ ३१ ॥ ये तु एतन्मे मतं अभ्यसूयंतः कष्टं कर्मेति दोषदृष्टिमंतः संतोनानुतिष्ठंति तानचेतसः-विवेक-

**ये मे मतमिदं नित्यमनुतिष्ठंति मानवाः । श्रद्धावंतोनसूयंतो मुच्यंते तेऽपि कर्मभिः ॥ ३१ ॥ ये त्वेतदभ्यसूयंतो नानुतिष्ठंति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥ सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥ ॥ ॥**

शून्यान् अतएव ज्ञातव्यसर्वज्ञानविषये विमूढान्-विशेषेण मिथ्याज्ञानिनः अतएव नष्टान्-नरकाद्यनर्थभाजोविद्धि-जानीहि ॥ ३२ ॥ यदि त्वन्मतानुष्ठाने मोक्षः अन्यथा तु नाशः तर्हि ते मतं किमिति लोकोनानुतिष्ठतीत्यत आह ॥ ॥ सदृशमिति । प्रकृतिशब्दोऽत्र पूर्वसंस्कारार्थः सन् तत्कार्यरागद्वेषोपलक्षकः । ज्ञानवानपि-मन्मतकरणाकरणयोरिष्टानिष्टज्ञानवानपि । स्वस्याः प्रकृतेः स्वकीयपूर्वसंस्कारकार्यरागद्वेषयोः सदृशमनुगुणमेव चेष्टते-कर्म करोति । किमुताज्ञइत्यपेरर्थः । ननु मनोनिग्रहे स्वभावानुगतचेष्टोपरतिः स्यादित्यत आह ॥ ॥ प्रकृतिमिति । प्रकृतिं-स्वभावं यांति प्राणिनः । तत्र मनोनिग्रहः किं करिष्यति न किमपीत्यर्थः । तदुक्तं "बुध्वाऽप्यसौ यतोनित्यस्वभावानुगचेष्टितः । स्वभावं यांति भूतानि निग्रहः किं करिष्यतीति" । यद्वा मंदान्न विचालयेदित्ययोग्येषु तत्वबोधोन कार्यइत्युक्तं तत्कुतइत्यत आह ॥

॥ ॥ सदृशमिति । प्राणिवार्थः । तत्वोपदेशेनोत्पन्नज्ञानवानपि स्वभावानुगुणचेष्टावानेव भवति । नतूपदेशजन्यज्ञानानुरूपचेष्टावानपि भवति । अतस्तत्र तत्वोपदेशोव्यर्थइति भावः ॥ ३३ ॥ यदि सर्वाणि भूतानि स्वभावानुगुणमेव चेष्टंते निग्रहोऽकिंचित्करः । तर्हि "मयि सर्वाणी"त्यत्रेतिकर्तव्यतापूर्व कर्मविधानं "ये मे मतमि"त्यादिना तस्य फलोक्तिश्च व्यर्थेत्यतआह ॥ ॥ इंद्रियस्येति । जात्येकवचनं । इंद्रियाणां-चक्षुरादीनामर्थेषु-रूपादिषु इंद्रियाणां रागद्वेषौ-अनुकूले रागः प्रतिकूले द्वेषश्चेत्येवं रागद्वेषौ व्यवस्थितौ-अवश्यंभाविनौ । लोभमोहमदमत्सराणामुपलक्षणं । प्राधान्याद्द्वयोरेवोक्तिः । तदनुरूपा च प्राणिनां चेष्टेति निग्रहोऽकिंचित्करोयद्यपि, तथापि-तयोः-रागद्वेषयोः रागादिषड्वर्गवशं न गच्छेत्-न प्राप्नुयात् । कुतः हि यस्मादस्य श्रेयोर्थिनः तौ परिपंथिनौ-श्रेयोविघातकौ पापहेतूचातइत्यर्थः

इंद्रियस्येंद्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्तौ ह्यस्य परिपंथिनौ ॥ ३४ ॥ श्रेयान्स्वधर्मोविगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मोभयावहः ॥ ३५ ॥ अर्जुनउवाच ॥ अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः । अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥ ॥

निग्रहात्तद्यः फलाभावेऽप्यतिप्रयत्नवतोभवत्येव फलमिति भावः । उक्तं हि "संस्कारोबलवानेवे"त्यादि । एतच्च योग्यजनविषयं ध्येयं ॥ ३४॥ "ज्यायसीचेदि"त्यत्रार्जुनेन कर्मैव न कार्यं तत्रापि नरकाद्यनर्थहेतुरागद्वेषोपेततया घोरं युद्धाख्यं कर्म तु नैव कार्यमिति कृताक्षेपद्वयमध्ये प्राथमिकोलोकेऽस्मिन्नित्यादिनोत्तरितः । द्वितीयस्त्वधुना"युध्यस्व विगतज्वरः । तयोर्न वशमागच्छेदि"त्याद्युक्त्या स्मारितः सन्परिह्रियते ॥ ॥ श्रेयानिति । स्वधर्मः-स्ववर्णाश्रमोचितोधर्मः विगुणः-अंगहीनोऽपि स्वनुष्ठितात्-सर्वांगसाकल्येन कृतात्परधर्मादन्यवर्णाश्रमोचितधर्मादपि श्रेयान्-अधिकतरः । कुतः स्वधर्मे-युद्धादौ निधनमपि श्रेयः-श्रेष्ठतरं । परधर्मः-वर्णाश्रमांतरधर्मस्तु भयावहः । निषिद्धत्वात् अनर्थप्रापकोयतोतइत्यर्थः ॥ ३५ ॥ "तयोर्न वशमागच्छेदि"त्यत्रातिप्रयत्नवतः पापहेत्वरिषड्वर्गजयः शक्यइत्युक्तं । तेषु कोबलवान्? तं महाप्रयत्नेन जेष्यामीति भावेन पृच्छति ॥ ॥ अथेति । "मयि संन्यस्य कर्माणी"त्यादावुक्तसेतिकर्तव्यताककर्मकर्तव्यतारूपप्रकृतप्रमेये पापहेतुप्रश्नोऽनुपयुक्तः । तथापि तयोर्न वशमित्यर्धे कामाद्यरिषड्वर्गस्य पापहेतुत्वोक्त्या स्मारितं । तेषु प्रबलपापहेतुप्रश्नोऽयं प्रासंगिकइति भावेन गीताकृता प्रकृतादर्थादर्थांतरद्योतकोऽथशब्दः प्रयुक्तः । यद्वा "प्रकृतेः क्रियमाणानी"त्यत्रेश्वरस्य सर्वप्रेरकत्वोक्त्या तत्प्रेरकत्वस्य पार्थस्य देवत्वेन देवानां प्रेरकत्वस्य च ज्ञाततया तत्र प्रश्नायोगात् । इंद्रियस्येत्यत्र रागशब्दितकामाद्यरिषड्वर्गस्य प्रवर्तकत्वोक्त्या परमेश्वरात् देवजाताच्चाथानंतरं कामादिषट्सु बलवत्प्रश्नोयमिति द्योतनादानंतर्यवाच्ये वाऽयमथशब्दः । तथाचायमर्थः । अथ-परमेश्वराद्देवेभ्यश्चानंतरं अयं पुरुषः पापाचारमनिच्छन्नपि बलान्नियोजितइव पापं चरति । सकामादिषु केन बलवता प्रयुक्तः-प्रेरितश्चरति । हे वार्ष्णेय-वृष्णिकुलोद्भवेति ॥ ३६ ॥ काममूलत्वात्सर्वेषां सएव बलवानित्याह ॥ ॥ कामएषइति । एष त्वया पृष्टः

श्री भगवानुवाच ॥ कामएषक्रोधएषरजोगुणसमुद्भवः । महाशनोमहापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥ धूमेनाव्रियते वह्निर्यथाऽऽदर्शोमलेन च । यथोल्बेनावृतोगर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥ ॥

पुरुषस्य पापेषु बलवान्प्रवर्तकइत्यनूद्य कामइति विधीयते । एषकामः एषक्रोधः । कामात्क्रोधोभिजायतइत्युक्तेः कामजन्यत्वात्क्रोधस्य कार्यकारणयो"र्गोभिः श्रीणीतमत्सरमि"त्यादाविवाभेदोपचारेणेयमुक्तिः । सच क्रोधोरजोगुणात्समुद्भवतीति । सतथा कामनिमित्तकोरजोगुणपरिणाम इत्यर्थः । क्रोधइत्युपलक्षणं । तथाच कामनिवृत्तौ तन्मूलाः क्रोधादयः पापहेतवोनिवर्तितुं शक्यंतइति कामनिवृत्तावेवातिप्रयत्नः कार्य इति भावः । कामस्य यावदपेक्षितं दत्वा जेतव्यः सइत्यतः कामं विशिनष्टि । महाशनः-महदशनं भोग्यं विषयोयस्य सतथा । महान् पाप्मा-पापं-ब्रह्महत्यादिरूपं यस्मात्सतथा । इह-ऐहिकामुष्मिकपुरुषार्थविषये । एनं-कामं वैरिणं नित्यं अशुभेष्वेव प्रवर्तकतया मोक्षविरोधित्वात् शत्रुभूतं विद्धि-जानीहि । कामाभिमानी कालनेमिर्ज्ञेयः ॥ ३७ ॥ अशुभप्रेरकेषु क्रोधाद्यभिमान्यसुरेषु कामः कथं-बलवानित्यतआह ॥ ॥ धूमेनेत्यादिश्लोकद्वयेन । वन्हिर्यथा धूमेनाव्रियते तथा तेन-कामेनेदं उत्तमजीवजातं किंचिदावृतं । यथा

चादर्शोदर्पणोमलेनावृतः तथेदं मध्यमजीवजातं तेन कामेनाधिकमावृतं । यथाच गर्भः उल्बेन-गर्भवेष्टनचर्मणा व्रियते-आच्छाद्यते । तथेदमधमजीवजातं तेन कामेनात्यंतमावृतं । त्रिविधस्यापि जीवजातस्य यथायोग्यं यथावत्तया परावरतत्वज्ञानप्रतिबंधकः कामइत्यर्थः । यद्वा इदमित्यनेनेश्वरांतःकरणजीवाख्यं वस्तुत्रयं ग्राह्यं । वन्हिर्यथा धूमेनाव्रियते तथेश्वरोजीवगतकामेनावृतः । प्रकाशरूपोप्यग्निर्धूमेनावृतोन्यैर्यथा न दृश्यते तथेश्वरः स्वयं सर्वं जानन्नपि नान्यैर्ज्ञायतइत्यर्थः । आदर्शोमलेनेवांतःकरणं कामेनावृतं यथाऽदर्शोमलेनावृतोमुखाद्यभिव्यक्तिहेतुर्न भवति । तथा जीवांतःकरणं कामावृतं सदीश्वरं जीवं वा न प्रकाशयतीत्यर्थः । यथोल्बेनावृतोगर्भः तथा कामेनावृतोजीवः उल्बेन वेष्टितोगर्भोयथा व्यापाराक्षमस्तथा जीवोपि कामेनावृतोनेश्वरादिज्ञाने क्षमइत्यर्थः ॥ ३८ ॥ एवं ज्ञेयस्येश्वरादेः ज्ञानकारणस्य मनसः ज्ञातुर्जीवस्य प्रतिबंधकः कामइत्युक्तया ज्ञानोत्पत्तिप्रतिबंधकत्वमुक्तं । इदानीं शास्त्रतोजातमपि ज्ञानं स्वकार्या-

आवृतं ज्ञानमेतेन ज्ञानिनोनित्यवैरिणा । कामरूपेण कौंतेय दुष्पूरेणानलेन च ॥ ३९ ॥ इंद्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते । एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥ ॥ ॥

परोक्षज्ञानाय न प्रभवतीत्याह ॥ ॥ आवृतमिति । ज्ञानिनः-शास्त्रजनितज्ञानिनोपि ज्ञानं-कामावृतं भगवदपरोक्षज्ञानाय न प्रभवति । किमु गुरूपदेशमात्रजज्ञानवतइति सूचनाय ज्ञानिनइत्युक्तं । अन्यथा ज्ञानस्य ज्ञानिसंबंधाव्यभिचारात् । केनावृतं ज्ञानमित्यतउक्तं ॥ ॥ कामरूपेणेति । रूप्यते-निरूप्यतेनयेति रूपमाख्या कामेति रूपमाख्या यस्य तेन कामरूपेण-कामाख्येन नित्यवैरिणा-सदापकारिणा दुष्पूरेण-दुःखेन पूरयितव्येन । न केवलं दुष्पूरः किंत्वनलेन न विद्यतेऽलं-तृप्तिर्यस्य सोऽनलः तेन महतोभोग्यस्य विषयस्य प्राप्तावपि अधिकेच्छयाऽलंबुद्धिहीनेनेत्यर्थः ॥ ३९ ॥ यदर्थमर्जुनेन पापप्रवर्तकेषु बलवान्पृष्टः उत्तरितश्च तस्य शत्रोर्वधार्थमधिष्ठानमाह ॥ ॥ इंद्रियाणीति । अस्य कामाख्यशत्रोरिंद्रियाणि चक्षुरादीनि मनोबुद्धिश्चाधिष्ठानं । प्राधान्यज्ञापनाय मनोबुद्ध्योः

पृथगुक्तिः । अधिष्ठानतां व्यनक्ति ॥ ॥ एतैरिति । एतैर्मनोबुद्धींद्रियैर्विषयसंसृष्टैरेषः-कामाख्यशत्रुर्ज्ञानमावृत्य-ज्ञानजन्म प्रतिबध्येति वा * जातमपि ज्ञानं कार्याक्षमं कृत्वेति वार्थः देहिनं-जीवं विमोहयति ॥ ४० ॥ हि-यस्मात् हे भरतर्षभ त्वमिंद्रियाण्यादौ नियम्य-विषयसंगतान्यकृत्वा, संगतत्वे वा मनोबुद्ध्योर्विषयस्पर्शमकृत्वा, तयोर्विषयसंस्पर्शेऽपि क्षोभमप्राप्येति वाऽर्थः । ज्ञानविज्ञानयोर्नाशनं यस्मात्तं पाप्मानं-पापहेतुमेनं कामं प्रजहि-हतं कुरु । हताधिष्ठानोहि शत्रुर्नाशयितुं शक्यइति प्रसिद्धिद्योतकोहि शब्दः । इंद्रियजयः कामहननो-पायइति भावः ॥ ४१ ॥ शत्रुहनने आयुधरूपं ज्ञानं "एवं बुद्धेरि" त्युत्तरश्लोके वक्तुं ज्ञानविषयमाह ॥ ॥ इंद्रियाणीति । शरी-

तस्मात्त्वमिंद्रियाण्यादौ नियम्य भरतर्षभ । पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥ इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्योबुद्धेः परतस्तु सः ॥ ४२ ॥ ॥ ॥

रादिंद्रियाणि पराणि-उत्कृष्टानीत्यर्थः । "इंद्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परं मन":इत्यध्याहारेण योजना ध्येया । तथा "योबुद्धेः परतस्तुस" इत्यत्र "बुद्धेरात्मा महान्परः । महतःपरमव्यक्तं योऽव्याक्तात्परतस्तुस"इत्यपि ध्येयं । सपरमात्मेत्यर्थः ।"इंद्रियेभ्यः पराह्यर्थाः" इत्यादिकाठकश्रुतेः । अस्यार्थस्तु "देवेभ्यइंद्रियात्मभ्योज्यायांसोर्थाभिमानिनः । सोमवित्तपसूर्याप्याअश्व्यग्नींद्रेंद्रसूनवः । यमोदक्षश्चेंद्रियेशाः सौपर्णी वारुणी तथा । उमेति चार्थमानिन्यरितस्तोद्विद्व्येकदेवताः । मनोभिमानिनोरुद्रवींद्रशेषास्त्रयोपितु । ते श्रेष्ठा-र्थाभिमानिभ्यस्तेभ्योबुद्धिःसरस्वती । तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा । तस्यास्तु पुरुषोविष्णुः पूर्णत्वान्नैव तत्समः"इत्या-

दिकाठकभाष्यात् तथा " सर्वेभ्यः प्रवरादेवा" इत्यादितात्पर्यवाक्याच्चावसेयः ॥ ४२ ॥ एवं तारतम्यांतगतत्वेन ज्ञेयमुक्त्वा तज्ज्ञानमाह ॥ ॥ एवमिति । एवमुक्तदिशा बुद्धेर्महतोऽव्यक्ताच्च परं बुद्ध्वा आत्मानं-मनः आत्मना-बुद्ध्या संस्तभ्य-निश्चलं कृत्वा दुरासदं-

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना । जहि शत्रुं महाबाहो कामरूपं दुरासदं ॥ ४३ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे निवृत्तकर्मयोगस्यावश्यकार्यतया ज्ञापनरूप प्रपंचनं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

दुःखेनासादनीयं-निवर्तनीयमिति यावत् । कामरूपं शत्रुं जहि-हतं कुरु हे महाबाहोइति ॥ ४३ ॥ इति श्रीगीतार्थसंग्रहे राघवेंद्रयतिकृते निवृत्तकर्मरूप, ज्ञानोपायशब्दितयोगस्यावश्यकार्यतया ज्ञापनरूपप्रपंचनं नाम तृतीयोऽध्यायः ॥ ३ ॥

एवं प्रवर्तितं चक्रं नाऽनुवर्तयतीह यः ॥ अघायुरिंद्रियारामोऽमोघं पार्थ स जीवति, ॥ १६ ॥ सदाचारस्मृति, तद्विवरणरूप अस्मत्कृताह्निकपद्धत्युक्तप्रकारेण, ब्राह्ममुहूर्तादारभ्य पुनः ब्राह्मकालपर्यंतं ( सूर्योदयात्प्रहरपूर्वं ) सदाचरणचक्रस्य प्रवर्तकाप्रवर्तकयोस्तुतिनिंदापरमिदमेव पद्यम् ॥ तत्र स्तुतौ, ना, इति, अमोघं, इति पदच्छेदः ॥ अघसाधनजीवनेंद्रियेषु न रमतेऽसौ तथेति, अपृथक्पद तृतीयचरणार्थः, निंदायां तु प्रसिद्धएव,—इति श्री पांगरी आचार्यकृत 'एवं प्रवर्तित'मितिपद्यव्याख्यानम् ॥ ॥ ॥



॥ ॐ ॥ पूर्वाध्याये "नियतं कुरु कर्मत्वमि"त्यादिना किंचिद्विवृतस्य निवृत्तकर्मणः तथा "योबुद्धेः परतस्तु स"इत्यादिना तारतम्यांतगतत्वेनोक्तविष्णोस्तज्ज्ञानस्य च विस्तरेण निरूपणमत्राध्याये क्रियते । "एवं ज्ञात्वा कृतं कर्मे"त्यतः प्राक्तनग्रंथेन बुद्धेः परस्यविष्णोर्माहात्म्यमुच्यते । "श्रेयान्द्रव्यमयाद्यज्ञादि"त्यतः पूर्वेण निवृत्तस्य कर्मणोन्यस्माद्भेदः, निवृत्तकर्मण्येवोपासना यज्ञादिरूपेण भेदइत्येवं कर्मविस्तारोक्तिः । शेषेण ज्ञानमाहात्म्योक्तिरिति विवेकः । "मयिसर्वाणी"त्युक्तनिवृत्तकर्मलक्षणज्ञानोपायानुष्ठानाननुष्ठानाभ्यां "ये मे मतमि"त्यादिनार्थानर्थयोरुक्त्या अवश्यमनुष्ठेयमित्युक्तं । पुनस्तदनुष्ठाने रुच्युत्पादनाय पूर्वानुष्ठितश्चायं धर्मइत्याह ॥ ॥ इममित्यादित्रयेण । अव्ययफलत्वादव्ययं । इमं योगं "मयिसर्वाणी"त्यनेनोक्तं निवृत्तकर्मलक्षणं ज्ञानोपायं विवस्वते-आदित्याय । स च

श्रीभगवानुवाच । इमं विवस्वते योगं प्रोक्तवानहमव्ययं । विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥ एवं परंपराप्राप्तमिमं राजर्षयोविदुः । सकालेनेह महता योगोनष्टः परंतप ॥ २ ॥ सएवायं मया तेऽद्य योगः प्रोक्तः पुरातनः । भक्तोसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥ ॥ ॥

स्वपुत्राय मनवे श्राद्धदेवाय सच मनुः स्वपुत्रायेक्ष्वाकवे ॥ १ ॥ राजानश्च ऋषयश्चेति वा राजर्षयोराजश्रेष्ठाः निमिप्रभृतयः स्वपित्रिक्ष्वाकुप्रभृतिभिर्विदुरिति । अत्र प्रवचनवेदनशब्दैः विवस्वदादीनामनुष्ठानमप्युपलक्ष्यं । अद्यतनानामज्ञाने कारणमाह ॥ ॥ सइति । हे परंतप-शत्रुतापन सच योगः महता कालेन इह-लोके नष्टः-अदर्शनं गतः ॥ २ ॥ कुतः प्रोक्तइत्यतउक्तं ॥ ॥ भक्तोसीत्यादि । हि शब्दोहेतौ । भक्तत्वादिहेतुना हि-प्रोक्तोऽतएतद्रहस्यं उत्तमं चेति । हि यतोरहस्यं उत्तमं चातोभक्तत्वात्ते प्रोक्तोअवश्यानुष्ठानायेति वा । " कर्मणैवहि संसिद्धिमि"त्यत्र गृहस्थधर्मस्त्वया न त्याज्यइत्यत्र जनकादिज्ञान्याचारउक्तः । अत्र तु निवृत्तकर्मानुष्ठाने महदाचारः प्रमा-

णत्वेनोच्यते इति न तेन गतार्थत्वं शंक्यं ॥ ३ ॥"मयि सर्वाणी"त्यत्र हरेः पूज्यत्वं अर्जुनस्य पूजकत्वमित्युक्तं । तथा तस्यैव स्वतंत्र-कर्तृत्वमन्यस्य तदधीनकर्तृत्वमुक्तं । एवं च पूज्यपूजकत्वादिना तत्राभिप्रेतं जीवेश्वरभेदं प्रमाणेन ज्ञातुं पृच्छति ॥ ॥ अपरमित्या-दिना । एवं च नत्वेवाहमित्यादिना सर्वप्रकारेणोत्पत्तिनाशराहित्यं भगवतः श्रुतवान्कथमेवं अपरं-पश्चात्तनं भवतोजन्मेति पृच्छतीति चोद्यानवकाशः ॥४॥ अतएव विदितप्रश्नाभिप्रायोभगवान् "तव चे"ति "न त्वं वेत्थेति" पराक्त्वाज्ञत्वयोरुक्तिं कृतवान् । अन्यथा "बहूनि मे व्यतीतानि जन्मानी"त्येतावता प्रश्नपरिहारा "तव चे"त्याद्युक्तिर्व्यर्था स्यादिति ज्ञेयं ॥५॥ जन्मान्यतीतानि चेत्तर्हि न जननमरणरा-हित्यमीश्वरत्वं वा तव स्यात् । तथाचाविनाशित्वित्युक्तविरोधइत्यतआह ॥ ॥ अजोपीति । देहतोप्युत्पत्तिहीनोऽपि अव्ययोऽविनाशी

अर्जुनउवाच ॥ अपरं भवतोजन्म परं जन्म विवस्वतः । कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥ श्रीभगवानुवाच ॥ बहूनि मे व्यतीतानि जन्मानि तव चार्जुन । तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥ अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्म-मायया ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥

आत्मा-स्वरूपं देहश्च यस्य सोऽव्ययात्मा सन्नपि-भूतानामीश्वरः सन्नपि संभवामीत्यन्वयः । स्वरूपतोदेहतश्च अनादिनित्यस्य कथं जनि-रित्यतउक्तं ॥ ॥ प्रकृतिमधिष्ठायेति । प्रकृतिशब्दः । प्राकृतपरः । प्राकृतान्प्रकृतिजान्वसुदेवादीनधिष्ठायानुप्रविश्यात्ममायया-स्वेच्छया स्वज्ञानेन वा संभवामि-प्रादुर्भवामि । अतोजातइति लोकस्य भ्रांतोव्यवहारइति भावः । यद्वा स्वां-स्वकीयां मदधीनां प्रकृतिं तमोरूपाम-धिष्ठाय आश्रित्य संभवामि-संभूतोजातइति भ्रमविषयोभवामि लोकस्येत्यर्थः । स्वाधीनप्रकृत्या वसुदेवादिदेहान्निर्माय तेष्वनुप्रविश्य प्रादुर्भा-वकरणे किं प्रयोजनमित्यतोप्युक्तं । स्वां प्रकृतिमधिष्ठायेति । स्वस्वभावमनुसृत्य संभवामीति देवस्यैषस्वभावएव न प्रयोजनापेक्षेति भावः ।

एतेन जीवजन्मविलक्षणजन्मवत्त्वाद्धरेः पूज्यत्वादिना जीवभेदउपपादितइति ज्ञेयं ॥ ६ ॥ किंच स्वप्रयोजनाभावेऽपि लोकापेक्षितधर्मा-धर्मस्थापनोत्सादनार्थमवतारइति संभवकालोक्तिपूर्वकमाह ॥ यदेत्यादिश्लोकद्वयेन । युगेयुगइति-धर्महान्यधर्मवृद्धिकालइत्यर्थः । अव-तारं विना साधुपरित्राणादिसंभवेपि लीलयैवावतारद्वारा परित्राणादिकं स्वभावादेव तस्येति ज्ञेयं ॥ ७ ॥ ८ ॥ एवं स्वभावादेवावतारा-दिस्वव्यापारमुक्त्वा तज्ज्ञानफलमाह ॥ ॥ जन्मेति । एवमुक्तप्रकारेण दिव्यमलौकिकं मे जन्म कर्म च तत्वतोयथावत्तया योवेत्ति सज्ञानी देहं त्यक्त्वा पुनर्जन्म नैति-न प्राप्नोति । किंतु मामेति । अत्र जन्मकर्मरूपैकदेशज्ञानेन मुक्त्युक्तिर्योग्यगुणज्ञानोपलक्षणार्था ज्ञेया ॥ ९ ॥

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥७॥ परित्राणाय साधूनां विनाशाय च दुष्कृतां । धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥ जन्म कर्म च मे दिव्य-मेवं योवेत्ति तत्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥ वीतरागभयक्रोधा मन्मया-मामुपाश्रिताः । बहवोज्ञानतपसा पूतामद्भावमागताः ॥ १० ॥ ये यथा मां प्रपद्यंते तांस्तथैव भजा-म्यहं । मम वर्त्मानुवर्तंते मनुष्याः पार्थ सर्वशः ॥ ११ ॥ ॥ ॥ ॥**

एवं ज्ञात्वा मुक्ताः संति किमित्यतः संतीत्याह ॥ ॥ वीतरागेति । तज्ज्ञानस्य मुक्तिहेतुत्वं कुतइत्यतोवाऽऽह ॥ ॥ वीतेति । अप-गतरागभयक्रोधाः मन्मयाः-मत्प्रधानाः अहमेव प्रधानइति यावत् । यद्वा मन्मया-मत्प्रचुरा मामेव सर्वभूतेषु सत्ताप्रतीत्यादिप्रदं जानंतइति यावत् । मामुपाश्रिताः-मदेकशरणाः बहवोज्ञानाख्यतपसा ज्ञानेन तपसा चेति वा पूताः-दग्धकर्माणः मद्भावं-मयि सायुज्यलक्षणं भावं-स्थितिमागताः-प्राप्ताः ॥१०॥ ननु सामान्यतोविष्णुं सर्वोत्तमं ज्ञात्वा अन्यदेवताः पितृंश्चेष्ट्वा अंते तत्कर्म विष्णौ समर्पयंति ये त्रैविद्याः तेषामपि मोक्षश्चेत्कोविशेषस्त्वामुपाश्रितानामित्यतोन ज्ञानिनां त्रैविद्यानां च फलसाम्यं । तत्तत्सेवानुसारेणैव मोक्षस्वर्गरूपभिन्नफलदाना-

त्सेवायाश्च वैषम्यादितोन वैषम्यादिदोषइति भावेनाह ॥ ॥ ये यथेति । ये-ज्ञानिनस्त्रैविद्यावा यथा-येन प्रकारेण मोक्षेच्छया मद्यजनप्रकारेण स्वर्गादीच्छया अन्यदेवतायजनप्रकारेण मां प्रपद्यंते तांस्तथैव-तत्तद्भजनानुसारेणाहं भजामि-मोक्षस्वर्गफलदानेन सेवे । न गुणभावेनेत्यर्थः । फलतारतम्यहेतुरयं । ज्ञानिभ्यस्त्रैविद्यानां सेवायां विशेषः किं प्रकारइत्यतआह ॥ ॥ ममेति । हे पार्थ सर्वशः-सर्वे ज्ञानिनः त्रैविद्याश्च मनुष्याः मम वर्त्मानुवर्तंते मत्कर्मकर्तृत्वाद्यागीयहविरादिभोक्तृत्वान्मम वर्त्मानुवर्तिनएव सर्वइत्यर्थः ॥ ११ ॥ एतावान्विशेषः । अहमेव सर्वयज्ञानां भोक्ता प्रेरकश्च । तदेतज्ज्ञात्वा भागवताः निष्कामाः मामेव यजंते त्रैविद्याः तत्तत्त्वमजानानाः कर्मणां सिद्धिं कांक्षंतः अन्यदेवताइह यजंतइति । ननु''मम वर्त्मानुवर्तंत''इति यत्सर्वकर्मकर्तृत्वं सर्वकर्मभोक्तृत्वं चोक्तं तत्र सर्वकर्मकर्तृत्वं जीवानामस्वातंत्र्यद-

**कांक्षंतः कर्मणां सिद्धिं यजंतइह देवताः । क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥ चातु-**
**र्वर्ण्यं मया सृष्टं गुणकर्मविभागशः । तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥ ॥**

र्शनात्सिद्धं । यज्ञादिभोक्तृत्वं कुतोमानाज्ज्ञेयमित्यतआह ॥ ॥ क्षिप्रं हीति । यस्मान्मानुषे लोके कर्मजा सिद्धिः-कर्मजं फलं क्षिप्रं-शीघ्रं भवति तस्मान्मम वर्त्मानुवर्तंते सर्वयज्ञभोक्तृत्वादेव तत्फलमिह यजमानस्य क्षिप्रमुपलभ्यते नान्यथा । ''तस्मात्ते धनसनयः''[1]फल-मतउपपत्तेः''[2]इति श्रुतिसूत्रादिना हरेरेव फलदातृत्वादिति भावः । यद्वा त्रैविद्यानामन्यदेवतायाजित्वात्कथमुच्यते ''मां प्रपद्यंत''इत्यतः इह-लोके अन्यदेवतायजंतः । यज्ञकर्मणां सिद्धिं कांक्षंतः सर्वशोमनुष्यास्त्रैविद्याअंते मयि तत्कर्मसमर्पणेन मम वर्त्मानुवर्तंते-वैष्णवमार्गमेव अनुसृताभवंति । कुतएतत् । हि यस्मात्कर्मजा सिद्धिरिह लोके क्षिप्रं भवति अतइति । अन्यथा तन्न स्यादिति भावः ॥१२॥ भगवद्भजनं-विना कुतोन फलमित्यतोवा ज्ञानिनामिव त्रैविद्यानामपि कुतोन महाफलमित्यतोवा तस्य पितृत्वात्पितरं परित्यज्यान्यदेवतायाजिनां फलप्राप्ति-

---

१-छां. १ अ. ७ खं. ६ ऋ.-तस्मात्-भगवद्गायकत्वादेव भगवतएव ते गायकाः धनसनयः- धनप्रातिगन्तः, राजादेर्धनदाने स्वातंत्र्याभावादित्यर्थः. ॥ २-३ अ. २ पा. ३९ अ० अ तः-ईश्वरादेव, फलं, उपपद्यते,.



रेव नास्ति कुतोमहाफलप्राप्तिरिति भावेनाह ॥ ॥ चातुर्वर्ण्यमिति । चत्वारोवर्णाश्चातुर्वर्ण्यं । ''चतुर्वर्णादिभ्यः स्वार्थउपसंख्यान''मि-त्युक्तेः स्वार्थे ष्यञ् । यद्वा चतुर्णां वर्णानां समूहश्चातुर्वर्ण्यं । '' विचित्रा हि तद्धितगतिरि''ति समूहार्थे ष्यञ् । गुणकर्मविभागशः सत्वादिगुणविभागेन कर्मविभागेन च चातुर्वर्ण्यं-चतुर्वर्णसंघोमया सृष्टः । जनाः सात्विकसात्विकाः राजससात्विकास्तामससात्विकाश्चेति त्रिविधाः । तत्र राजससात्विकानामत्रग्रहणं । ''राजसास्तु नराविप्रा''इत्यष्टादशतात्पर्योक्तेः । ''सात्विकोब्राह्मण''इत्याद्येतद्भाष्योक्तेश्च । तथाच अतिसत्वाधिकरजोगुणयुक्ताःब्राह्मणाः । किंचित्सत्वाधिकरजोगुणयुक्ताः क्षत्रियाः । तमोपेक्षयाऽधिकं समसत्त्वं यद्रजस्तद्युक्ता-वैश्याः । रजोपेक्षयाऽधिकतमउपेतः तमोपेक्षयाधिकसत्वोपेतश्च शूद्रइति गुणविभागकृतोब्राह्मणादिवर्णः । ब्राह्मणादियोग्यकर्मविभागस्तु अष्टादशाध्याये''शमोदम''इत्यादिश्लोकत्रयेण वक्ष्यते । ननु यथा भवान्सर्वस्य कर्ता तथा तवाप्यन्यः कर्ताऽस्ति किमित्यतआह ॥ ॥

**न मां कर्माणि लिंपंति न मे कर्मफले स्पृहा । इति मां योऽभिजानाति कर्मभिर्न सबध्यते ॥ १४ ॥**

तस्येति । तस्य-चातुर्वर्ण्यस्याव्ययं कर्तारं मां विद्धि । तथाऽकर्तारमपि कर्त्रंतरहीनमपि विद्धि । मेऽन्यः कर्ता नास्तीत्यपि विद्धीत्यर्थः । यद्वा यदि त्वया चत्वारोवर्णाः सृष्टाः तर्हि कर्तृत्वाज्जीववत्तवापि कर्मलेपः स्यादित्यतः कर्मलेपाभावं''न मामि''त्यादिना वक्तुं लेपा-भावे हेतुं तावदाह ॥ ॥ तस्येति । तस्य कर्तारमपि मां जीवविलक्षणकर्तृत्वादकर्तारं कर्तृत्वहीनं विद्धीति ॥१३॥ ततः किमित्यतआह ॥ ॥ न मामिति । जीवविलक्षणक्रियावत्त्वेनाकर्तृत्वान्मां कर्माणि न लिंपंति । किंच जीवानां कर्मलेपे अभिनिवेशोहेतुः न च मेऽसावस्ती-त्याह॥ ॥ न मे कर्मफले स्पृहेति । फलप्राप्तिपर्यंतं मनोविक्षेपशब्दितोऽभिनिवेशः कर्मफले मे नास्ति । अतोपि न लिंपंति कर्माणीत्यर्थः । कैमुत्येनापि स्वस्यं कर्मालेपमाह ॥ ॥ इतीति । कर्मलेपोमे नास्ति तत्फले स्पृहाऽपि नेत्येवं मां योभिजानाति सोऽपि कर्मभिर्न बध्यते किम्वहमिति? इति योभिजानातीतिशाच्ये''मामि''ति पुनर्वचनं स्वस्य ईश्वराभेदाभिप्रायेण स्वात्मानमुद्दिश्य''न मां कर्माणि लिंपंती''त्यादि

योजानातीति जीवाभेदप्रतीतिनिरासाय मां योभिजानाति न स्वात्मानमिति ॥१४॥ यदि ज्ञानी कर्मभिर्न बध्यते तर्हि ममापि ज्ञानित्वात्क-र्मबंधाभावरूपमुक्तिसत्त्वात्कथं कर्मविधानमित्यतो ज्ञानिनामप्यधिकमोक्षाकांक्षया कर्मकरणे आचारोप्यस्तीत्याह ॥ ॥ एवमिति । प्राक् जनकादीनां विवस्वदादीनां च विद्यमानमपि ज्ञानित्वं भगवतान विवक्षितं । अत्र तु विवक्षितमिति न तेन पौनरुक्त्यं शंक्यं । पूर्वैर्मुमु-क्षुभिः । " आक्वेःतच्छीलतद्धर्मतत्साधुकारिष्वि"ति तत्साधुकारिण्युप्रत्ययः । अधिकमोक्षेच्छावद्भिरेवं उक्तप्रकारेण हरिं ज्ञात्वाऽपि कर्म कृतं । तस्मात्त्वमपि पूर्वैः कृतं पूर्वतरं ततोपि पूर्वभावि कर्म कुर्विति ॥१५॥ कुर्विति कर्तव्यतयोक्तकर्मस्वरूपं वक्तुं तत्र जिज्ञासाजननाय कर्मणोदुर्ज्ञेयत्वमाह ॥ ॥ किमिति । अकर्मपदेन कर्माभावोविरुद्धकर्म च ग्राह्यं । अत्र कर्मविषये कवयोऽपि मोहिताः-विभ्रमवंतः तर्हि किं

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः । कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥ किं कर्म**
**किमकर्मेति कवयोप्यत्र मोहिताः । तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥ कर्मणोह्यपि**
**बोद्धव्यं बोद्धव्यं च विकर्मणः । अकर्मणश्च बोद्धव्यं गहना कर्मणोगतिः ॥ १७ ॥ ॥ ॥**

तत्स्वरूपं ब्रूहीत्यतआह ॥ ॥तदिति । तस्मात्कवीनामपि मोहविषयत्वादिति वा यत् कर्तव्यत्वादिनोक्तं तत्कर्मेति वा ते-जिज्ञासवे प्रवक्ष्यामि । यज्ज्ञात्वाऽशुभात्कर्मबंधान्मोक्ष्यसे तत्कर्मेति वा । कर्म प्रवक्ष्यामीत्यकर्मविकर्मणोरप्युपलक्षणं । अनुष्ठेयतया प्राधान्यात्कर्मत्येवोक्तं । यद्वा ते कर्मेत्यत्राकारप्रश्लेषेणाकर्मेत्यपि पदच्छेदोज्ञेयः ॥१६॥ कर्मादिस्वरूपज्ञानमावश्यकमिति भावेनाह॥ ॥ कर्मणोहीति । पूर्वस्मात्कर्माक-र्मपदयोरनुवृत्तिः । कर्मणः सकाशादकर्म-कर्माकरणं विरुद्धकर्म च विविच्य बोद्धव्यं, विकर्मणोनिषिद्धकर्मणश्च कर्माकर्मच विविच्य बोद्ध-व्यं । अकर्मणश्च कर्म विकर्मच विविच्य बोद्धव्यं । कुतइत्यतआह ॥ ॥ गहनेति । पूर्वत्र दुर्ज्ञेयत्वोक्तावपि तच्छापादिप्रबलनिमित्तं न भवति । किंतु स्वभावतएवेति वक्तुं "गहना कर्मणोगति"रिति पुनर्वचनं । यद्वा "कर्म प्रवक्ष्यामी"ति प्रतिज्ञातं कर्मादिस्वरूपमाह ॥ ॥कर्मणो-हीति । अत्र कर्म न इति विकर्म न इति अकर्म न इति पदविभागः । "ब्रह्माणइंद्रोपयाहि विद्वानि" त्यत्र ब्रह्माणइत्यस्येव भिन्नपदस्यापि न

इत्यस्य रेफोत्तरस्य णत्वं ध्येयं । तेन''रषाभ्यां नोणः समानपद''इत्युक्तावपि छांदसं णत्वमत्र ध्येयं । कर्म नो-मत्तोभवतीति । विकर्म अकर्म च नो-मत्तोभवतीत्येवं योजना । कर्मादिस्वरूपं न स्वतंत्रं किंतु भगवदधीनं बोद्धव्यमित्यर्थः । न इति बहुवचनं बहुरूपत्वात् । एवं रूपेण कर्मस्वरूपज्ञानं दुःशकमित्याह ॥ ॥ गहनेति । एतच्च श्रोतुरधिकादरजननायोक्तं ॥ १७ ॥ कर्मादिस्वरूपं प्रपंचयन्तद्बोधं स्तौति ॥ ॥ कर्मणीति । वर्णाश्रमोचितकर्मणि क्रियमाणे सति अकर्म--कर्माभावं स्वस्य यः पश्येत् । भगवानेव कर्ता नाहं स्वतंत्रः किंतु तदधीनकर्तृशक्तिकः सन्करोमीति यः पश्येदित्यर्थः । अकर्मणि-जीवकर्तृककर्मकरणहीने सुप्त्यादौ जीवस्य कर्माकरणावस्थायामिति यावत् कर्म । यः पश्येत् । जीवव्यापारस्य भावे अभावे च सदा भगवानेव महदादि स्वप्नादौ गजादि करोतीति पश्येदित्यर्थः । अनेन हरेः परानपेक्षया कर्तृत्वं स्वस्य तदधीनकर्तृत्वं ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेत्युक्तं भवति । एतेन कर्माकर-

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः । सबुद्धिमान्मनुष्येषु सयुक्तः कृत्स्नकर्मकृत् ॥ १८ ॥ ॥

णमकर्म, निषिद्धं कर्म विकर्मेत्युक्तप्रायं । कर्मादिबोधं स्तौति ॥ ॥ सइति यएवं पश्येत्सबुद्धिमान् ज्ञानी । ''प्रशंसायां मतुप्'' । सएवयुक्तः ज्ञानोपायवान् । सएव कृत्स्नकर्मकृत् । स्वयोग्यकृत्स्नकर्मफलस्य ज्ञानस्य मोक्षस्य प्राप्तप्रायत्वादिति भावः । यद्वा करशब्दः सकारांतः कर्मविधिवाची तेन मीयते--विषयीक्रियते इति कर्म । उपपदस्य टिलोपोमातेः कनिन्प्रत्ययः । ''करोस्मिन्मीयतइति कर्म जीवउदाहृतः'' । इति निर्वचनात् विधिबद्धत्वात्कर्मशब्दार्थोजीवः । कर्मविधेस्तत्फलस्य चाभावादकर्मपदेनेश्वरोग्राह्यः । तथाच कर्मणि- विधिबद्धे जीवे अस्वातंत्र्याद्धेतोरकर्म-कर्माभावं यः पश्येत् । तथाऽकर्मणि-विष्णौ कर्म यः पश्येत् सर्वकर्मकर्तृत्वात्तदीयमेव सर्वकर्मेति पश्येत् सबुद्धिमान्न ज्ञानीत्येवं प्राग्वदेव स्तुतिपरता अर्थस्य ध्येया ॥ १८ ॥

न केवलं कर्तृत्वाभिमानत्यागेन वर्णाश्रमोचितकृत्स्नकर्मकृत्त्वं । किंतु कामादिपरित्यागेनापि भाव्यमिति भावेन कर्मस्वरूपमेव प्रपंचयति ॥ ॥यस्येत्यादिश्लोकपंचकेन । यस्य-पुंसः सर्वे समारंभाः-सर्वकर्मोपक्रमाः कामसंकल्पवर्जिताः-कामः-फलेच्छा, अनेनेदं स्वर्गादि साधयिष्यामीति संकल्पः, ताभ्यां हीनाः । तं ज्ञानाग्निदग्धकर्माणं हरेरेव स्वतंत्रकर्तृत्वं ज्ञात्वा पश्चात्स्वस्य स्वातंत्र्येण कर्माभावज्ञानित्वं ज्ञानाग्निदग्धकर्मत्वं तादृशं बुधाः ज्ञानिनः पंडितं तत्वज्ञानिनमाहुः ॥ १९ ॥ कामसंकल्पवर्जितत्वमात्रेण न कर्मस्वरूपं पूर्णं। किंतु कर्मफलस्नेहत्यागेनापि भाव्यमित्याह ॥ ॥ त्यक्त्वेति । कर्मणि फले च आसंगं स्नेहं च त्यक्त्वा नित्यतृप्तोनिराश्रयः-नित्यतृप्तनिराश्रयभगवत्सरूपोस्मीति ज्ञानवान् । कर्मण्यभिप्रवृत्तोपि सनैव किंचित्करोति स्वातंत्र्याभावात् । अनिराश्रयइति वा पदविभागः । भगवदाश्रयत्वादनि-

**यस्य सर्वे समारंभाः कामसंकल्पवार्जिताः । ज्ञानाग्निदग्धकर्माणं तमाहुः पंडितं बुधाः ॥ १९ ॥ त्यक्त्वा कर्मफलासंगं नित्यतृप्तोनिराश्रयः । कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोति सः ॥२०॥ निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥ यदृच्छालाभसंतुष्टो द्वंद्वातीतोविमत्सरः । समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२ ॥ ॥ ॥ ॥**

राश्रयइत्यर्थः ॥ २० ॥ कामसंकल्पादित्यागोपायमाह ॥ ॥ निराशीरिति । आत्मा-मनः यतौ-नियतौ चित्तात्मानौ यस्य सयतचित्तात्मा भूत्वा निराशीः-निष्कामः त्यक्तसर्वपरिग्रहश्च भवतीत्यर्थः । मनोनिग्रहेणैव कामादित्यागइति भावः । परिग्रहत्यागोनाम देहेंद्रियादिपरिग्रहे अभिमानत्यागोज्ञेयः । केवलं शारीरं-शरीरयात्रार्थं । यद्वा केवलं कामादिरहितं शारीरं शरीरेंद्रियादिकरणकं कर्म कुर्वन् किल्बिषं कर्मबंधं नाप्नोति । "नैव किंचित्करोतीति" प्रागुक्तस्य कर्मणां मिथ्यात्वादिति विपरीतभ्रमनिरासाय "नाप्नोति किल्बिषमिति तदभिप्रायोत्र गौण्या वृत्त्या वर्णितः ॥ २१ ॥ यतचित्तात्मा कीदृशइत्यतस्तस्य लक्षणमाह ॥ यदृच्छेति । अप्रयत्नलब्धेन तृप्तिमान् । सुखदुःखलाभालाभादिद्वंद्वान्यतीतोद्वंद्वातीतः । विमत्सरः-स्वानधीनत्वनिमित्तमनःखेदहीनः । द्वंद्वातीतत्वं किं प्रकारमिति जिज्ञासायां तद्विवृणोति ॥ समइत्यादिना । सिद्ध्यसिद्ध्योरुत्सेकानुत्सेकहीनत्वरूपसमत्वमेव द्वंद्वातीतत्वमित्यर्थः एवंविधः कर्म कृत्वापि तेन न निबध्यतइति । यदृच्छालाभसंतुष्टत्वादिकं यतचित्तात्मनोलक्षणमित्युक्तं भवति ॥ २२ ॥ विक्षिप्य प्रागुक्तं पिंडीकृत्य दर्शयति ॥ ॥ गतसंगस्येति । गतसंगस्य-फलस्नेहरहितस्य मुक्तस्य-देहाद्यभिमानहीनस्य स्वातंत्र्याभिमानहीनस्येति वा ज्ञानावस्थितचेतसः-विष्णुज्ञानेऽभिनिविष्टचित्तस्य । यज्ञाय-विष्णवे तत्प्रीत्यर्थं कर्माचरतः- कुर्वतः कर्म प्रविलीयते-बंधकं न भवतीत्यर्थः । "यस्ये"त्यादिना यत्कामादिवर्जनमुक्तं 'तद्गतसंगस्ये'त्यनेन 'त्यक्तसर्वपरिग्रह' इत्येतन्मुक्तस्येत्यनेन । "कर्मण्यकर्मेति" "नित्यतृप्त" इति च 'ज्ञानावस्थितचेतस' इत्यनेन पिंडीकृत्य

**गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥ ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणा हुतं । ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥ ॥ ॥ ॥**

प्रदर्शितं ध्येयं ॥ २३ ॥ एवं "तत्ते कर्म प्रवक्ष्यामी"ति प्रतिज्ञातं कर्मस्वरूपं संक्षेपविस्तराभ्यां प्रतिपाद्य "गतसंगस्ये"त्यनेनोपसंहृत्याधुना ज्ञानावस्थितचेतस्त्वं स्पष्टयति ॥ ॥ ब्रह्मेति । अर्प्यते-समर्प्यतेऽनेनेत्यर्पणं-दर्वीपिठरादि । अर्पणहविरग्नीनां ब्रह्माभेदउच्यते ब्रह्म च तदर्पणं चेत्यादिव्युत्पत्तेः । तथा समाधिना सह-सहितं कर्म चाग्निहोत्रादि ब्रह्मेति कर्मसमाध्योरपि । तथा ब्रह्मणा हुतमित्यत्रापि प्रायपाठाद्ब्रह्मैव हुतमिति होमस्यापि ब्रह्माभेदः सतु अर्पणादिसत्ताप्रतीत्यादेर्ब्रह्माधीनत्वाभिप्रायेण । "त्वदधीनं यतस्सर्वमतः सर्वमितो भवानि"त्यादेः । "इति मां योभिजानाती"ति श्लोकांते शेषः । तेनैव ब्रह्म गंतव्यमित्यन्वयः । एतेन ज्ञानावस्थितचेतःपदोक्तं परमेश्वरज्ञानमेवंरूपमिति स्पष्टीकृतं भवति । यद्वा ब्रह्मणा हुतमिति असामानाधिकरण्यनिर्देशप्रायपाठात । ब्रह्मण्यर्पणं ब्रह्मणोहविः ब्रह्मणोग्नौ ब्रह्मणःकर्म ब्रह्मकर्म न केवलं कर्ममात्रं ब्रह्मणः किंतु समाधिना सहितं कर्म ब्रह्मणइत्यर्थः । अर्पणादिकं सर्वं तत्स्वामिकमिति योजानाति

तेन ब्रह्म गंतव्यमिति योजना । एतेन प्राङ्मुक्तपदेनोक्तस्वातंत्र्याभिमानत्यागः कर्मांगमुक्तः सकुत्र कार्यः त्यक्तस्वातंत्र्याभिमानं च वस्तु किमधीनं ज्ञेयं यज्ञायेत्युक्तयज्ञार्थत्वं च किमिति शंकात्रयं निरस्तं । हविरादौ स्वातंत्र्याभिमानत्यागब्रह्माधीनत्वयोः विष्ण्वर्पणमेव यज्ञार्थत्वमित्यस्य चात्र प्रतीतेरिति ॥ २४ ॥ पूर्वं भगवदधीनकर्तृत्वानुसंधानपूर्वं तत्प्रीत्युद्देशेन वर्णाश्रमविहितानुष्ठानं कर्मेति सामान्यतः कर्मस्वरूपमुक्तं तद्यज्ञादिभेदभिन्नमित्याह ॥ ॥ दैवमिति । दैवं-विष्णुं यज्ञं यथा भवति तथा परे-केचन योगिनोयतयः पर्युपासते । यज्ञपदमत्रोपासनरूपक्रियाविशेषणं । दैवमेवेत्येवकारोपि क्रिययैवान्वेति । भगवदुपासनमेव यज्ञतयाऽनुतिष्ठंति केचिद्यतयइत्यर्थः । एतेना-यज्ञस्येत्यादिना यज्ञादिहीनस्य"नायं लोकोस्ती"ति वक्ष्यमाणतया यत्याश्रमविलोपप्रसंगइति शंका निरस्ता । तेषामपि भगवदुपासनारूप-यज्ञसत्वादिति । यद्वा दैवं यज्ञमिति सामानाधिकरण्यं । यज्ञरूपं भगवंतं योगिनः पर्युपासते-यज्ञत्वेनोपासते । तेषां तथोपासनमेव यज्ञ

**दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥२५॥ श्रोत्रादीनिंद्रियाण्यन्ये संयमाग्निषु जुह्वति । शब्दादीन्विषयानन्ये इंद्रियाग्निषु जुह्वति ॥ २६ ॥**

इति भावः । भगवतः स्वानंदरूपहविर्भोक्तृत्वात्स्वस्यैवाग्निरूपत्वाचेति ज्ञेयं । ब्रह्माग्नौ-ब्रह्माख्याग्नौ यज्ञेनाग्निहोत्रादियज्ञेन यज्ञं-भगवंतं प्रति जुह्वति । यद्वा ब्रह्माग्नौ यज्ञमग्निहोत्रादिकं यज्ञेनैव-यज्ञनामकेन भगवता निमित्तेन जुह्वति-समर्पयंति । सर्वं यज्ञनामकविष्ण्वधीनं ज्ञात्वा स्वस्य स्वातंत्र्याभिमानत्यागेन कृतं कर्म विष्णौ समर्पयंतीति यावत् । यज्ञेनैवेत्यग्रे सर्वत्रान्वेति ॥ २५ ॥ अन्ये योगिनः श्रोत्रादीनि ज्ञानेंद्रियाणि संयमाग्निषु जुह्वति-भगवत्पूजात्वेनेंद्रियानियमनं कुर्वंते । प्रत्याहारादिना सर्वं यज्ञाख्यहर्यधीनं न क्वचिदपि स्वातंत्र्यमिति ज्ञात्वेत्यर्थः । एतदपि ब्रह्मार्पणरूपमेव विवक्षितं । एवमग्रेपि । अतएव वक्ष्यति "एवं बहुविधायज्ञा"इति ज्ञेयं । अन्ये योगिनः शब्दादीन्-शब्दस्पर्शरूपरसगंधान्विषयान् श्रोत्रादींद्रियाख्याग्निषु जुह्वति । यज्ञेनैव यज्ञाधीनं ज्ञात्वा स्वस्वातंत्र्याभिमानत्यागेन भगव-

त्पूजात्वेन विषयान्भुंजतइत्यर्थः ॥ २६ ॥ अपरे योगिनः सर्वाणींद्रियकर्माणि-वाक्पाणिपादपायूपस्थरूपकर्मेंद्रियव्यापारान् तथा प्राण-कर्माणि-प्राणापानादिव्यापारांश्च आत्मसंयमयोगाग्नौ जुव्हति-आत्मनो-मनसोयः संयमः सएव योगः-उपायः सएवाग्निः ज्ञानदीपिते तत्र जुव्हति-यज्ञेनैव भगवदधीनताज्ञानपूर्वं स्वातंत्र्याभिमानत्यागेन मनोनिगृह्य कर्मेंद्रियादिव्यापारान् भगवत्पूजात्वेन नियच्छंतीत्यर्थः ॥२७॥ अपरे द्रव्ययज्ञाः-द्रव्यस्य याजकाः । कर्त्रर्थोयं यज्ञशब्दः । तपोयज्ञाः-कृच्छ्रचांद्रायणादितपोहर्यर्पणबुद्ध्या हरौ जुव्हतीति तपोयज्ञाः । भगवत्पूजात्वेन ध्यानं कुर्वंतीति योगयज्ञाः । विष्णुपूजात्वेन स्वाध्यायमधीयतइति स्वाध्याययज्ञाः । यज्ञेनैवेति सर्वत्रान्वेतीत्युक्तं तदर्थः प्राग्वत् । ज्ञानयज्ञाः-भगवत्पूजात्वेन श्रवणादि कुर्वंतीति । शंसितव्रताः-तीक्ष्णव्रताः यतयोयत्नशीलाः ॥ २८ ॥ अपरे प्राणायामपरा-

सर्वाणींद्रियकर्माणि प्राणकर्माणि चापरे । आत्मसंयमयोगाग्नौ जुव्हति ज्ञानदीपिते ॥ २७ ॥ द्रव्ययज्ञास्त-पोयज्ञा योगयज्ञास्तथाऽपरे । स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥ अपाने जुव्हति प्राणं प्राणेऽपानं तथाऽपरे । प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥ अपरे नियताहाराः प्राणान्प्रा-णेषु जुव्हति । सर्वेप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥३०॥ यज्ञशिष्टामृतभुजो यांति ब्रह्म सनातनम् । नायं लोकोस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥ ॥ ॥ ॥ ॥

यणाः प्राणापानगतीरुद्ध्वा-निरुध्य अपाने प्राणं जुव्हति-तत्र प्रवेशयंति प्राणे चापानं जुव्हति कुंभकस्थाएवेत्यर्थः ॥ २९ ॥ अपरे नियताहाराः संतः प्राणानिंद्रियाणि श्रोत्रादींद्रियवृत्तीः प्राणेष्विंद्रियेषु जुव्हति-संकुचितवृत्तीन्प्राणान्कुर्वंति नियताहारत्वेनेन्द्रियाणां शक्ति-र्ह्रासादिति भावः । यद्वा प्राणान्-वागादींद्रियदेवान् मनःप्रभृत्युत्तमदेवाधीनान्ध्यायंतीत्यर्थः । अस्मिन्पक्षे भगवत्पूजात्वेन नियताहारः पृथग्यज्ञोज्ञातव्यः । तान्स्तौति ॥ ॥ सर्वेप्येतइति । यज्ञविदोयज्ञज्ञाः यज्ञक्षपितकल्मषाः-यज्ञानुष्ठाननाशितपापाः ॥ ३० ॥ एवं यज्ञ-भेदान् ज्ञात्वाताननुतिष्ठतामननुतिष्ठतां च फलभेदमाह ॥ ॥ यज्ञेति । यज्ञे देवतायै दत्तहविःशेषोऽमृतमुच्यते तद्भुजः यज्ञानुष्ठातारः

इति यावत् सनातनमनादिनित्यं ब्रह्म यांति-प्राप्नुवंति । अयज्ञस्य तु अयं लोकः अल्पसुखोपि मानुषोलोकोनास्ति । कुतोऽन्यः-स्वर्गादिः । अतोयज्ञा सर्वथाः कार्याइति भावः ॥३१॥ उक्तान्कर्मभेदानुपसंहरति ॥ ॥ एवमिति । एवं दैवमेवेत्यादिना श्लोकषट्केनोक्तदिशा मानसिकवाचिककायिकभेदेन बहुप्रकाराः यज्ञाः ब्रह्मणोहरेर्मुखे वितताः-विस्तृताः तस्य सर्वयज्ञभोक्तृत्वात् । "अहं हि सर्वयज्ञानां भोक्ते" त्यादेः । श्रोत्रादीत्यादिनोक्तेंद्रियनियमनादिरूपयज्ञेषु तदाराध्यस्यानुक्तेर्ब्रह्मणोन्यस्तदाराध्यइति शंकानिरासाय ब्रह्मणोमुखे विततइत्युक्तं । ननु यज्ञानां बहुविधत्वे ज्ञानयज्ञादिनैवालं किं कर्मात्मकेन युद्धेनेत्यत आह ॥ ॥ कर्मजानिति । तान्प्रागुक्तान्सर्वान्यज्ञान्कर्मजान्कर्मरूपान्विद्धि-जानीहि । मानसिकवाचिककायिककर्मजान्विद्धीति वार्थः । ततः किमित्यतआह ॥ ॥ एवमिति । मानसिकवाचिकादिसर्वयज्ञाः कर्मात्मकाइति जानासि चेत् तर्हि युद्धादिस्वविहितकर्माणि कृत्वैव विमोक्ष्यसे-संसारादात्मानं मोक्तु ( मोचयितु ) मिच्छसि । सर्वेषां कर्मज-

**एवं बहुविधायज्ञा वितता ब्रह्मणोमुखे । कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥ ॥**

त्वज्ञाने सति मोक्षार्थं युद्धादिकं कर्तव्यमिति तवैवेच्छा भविष्यतीत्यर्थः । सर्वेषां यज्ञत्वे ज्ञानोपासनस्वाध्यायाद्यकर्मरूपयज्ञेनैव भगवत्प्रीतिसिद्धेः किं कर्मात्मकयुद्धेनेति, पार्थाभिप्रायस्येदमुत्तरं ज्ञात्वेत्यादि ॥ ॥ तस्यायं भावः । युद्धं हित्वा मोक्षार्थं यदुपासनादिकं करिष्यसि तदपि कर्मात्मकमेव । तथाच युद्धत्यागे विहितधर्मत्यागएव कृतः स्यात् । न तु कर्मत्यागः । अतएवं जानतः तव विहितं युद्धादिकं न त्याज्यमिति । एवमभिप्रायाभावे कर्मजानित्यर्थस्य प्रकृतानुपयोगःस्यात । ननु सत्यमेवमथाप्ययमर्थोॡडंतशब्देन कथंलभ्यतइति चेत् मैवं, नायं ॡडन्तः किंतु मुचॢमोक्षणइत्यतः सन्नंतात्कर्मकर्तरि लट्प्रत्यये सति विमोक्ष्यसइति रूपं । यद्यपि धातोःकर्मणइति सन्प्रत्यये सन्यङोरिति द्विर्वचने हलंताचेति सनः कित्वेन गुणाभावे च मुमुक्ष्येति भाव्यं । तथापि गुणाभ्यासलोपौ छांदसावित्युपेत्य सन्नंतान्मोक्षशब्दाद्वर्तमाने लडिति लट् प्रत्यये तस्य सिबादेशे

"कर्मवत्कर्मणा तुल्यक्रिय"इति सूत्रेण कर्तुः कर्मवद्भावे कर्मकारकनिमित्तयगात्मनेपदचिण्वद्भावादिकार्याणि लभतइत्युक्तेर्यकि सत्यतोलोपे मोक्ष्यसइति रूपसिद्धिर्ज्ञेया । ॡडंतत्वपक्षे त्वयमर्थः । सर्वेषां कर्मजत्वं ज्ञात्वा तान्यनुष्ठाय मुक्तोभविष्यसीति॥ ३२ ॥ उक्तयज्ञेषु कोयज्ञः श्रेष्ठइति जिज्ञासायामाह ॥ ॥ श्रेयानिति । द्रव्यमयादिति प्रागुक्तयज्ञांतराणामुपलक्षणं । देवतोद्देशेन द्रव्यत्यागादिरूपायज्ञाद्भगवज्ज्ञानसंपादनरूपोयज्ञः श्रेयान्-श्रेष्ठः । कुतइत्यतउक्तं ॥ ॥ सर्वमिति । अखिलं-खिलं-सशेषं न भवतीत्यखिलं । "समुद्रं मनसा ध्यायीते"त्यादिकर्मसमृद्ध्यर्थोपासनाद्यंगसहितं सर्वं कर्म ज्ञाने परिसमाप्यते-पूर्यते । ज्ञाने जाते ज्ञानलक्षणफलेन सफलं भवतीत्यर्थः । यद्वा अखिलमिति विभागः आसमंतात् खिलमल्पमत्यल्पमपि सर्वं कर्म ज्ञाने जाते परिसमाप्यते-फलवद्भवतीत्यर्थः ॥ ३३ ॥

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ॥ ३४ ॥ यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पांडव । येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथोमयि ॥ ३५ ॥ ॥ ॥**

कर्मणोज्ञानमधिकमित्युक्त्वा तत्संपादयेत्याह ॥ ॥ तदिति । तस्माज्ज्ञानस्याधिकत्वात्कर्मणां ज्ञानेनैव फलवत्त्वादिति वा । तत्वदर्शिनोज्ञानिनः प्रणिपातेन-त्वत्कृतवंदनेन त्वत्सेवया त्वत्कृतपरिप्रश्नेन च ते-तुभ्यं ज्ञानं-ज्ञानजनकं शास्त्रमुपदेक्ष्यंति । तेभ्यः तज्ज्ञातव्यमर्थं विद्धि-जानीहि । तदित्यस्यावृत्तिः । अर्जुनस्य ज्ञानित्वेपि ज्ञानतिरोभावनिवृत्त्यर्थं विद्धीत्युक्तिः । पार्थं प्रति ज्ञानोपदेशार्थमेव कृष्णास्य प्रवृत्तत्वात् । "नत्वेवाहमि"त्यादिना संक्षेपेणोपदिष्टत्वात् । "ज्ञानं तेहं सविज्ञानमि"त्यादिना विस्तरेणोपदेक्ष्यमाणत्वात् तदविरोधायोपदेक्ष्यंतीत्यस्योपदेक्ष्यामइत्यर्थोज्ञेयः ॥ ३४ ॥ स्वेनोपदेक्ष्यमाणं ज्ञानं स्तौति भगवान् ॥ ॥ यज्ज्ञात्वेति । यत्-मया वक्ष्यमाणं ज्ञात्वा पुनः एवमाद्याध्यायोक्तदिशा बंधुविषयमोहं न यास्यसि । हे पांडव येन-ज्ञानेन अथोमोहनाशाद्धेतोरात्मनि-सर्वांतर्यामिणि-मयि भूता-

न्यशेषेण द्रक्ष्यसि-मदाधारत्वेन सर्वभूतानि तिष्ठंतीति द्रक्ष्यसीत्यर्थः । यद्वा आत्मनि-सर्वत्र व्याप्ते मयि अथोऽव्याप्तत्वादेव सर्वभूतान्यशेषेण द्रक्ष्यसि येन-ज्ञानेन तद्विद्धि-तज्ज्ञानविषयं जानीहीति विद्धि-प्राप्नुहीति वान्वयः ॥ ३५ ॥ 'येने'ति करणतया निर्दिष्टं ज्ञानमेव स्तौति पुनः ॥ ॥ "अपि चेदसी"त्यादित्रयेण । सर्वेभ्यः पापेभ्यः-पापकृद्भ्योपि पापकृत्तमश्चेदसि-अतिशयेन पापकारी चेदसीति यावत् । तथापि सर्वं वृजिनं ज्ञानप्लवेनैव-ज्ञानाख्यनावा संतरिष्यसि-पापादतिक्रांतोभविष्यसीत्यर्थः ॥ ३६ ॥ यथा एधांसि-दारूणि समिद्धः-प्रदीप्तः अग्निः भस्मसात्कुरुते तथा ज्ञानाख्योग्निः सर्वकर्माण्यप्रारब्धानि भस्मसात्कुरुते । अतः प्रशस्तं ज्ञानमिति ॥ ३७ ॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः । सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥३६ ॥ यथैधांसि समिद्धोग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥ न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विंदति ॥ ३८ ॥ श्रद्धावान्लभते ज्ञानं मत्परः संयतेंद्रियः । ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिगच्छति ॥ ३९ ॥ अज्ञश्चाश्रद्धधानश्च संशयात्मा विनश्यति । नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥ ॥ ॥

इह लोके ज्ञानेन सदृशं पवित्रं न हि विद्यते । तज्ज्ञानं स्वयं योगसंसिद्धः योगविषये सम्यक् सिद्धिमान्संसिद्धिज्ञानोपायः सन् कालेन बहुना आत्मनि विंदति-प्राप्नोति ॥ ३८ ॥ एवं ज्ञानं प्रशस्य तस्यांतरंगसाधनं फलं चाह ॥ ॥ श्रद्धावानिति । आस्तिक्यबुद्धिमान्मत्परोमदेकनिष्ठः संयतेंद्रियोजितेंद्रियश्च ज्ञानं लभते । ज्ञानं लब्ध्वा परां शांतिं मोक्षमचिरेणाविलंबेनाधिगच्छति-प्राप्नोति असति प्रारब्धे । सति तु तस्मिन्न तद्भोगानंतरमिति ॥ ३९ ॥ ज्ञानतत्साधनयोरभावे तद्विरोधिविपरीतज्ञानादौ चानिष्टमाह ॥ ॥ अज्ञश्चेति ।

नञोऽभावविरोधरूपार्थद्वयं ध्येयं । तत्वविषयसंशयात्माच विनश्यति-नरकं प्रतिपद्यते । किंच संशयात्मनः अयं-मानुषोलोकः परः-स्वर्गा दिर्वा नास्ति । किंबहुना सुखं नास्तीत्यर्थः ॥ ४० ॥ ज्ञानसाधनमनुवदन्ज्ञानफलं प्रपंचयति ॥ ॥ योगेति । भगवति मनोयोगेन तस्मिन्संन्यस्तं-समर्पितं कर्म येन तं योगसंन्यस्तकर्माणं । ज्ञानेन छिन्नसंशयं आत्मवंतं-परमात्मभक्तं । हे धनंजय कर्माणि न निबध्नंति-

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयं । आत्मवंतं न कर्माणि निबध्नंति धनंजय ॥ ४१ ॥ तस्मादज्ञान-संभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः । छित्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥ ॐतत्सदिति श्रीमद्भ-गवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ( ज्ञानयोगो ) निवृत्तकर्मणः तारतम्यां-तगत्वेन विष्णोः तज्ज्ञानस्य च विस्तृतवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ ॥

मुक्तोभवतीत्यर्थः ॥ ४१ ॥ उपपादितं कर्मणः कर्तव्यत्वमुपसंहरति ॥ ॥ तस्मादिति । ज्ञानोपायानुष्ठानाननुष्ठानयोरर्थानर्थवत्त्वादज्ञा-नसंभूतं हृद्गतमात्मनः संशयं ज्ञानासिना-ज्ञानाख्यखड्गेन छित्वा योगं-ज्ञानोपायं कर्मानुतिष्ठ-उद्युक्तोभवेति ॥ ४२ ॥ इति श्रीगीतार्थ-संग्रहे राघवेंद्रयतिकृते निवृत्तकर्मणः तारतम्यांतगत्वेन विष्णोः तज्ज्ञानस्य च विस्तृतवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥



ॐ"योगस्थः कुरु कर्माणि संगं त्यक्त्वे"त्यादिना द्वितीये संक्षेपेणोक्तस्य तृतीयादौ विशेषतः स्पष्टीकृतस्य फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितकर्मानुष्ठानरूपस्य कर्मयोगस्य यदंशद्वयं कामादिवर्जनरूपं उक्तरूपकर्मानुष्ठानाख्यं चेति तदंशद्वयरूपं तृतीयोक्तमत्राध्याये प्रपंच्यते ॥ ॥ संन्यासमिति । पूर्वाध्याये"यदृच्छालाभसंतुष्ट"इत्यादिना कामादिवर्जनरूपं संन्यासं "कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतमि"त्यादिना वर्णाश्रमविहितकर्मणां योगं ईश्वरार्पणबुद्ध्यानुष्ठानरूपं कर्मयोगं च हे कृष्ण शंससि-कथयसि । एतयोरुक्तलक्षणयोः-संन्यासकर्मयोगयोः यच्छ्रेयः-अधिकं भवति तदेकं मे-मम सुनिश्चितं ब्रूहि । संन्यासस्याधिकत्वे तमेव ग्रहिष्यामि किं तद्विरोधिना कामद्वेषादियुतेन युद्धाख्यकर्मयोगेनेति भावः । यद्वा पूर्वत्र"योगसंन्यस्तकर्माणमि"त्यादौ पठितः संन्यासशब्दोयत्याश्रमविषयः"योगमातिष्ठे"त्यादौ श्रुतोयोगशब्दोगृहिविषयइति प्रकल्प्य यतीनां सर्वकर्मत्यागेन ज्ञानमात्राधिकारित्वात् गृहिणां च ज्ञानत्यागेन

॥अर्जुनउवाच॥ संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि। यच्छ्रेयएतयोरेकं तन्मे ब्रूहि सुनिश्चितम्॥१॥
श्रीभगवानुवाच। संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ। तयोस्तु कर्मसंन्यासात्कर्मयोगोविशिष्यते ॥२॥

कर्ममात्राधिकारित्वात् तयोरेकपुन्निष्ठत्वं न युक्तमिति भावेन योगसंन्यासयोर्मध्ये यच्छ्रेयस्तदेकं ग्रहिष्यामीति भावेन तयोर्मध्ये श्रेयः पृच्छति ॥ ॥ संन्यासमिति । कर्मणां संन्यासं-यत्याश्रमं"संन्यस्तकर्माणमि" त्यनेन शंससि । पुनः कर्मणां योगमनुष्ठानलक्षणं गृहस्थाश्रमं च योगमातिष्ठोत्तिष्ठेत्यनेन शंससि । एतयोर्यत्याश्रमगृहस्थाश्रमयोः शिष्टं प्राग्वत् । एतेनास्याध्यायस्य तृतीयोक्तकर्मयोगप्रपंचनपरत्वे ( अस्याध्यायस्य ) तदानंतर्यं स्यादिति निरस्तं । योजनाद्वयेपि पूर्वाध्यायोक्तोपजीवनेनैव प्रश्नस्योत्थानेन चतुर्थानंतर्यस्योचितत्वादिति ॥ १ ॥ संन्यासयोगशब्दौ न सर्वकर्मत्यागतदनुष्ठानलक्षणयतिगृहिपरौ । तथाच तयोरन्यतरश्रेयः प्रश्नोन युक्तः । किंतु कामादिवर्जनकर्मानुष्ठानार्थकौ । तयोश्चैकपुंयोग्यत्वान्निःश्रेयसकरत्वाच्चानुष्ठेयत्वादन्यतरश्रेष्ठत्वप्रश्नोऽयर्थएव । अथ स्वरूपज्ञानमात्रार्थं प्रश्नश्चेद्योगएव श्रेष्ठइति भावेन परिहारमाह ॥ ॥ संन्यासइति । संन्यासः-कामादिवर्जनरूपः-कर्मयोगो-भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपश्च उभौ-समुच्चितौ संतौ निःश्रेयसकरौ । तयोस्तु मध्ये कर्मसंन्यासात्कर्मणि संन्यासः-कर्मसंन्यासः कर्मानुष्ठानविषये यः कामक्रोधद्वेषादिवर्जनरूपसंन्यासः तस्माद्भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपोयः कर्मयोगः स तु विशिष्यते-श्रेष्ठोभवति । "द्वंद्वत्यागात्तु संन्यासान्मत्पूजैव गरीयसी" त्युक्तेः ॥ २ ॥ संन्यासशब्दोन यत्याश्रमपरइति भावेन तदर्थमाह ॥ ॥ ज्ञेयइति । यद्यपि"यदृच्छालाभे"त्यादिनोक्तं कामादित्यागरूपं संन्यासं"संन्यासं कर्मणामि"त्यनूद्यार्जुनेन प्रश्नस्य कृतत्वात् अस्त्येव तस्य संन्यासशब्दार्थज्ञानं अतोसौ तं प्रति न वाच्यः । तथापि संन्यासस्योक्तं निःश्रेयसकरत्वमुपपादयितुं ज्ञानमपि तदर्थं स्मारयत्यनेनेत्यदोषः । हे महाबाहो योद्वेषाकांक्षादिहीनः काम्यकर्मत्यागी चेत्युपलक्ष्यते । सनित्यसंन्यासी ज्ञेयः-स्मर्तव्यइत्यर्थः । सएव सुखं-यथा भवति तथा अनायासेन बंधात्प्रमुच्यते । हि-प्रसिद्धमिति

ज्ञेयः सनित्यसंन्यासी योन द्वेष्टि न कांक्षति । निर्द्वंद्वोहि महाबाहो सुखं बंधात्प्रमुच्यते ॥ ३ ॥
सांख्ययोगौ पृथग्बालाः प्रवदंति न पंडिताः । एकमप्यास्थितः सम्यगुभयोर्विंदते फलम् ॥ ४ ॥ ॥

युद्धकर्म त्वया न त्याज्यमिति ॥ ३ ॥ ननु"न तस्य तत्वग्रहणाय साक्षादि"ति पंचमस्कंधस्थश्लोके विषयवैराग्याभावे ज्ञानानुत्पत्त्युक्त्या ततएव तदुत्पत्तिरिति लाभेन वैराग्यशब्दितकामादिसर्ववर्जनरूपसंन्यासोज्ञानोत्पत्तौ आवश्यकत्वेनोक्तइति प्रतीयते । कर्मयोगस्तु ज्ञानविरोधित्वेनोक्तः, "अग्निमुग्धाधूमतांता स्वं लोकं न विदंतित" इत्येकादशस्कंधे एकविंशत्यध्याये, "अग्निमुग्धोहवै धूमतांतः स्वं लोकं न प्रतिजानाती"ति तैत्तरीये संज्ञानाख्यप्रश्नः कश्चिदनुवाके अग्न्युपलक्षिते कर्मणि मुग्धः-श्रेयस्करमेतदिति भ्रांतः धूमतांतः-होमधूमेन ग्लानः स्वलोकं--स्वीयमाश्रयं परमाश्रयं परमात्मानं न प्रतिजानातीत्यर्थः । तथाच कथं कर्मयोगात्संन्यासोवरइत्युच्यते इत्यतः संन्यासइव कर्मयोगोपि ज्ञानोत्पत्तावावश्यकएवेत्याह कृष्णः ॥ ॥ सांख्येति । सांख्यं-ज्ञानं योगोभगवदर्पणबुद्ध्या

कर्मानुष्ठानं तावुभौ बालाः-अविवेकिनः पृथक्-साध्यसाधनभावहीनौ प्रवदंति न पंडिताः योगस्य ज्ञानहेतुत्वं कुतइत्यतउच्यते ॥ ॥ एकमपीति । एकमपि-ज्ञानमार्गं कर्ममार्गं वा एकमपि सम्यगास्थितोनुतिष्ठन् उभयोर्ज्ञानकर्मणोरुभयोरपि फलं विंदतइत्यर्थः ॥ ४ ॥ नन्वेतावता द्वयं किंचित्फलं प्रति स्वतंत्रसाधनमित्युच्यते । योगस्य ज्ञानहेतुत्वं न प्राप्तमित्यतः तदभिप्रायं स्वयमेव व्यनक्ति ॥ ॥ यत्सांख्यैरिति । सांख्यैर्ज्ञानिभिर्यत्स्थानं भगवत्स्वरूपलक्षणं तद्योगैः । अर्शआद्यच्प्रत्ययांतावत्र सांख्ययोगशब्दौ, कर्मयोगवद्भिरपि ज्ञानद्वारा गम्यतइत्यर्थः । तथाच सांख्यं च योगं च एकं-साध्यसाधनभाववत् यः पश्यति सएव ज्ञानीत्यर्थः । संन्यासयोगयोर्द्वयोरपि ज्ञानहेतुत्वान्न कोऽपि विरोधः । ''अग्निमुग्ध''इत्यादि तु काम्यकर्मविषयमिति भावः । यद्वा संन्यासयोगशब्दयोः यतिगृहिपरत्वमुपेत्य तयोरधिकारिभेदादेकत्र संन्यासयोगयोः समावेशायोगश्चोदितोऽसौ संन्यासयोगशब्दयोस्तदर्थत्वानंगीकारेण पूर्वश्लोके परिहृतः । अधुना

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । एकं सांख्यं च योगं च यः पश्यति सपश्यति॥ ५ ॥**

संन्यासयोगयोरधिकारिभेदोपि न युज्यतइत्याह ॥ ॥ सांख्येति । बालाः-अविवेकिनः सांख्ययोगौ-ज्ञानकर्मयोगौ पृथक् भिन्नाधिकारिकौ नैकत्र समाविष्टौ यत्याश्रमिणां सांख्यपदोक्तज्ञानाधिकारएव न कर्मणि, गृहिणां तु योगपदोक्तकर्माधिकारएव न ज्ञानइति प्रवदंति । ज्ञानमार्गं सम्यगास्थितएव ज्ञानफलं प्राप्नोति । कर्ममार्गं सम्यगास्थितएव कर्मफलं प्राप्नोतीति प्रवदंतीति यावत्, न पंडिताः कुतः ज्ञानकर्ममार्गयोरेकमपि सम्यगास्थितः उभयोः फलं विंदते यतः अतोन पंडिताबालाइव प्रवदंतीत्यर्थः । अत्र मार्गद्वयस्य सम्यक्त्वविशेषणात्कर्मणोज्ञानसाहित्यं तेन विना सम्यगनुष्ठानासिद्धेः कर्मणा विना संपूर्णानंदहेतुत्वरूपसम्यक्त्वस्य ज्ञानेऽनुपपत्तेः तदर्थं तस्य कर्मसाहित्यमिति सूचितं । ज्ञानैकगम्ययतिप्राप्यस्थानप्राप्तिसद्भावाच्च गृहिणां ज्ञानाधिकारोस्तीति स्पष्टं वदन्नुक्तमुपसंहरति ॥ ॥ यदित्यादिना । यतः सांख्यैर्ज्ञानिभिर्यतिभिः प्राप्यं स्थानं योगैः-योगवद्भिर्गृहिभिर्गम्यते तस्मात्सांख्यं योगं चैकं-



एकाधिकरणकं कर्मिण्यपि गृहिणि ज्ञानं ज्ञानिन्यपि कर्मेत्येवमेकत्र तयोः समावेशं यः पश्यति सपश्यति-ज्ञानीत्यर्थः ॥५॥ पूर्वं''ज्ञेय''इत्यत्र स्वाभिमतसंन्यासशब्दार्थं स्मारयित्वा तस्य योगादवरत्वे ज्ञानांतरंगत्वरूपं बाधकं''यत्सांख्ये''ति श्लोकाभ्यां परिहृत्येदानीं तस्य योगादवरत्वे साधकमाह ॥ ॥ संन्यासस्त्विति । अयोगतः-भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगाभावे कामादिवर्जनरूपसंन्यासस्तु दुःखमाप्तुमेव परमपुमर्थाहेतुत्वात् । स्वोचितकर्माननुष्ठानेन नरकप्राप्तेश्चेति भावः । तात्कालिकापमानादिकृतदुःखाभावरत्वल्पत्वान्न फलमिति भावः । मुनिः-संन्यासी । ''सहि लोके मुनिर्नाम यः कामक्रोधवर्जितः''त्युक्तेः । योगयुक्तोन चिरेण-शीघ्रं ब्रह्माधिगच्छतीत्यर्थः । एतेन योगाभावे पुमर्थहेतुत्वाभावः । सति तु तस्मिन्तद्धेतुत्वं संन्यासस्येति योगस्य वरत्वे व्यतिरेकान्वयरूपं साधकमुक्तं भवति । यद्वा योगसंन्यासयोः समुच्चितयोरेव निःश्रेयसकरत्वमुभावित्यनेनोक्तं । इदानीमसमुच्चये बाधकमाह । संन्यासस्त्विति । कामादिवर्जनरूपसंन्यासस्तु अयोगतः-भा-

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । योगयुक्तोमुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥ योगयुक्तोविशुद्धात्मा विजितात्मा जितेंद्रियः । सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥ ॥ ॥**

वप्रधानं योगरूपत्वाभावे केवलसंन्यासस्तु दुःखमाप्तुमेव विष्णवर्पितत्वादियोगरूपत्वं विना केवलकर्मत्यागोनरकफलएवेति भावः । योगरूपत्वं विना संन्यासस्यानर्थहेतुत्वमुक्त्वा योगरूपसंन्यासस्य मुक्तिहेतुत्वमाह ॥ ॥ योगयुक्तइति । मुनिः-संन्यासी । संन्यासस्य योगावांतरभेदत्वाद्योगरूपत्वोक्तिः । ''यं संन्यासमिति प्राहुर्योगं तं विद्धि''इति वक्ष्यमाणगीतोक्तिरप्येतदभिप्राया । अतः ''संन्यासः कर्मयोगश्चे''ति भेदोक्तिः कुरुपांडववन्न विरुद्धेति ज्ञेयं ॥ ६ ॥ योगयुक्तसंन्यासस्य महाफलहेतुत्वं प्रपंचयति ॥ ॥ योगेति । प्रपंचनं च ''योनद्वेष्टि''त्यत्रोक्तद्वेषादिवर्जनरूपसंन्यासस्य पूर्वार्धे कारणोपन्यासेन ब्रह्माधिगच्छतीति प्रागुक्तमुक्तिफलं प्रति उत्तरार्धे ब्रह्मज्ञानरूपावांतरफलोक्त्या चेति ध्येयं । योगयुक्तः-कर्मयोगयुक्तः विशुद्धात्मा-विशुद्धस्वभावः अतएव विजितमनस्कोजितेंद्रियः सर्वभूतात्मा-सर्व-

भूतानामादानादिकर्ता स्वामीति यावत्। सर्वभूतात्मभूतः-सर्वप्राणिनां स्वामिभूतः सएव स्वस्यात्मा आदानादिकर्ता स्वामी यस्य ससर्वभूतात्मभूतात्मा। ज्ञानोपलक्षणमेतत्। सर्वभूतात्मभूतात्मेति ज्ञानीत्यर्थः। कुर्वन्नपि न लिप्यते-मुक्तोभवतीत्यर्थः। जितेंद्रियत्वादिद्वेषादिवर्जनकारणं 'सर्वस्वामी ममस्वामीति ज्ञानं' ब्रह्माधिगतावबांतरफलमित्युक्तं भवति। यद्वा''योगयुक्त''इत्यत्र भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपोयोगउक्तः। ''सर्वे''त्यादिना तु सर्वभूतात्मनि हरौ भूतमनाः-स्थितमनाइत्यर्थः॥७॥ ''ज्ञेय''इत्यादिना ''विशुद्धात्मे''त्यादिना च स्पष्टीकृतमपि संन्यासं संकल्पत्यागोवत्या पुनः स्पष्टयति॥ ॥ नैवेत्यादिश्लोकद्वयेन। युक्तः-कर्मयोगानुष्ठाता तत्ववित्-तत्वज्ञानी दर्शनश्रवणस्पर्शनादिज्ञानेंद्रियकर्मेंद्रियव्यापारं कुर्वन्नपि इंद्रियाणींद्रियार्थेषु हरीच्छया वर्ततइति धारयन् मनसावमृशन् स्वस्य स्वातंत्र्याभा-

नैव किंचित्करोमीति युक्तोमन्येत तत्त्ववित्। पश्यन् शृण्वन्स्पृशन् जिघ्रन्नश्नन्गच्छन्स्वपन् श्वसन् ॥८॥ प्रलपन्विसृजन् गृण्हन्नुन्मिषन्निमिषन्नपि। इंद्रियाणींद्रियार्थेषु वर्ततइति धारयन्॥ ९॥ ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः। लिप्यते न सपापेन पद्मपत्रमिवांभसा॥ १०॥ ॥ ॥

वात् नैव किंचित्करोमीति मन्येतेत्यर्थः। संकल्पत्यागोपि संन्यासशब्दार्थइति भावः। संन्यासोयोगरूपः सन्परमपुमर्थहेतुरित्युक्तं। कथं तस्य योगरूपतेत्यतोवाह॥ ॥ नैवेति। सर्वव्यापारं कुर्वन्नपींद्रियाणीशप्रेरितानींद्रियार्थेषु वर्तंते सएव स्वतंत्रः नैव किंचिदहं करोमीत्यनुसंधानमेव द्वेषादिवर्जनरूपसंन्यासस्य योगरूपत्वं नामेति श्लोकद्वयतात्पर्यार्थः॥ ८॥ ९॥ योगमपि किंचिद्विवृण्वन् संन्यासयोगाभ्यां युक्तएव कर्मणा न लिप्यतइति साधननियममाह॥ ॥ ब्रह्मणीति। यद्यपि''संन्यासास्त्वि''त्यनेनैव संन्यासयोगौ मिलितावेव फलं साधयतइति नियमोलब्धएव ''कुर्वन्नपि न लिप्यत''इति फलं चोक्तमेव। तथापि संन्यासयोगौ मिलितावेव फलसाधनमिति नियमोक्तेरुपचारत्वनिवृत्त्यर्थं ''लिप्यते न सपापेने''ति पुनःफलोक्त्या नियमस्य फलसाधनताऽत्रोच्यतइत्यदोषः। संगं-फलकामनां त्यक्त्वा ब्रह्म-



ण्याधाय मम शुभार्थं स्वपूजात्मकानि मया कारितानीत्यनुसंधाय कर्माणि यः करोति भगवदधीनकर्तृशक्तिकः सन्करोति सोंऽभसा पद्मपत्रमिव पापेन न लिप्यते-ज्ञानद्वारा मुक्तोभवतीत्यर्थः॥ १०॥ संन्यासयोगौ मिलितावेव फलहेतुरित्यत्राचारोस्तीत्याह॥ ॥ कायेनेति। देहेन-मनसा''मनोबुद्धी तु द्वादशे'' (इ) त्युक्तेर्बुद्धिरूपेंद्रियेण केवलैः-कामाहंभावहीनैः स्वातंत्र्याभिमानरहितैर्वा इंद्रियैर्योगिनोपि संगं त्यक्त्वाऽऽत्मनोमनसः शुद्धये तत्र ज्ञानोत्पत्त्यर्थं पापालेपायेति वा कर्म कुर्वंतीत्यर्थः। पूर्वार्धेन संन्यासः उत्तरार्धेन योगः आत्मशुद्धयइति फलोक्तिः॥ ११॥ प्राक्''संन्यासस्त्वि''त्यादिना संन्यासयोगौ मिलितावेव फलं साधयतः नान्यतरपरित्यागेनान्यतरइति नियमज्ञापनार्थं तयोः फलमुक्तं 'ब्रह्माधिगच्छति''कुर्वन्नलिप्यत'इत्यादिना। इदानीं तु तावेव मोक्षसाधनं नतु तदुभयत्यागेनान्यदिति

कायेन मनसा बुद्ध्या केवलैरिंद्रियैरपि। योगिनः कर्म कुर्वंति संगं त्यक्त्वाऽऽत्मशुद्धये॥ ११॥ युक्तः कर्मफलं त्यक्त्वा शांतिमाप्नोति नैष्ठिकीम्। अयुक्तः कामकारेण फले सक्तोनिबध्यते॥१२॥ सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी। नवद्वारे पुरे देही नैव कुर्वन्न कारयन्॥ १३॥ ॥ ॥

नियमज्ञापनाय योगसंन्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तारलक्षणं फलमाह॥ ॥ युक्तइति। कर्मफलं त्यक्त्वेत्यनेन प्रागुक्तकामादिवर्जनरूपसंन्यासी ज्ञेयः। युक्तः-भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगयुक्तः नैष्ठिकीं-स्वाभाविकीं शांतिं स्वरूपानंदाविर्भावलक्षणां मुक्तिमाप्नोति। अयुक्तः-योगहीनः कामकारेण-फलकामादिना कर्मानुष्ठानेन संन्यासाभावेनेति यावत्। फले-क्षुद्रफले सक्तोनिबध्यते-नितरां संसारमनुभवतीत्यर्थः॥ १२॥ पूर्वं''नैवकिंचित्करोमी''त्यादिना कर्तृत्वाभिमानत्यागेन संन्यासः विवृतोऽधुना कारयितृत्वाभिमानत्यागेन संन्यासशब्दार्थं स्पष्टयति॥ ॥ सर्वकर्माणीति। यद्वा प्राक्कर्माणि ब्रह्मण्याधाय यः करोतीत्यत्र कर्मणां ब्रह्मण्याधानं नाम न कर्मणां स्वरूपेण त्यागोऽपितु सर्वकर्माणि मनसा संन्यस्य-भगवानेव स्वपूजात्मकानि मच्छुभार्थं मया कारयति मम कर्तृताशक्तिरपीशाधीनैवेत्यनु-

संधायेत्येवंरूपमित्यर्थः । स्वरूपेण कर्माणि परित्यज्येत्यर्थपक्षे मनसेति व्यर्थमिति भावः । वशी-जितेंद्रियः स्वातंत्र्येण नैव कुर्वन्न कारयंश्च-नवद्वारे-चक्षुः श्रोत्रघ्राणानां षड्द्वाराणि, मुखं पायूपस्थे चेत्येवं नवद्वारवति पुरे-देहे-सुखं यथा तथा आस्ते-कर्मलेपहीनोवर्ततइत्यर्थः ॥ १३॥ ननु दर्शनादिकुर्वन्नैव करोमीति मन्येतेत्युक्तिरयुक्ता । तथात्वे मिथ्याज्ञानित्वप्रसंगादित्यतः स्वाभिप्रायमाह ॥ ॥ नेति । जडमपेक्ष्य प्रभुः-समर्थोजीवः लोकस्य कर्तृत्वं, लोकेन कर्म न सृजति-न कारयति स्वातंत्र्येणेत्यर्थः । स्वयं च कर्माणि न सृजति न करोति । कर्मण्यस्वातंत्र्ये फले सुतरां तदित्याह ॥ ॥ नकर्मेति । सृजतीत्यनुषंगः । कर्मफलप्राप्तिं लोकस्य न सृजति लोकस्य फलप्राप्तिसंपादने स्वस्य वा फलसंपादने न स्वतंत्रइत्यर्थः । स्वातंत्र्याभावापेक्षया न करोमीति मन्येतेत्युक्तिरिति भावः ॥ यद्वा जीवस्य स्वतंत्रकर्तृत्वाभावेपीश्वरदत्तं क्रियायां-क्रियाजन्यादृष्टे कर्मफलप्राप्तौ चास्त्येव स्वातंत्र्यमतः कथं "ब्रह्मण्याधाय कर्माणी"ति "सर्वाणि कर्माणि संन्यस्ये"ति चोक्तिरित्यतआह ॥ ॥

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः ॥ १५ ॥ ॥ ॥**

नेति । प्रभुरीश्वरः । लोकस्य-जीवस्य कर्तृत्वं-अग्निहोत्रादिक्रियायां स्वातंत्र्यं न सृजति-न प्रयच्छति । कर्माणि-क्रियाजन्यादृष्टानि लोकस्य न सृजति-तेषु स्वातंत्र्यं न प्रयच्छति । कर्मफलसंयोगं च लोकस्य न सृजति-फलप्राप्तावपि लोकस्य स्वातंत्र्यं न प्रयच्छतीत्यर्थः । ननु क्रियाया-मदृष्टेषु फलसंयोगे च जीवस्य स्वातंत्र्याभावे कथं क्रियादिनिष्पत्तिरित्यतआह । स्वभावस्त्विति ॥ ॥ स्वं-स्वयमेव भवति-परानपेक्षं तिष्ठति, तथा स्वयमेव भावयति-जगदुत्पादयतीति स्वभावः । स्वेतिपदे उपपदे भवतेर्ण्यंतात्कप्रत्ययः । स्वस्थितावन्यकरणे च परानपेक्षः स्वतंत्रोभगवा-न्स्वभावशब्दार्थः । सएव च प्रवर्तते क्रियाकर्तृत्वे कर्मशब्दितादृष्टेषु फलसंयोगे चेति ध्येयं । कदापि कुत्रापि नान्यस्य स्वातंत्र्यं ददाति । किंतु सर्वत्र सर्वदा स्वयमेव प्रवर्ततइति भावः ॥१४॥ फलसंयोगे स्वातंत्र्याभावं जीवस्य व्यनक्ति ॥ ॥ नादत्तइति । विभुः-जडापेक्ष्-

या समर्थो जीवः कस्यचिद्दुराचारस्य सकाशात्तज्जन्यं पापं स्वातंत्र्येण नादत्ते । सुकृतं-पुण्यं च स्वातंत्र्येण नैवादत्ते । एवं क्रियायामदृष्टे च ज्ञेयं । यद्वा भगवतएव कर्तृत्वे कर्मलेपः स्यादित्यतआह ॥ ॥ नादत्तइति । विभुः-स्वतंत्रःईश्वरः विभुत्वादेव कस्यचित्कर्मणः सका-शात्पापं सुकृतं वा नादत्तइत्यर्थः । न पुण्यपापलेपवान्भवतीत्यर्थः । नन्वेवं सर्वत्र स्थित्वा स्वातंत्र्येण कर्ता ईश्वरोस्ति चेत् कथं न दृश्य-तइत्यतआह ॥ ॥ अज्ञानेनेति । तेनाज्ञानेनावृतबुद्धित्वेन मुह्यंति-भगवंतं न जानंति ॥१५॥ ननु ज्ञानस्याज्ञानावृतत्वेन तेनाज्ञाननाशायोगात् । विनाशकांतरस्य चाभावात् । ज्ञानार्थयोर्योगसंन्यासयोर्वैयर्थ्यमित्यतआह ॥ ॥ ज्ञानेनतु इति । द्विविधं हि ज्ञानं स्वरूपं वृत्तिरूपं चेति । यद्यपि स्वरूपज्ञानमज्ञानावृतं नाज्ञाननाशकं तथाप्यात्मनोभगवतोज्ञानेन-परोक्षवृत्तिज्ञानेन येषामज्ञानं नाशितं-शिथिलितं तेषामेव ज्ञानं भगवदपरोक्ष-

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥ तद्बुद्धयस्त दात्मानस्तन्निष्ठास्तत्परायणाः । गच्छंत्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥ विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥१८॥ ॥ ॥ ॥**

ज्ञानं तत्परं-ब्रह्मादित्यवत्प्रकाशयतीत्यर्थः ॥१६॥ अपरोक्षज्ञानाव्यवहितसाधनमाह । तद्बुद्धयइति ॥ ॥ न सकृत्परोक्षज्ञानेनालं किंतु '१आवृत्तिरसकृदुपदेशात्,' इत्युक्तदिशा पुनःपुनस्तत्र-हरौ बुद्धिर्येषांते तद्बुद्धयःसएव आत्मा-आत्मनादिकर्ता स्वामी येषां तेस्तदात्मानः तन्निष्ठाः-तस्मिन्नचंचलाः । सएव परमयनं येषांते तत्परायणाः । तथा ज्ञानिनःसंतः अत एव च ज्ञाननिर्धूतकल्मषाः-भगवदपरोक्षज्ञानेन निर्धूतपाप्मानोऽपुनरावृत्तिं मुक्तिं गच्छंति ॥१७॥ परमेश्वररूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह । विद्येति ॥ ॥

१-अ. ४ पाद. १ सू. १-' श्रोतव्योमंतव्योनिदिध्यासितव्यइत्यादीनां नाग्निष्टोमादिवदेकवारेण फलप्राप्तिः किंतु आवृत्तिः कर्तव्या, " सयएषोणिमैतदात्म्यमि " त्याद्यसकृदुपदेशात्.

पंडिताः-परोक्षज्ञानिनः।विद्याविनयसंपन्नब्राह्मणादिषु विषमेषु स्थितं हरिं समं-गुणेषु दोषाभावे च समं-तारतम्याभावं च पश्यंतीति समदर्शि-नइत्यर्थः । अस्य श्लोकस्य भगवद्विषयता''निर्दोषं ही''त्युत्तरवाक्यगम्या, अपरोक्षज्ञानहेतुता च प्रकरणगम्येति ज्ञेयं ॥१८॥ समदर्शिनं स्तौति । इहैवेति ॥ ॥ येषां साम्ये मनः स्थितं तैरिहैवास्मिन्नेव जन्मनि सर्गोजन्मादिरूपःसंसारः जितः । दृश्यत्वेनोक्तं समं वस्तु किं केन साम्यमित्यतआह । निर्दोषमिति ॥ ॥ समं वस्तु ब्रह्म निर्दोषत्वेन च साम्यमित्युक्तं भवति । तस्मात्समतया सर्वत्र स्थितस्य-ब्रह्मत्वात्,ते समदर्शिनोब्रह्मणि स्थिताएवेत्यर्थः । ब्रह्मज्ञानिनइति यावत् ॥१९॥ पुनः संन्यासं प्रपंचयति । नप्रहृष्येदिति ॥ ॥ प्रियं-सुखसाधनं प्राप्य न प्रहृष्येत- हर्षं न प्राप्नुयात् । अप्रियं च प्राप्य नोद्विजेत्-दुःखहेतुप्राप्तावपि उद्वेगरूपमनोऽधैर्यं न प्राप्नुयात् । तत्रो-

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः । निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥ न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियं । स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥ बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखम् । सब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ २१ ॥ ॥

पायमाह । स्थिरबुद्धिरिति । बुद्धेः स्थैर्ये हेतुरसंमूढइति । प्रियाप्रियप्रापणे लौकिकोजनएव स्वतंत्रइति मिथ्याज्ञानहीनः । तत्र हेतुर्ब्रह्म-विदिति । ब्रह्मैव स्वतंत्रमिति विद्वान्नैतावताऽलं किंतु ब्रह्मणि स्थितः-नित्यं ब्रह्मस्मृतिमानित्यर्थः । ''संन्यासस्त्वि''त्यादिना संन्यासाद्यो-गस्याधिक्योक्त्यर्थं योगहीनसंन्यासस्य व्यर्थत्वं यदुक्तं तदयुक्तं । कामाद्युपद्रवक्षये स्वरूपसुखाविर्भावसत्वादित्यतः सत्यं तदेव सुखं भगव-द्ध्यानरूपयोगे सत्यक्षयं भवतीति ॥ २० ॥ संन्यासाद्योगस्य पुनराधिक्यमाह । बाह्येति ॥ ॥ स्पृश्यंत इति स्पर्शाः-शब्दाद्याः तेषां बाह्यत्वं-श्रोत्राद्यविषयत्वसंपादनं तथाकृतविषयेषु असक्तमनस्कः-संन्यासीति यावत् । आत्मनि-स्वरूपे यत्सुखं विंदत्यनुभवति । आत्मस्वरूपस्यापि न निर्विशेषत्वमिति ज्ञापनाय यत्सुखमित्येव वाच्ये आत्मनीत्यप्युक्तिः यदित्युक्तेस्तदिति लभ्यते । ससंन्यासी ब्रह्म-योगयुक्तात्मा ब्रह्मणि योगोब्रह्मयोगः-ध्यानं तद्युक्तात्मा तत्सुखं-कामाद्युपद्रवक्षयरूपसंन्यासादाविर्भूतं सुखं अक्षयं पुनस्तिरोभावहीनम-श्नुते-प्राप्नोतीत्यर्थः । यद्वा ''योगयुक्तोमुनिर्ब्रह्मे''त्यादिना योगरूपसंन्यासस्य यन्निश्श्रेयसकरत्वमुक्तं तदुपपाद्यते । बाह्येति ॥ । संसारेप्यात्मस्मरणरूपाल्पयोगयुक्तः संन्यासी सुखं विंदति यदा तदा ध्यानादिमहायोगादियुक्तोमोक्षादिनिश्श्रेयसं विंदतीति किमुवा-च्यमित्यर्थः । २१ ॥ कामादिवर्जनरूपसंन्यासार्थं कामभोगं निंदति । येहीति ॥ ॥ येहि संस्पर्शजाः-विषयसंबंधसंभूताः-भोगाः-सुखानुभवाः ते दुःखयोनयएव कुतइत्यतउक्तं । आद्यंतवंतइति ॥ ॥ उत्पत्तिविनाशवत्त्वादित्यर्थः । बुधो-ज्ञानी तेषु-विषयभोगेषु न रमते-सक्तिं न करोतीत्यर्थः ॥ २२ ॥ उक्तरूपसंन्यासार्थं कामभोगत्यागं प्रशंसति। शक्नोतीति । यः इहैव-मानुषे देहे शरीरविमोक्षणात्

ये हि संस्पर्शजा भोगा दुःखयोनयएव ते । आद्यंतवंतः कौंतेय न तेषु रमते बुधः ॥२२॥ शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् । कामक्रोधोद्भवं वेगं सयुक्तःससुखी नरः ॥२३॥ योंऽतःसुखोंऽतरारामस्तथांऽतर्ज्योतिरेव यः । सयोगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥ ॥ ॥

प्राक् कामक्रोधोद्भवं वेगं-मनसोऽनवस्थानं सोढुं शक्नोति । सनरः युक्तः-ज्ञानोपायवान् सुखी च भवति । मानुषदेहएव कामादिवेगः सोढुं सुकरोनान्यदेहइति ज्ञापनाय इहैवेत्युक्तिः । अतोऽत्रैव तत्सहनाय प्रयतितव्यमिति भावः ॥ २३ ॥ ज्ञानिलक्षणं प्रपंचयत्युत्तरैः श्लोकैः । योंतःसुखः-कामाद्युपद्रवक्षयाभिव्यक्तस्वरूपसुखः अंतरारामः-भगवद्दर्शनजन्यसुखवान् । उक्तज्ञानिलक्षणद्वये हेतुमाह । अंत-र्ज्योतिरंतरभिव्यक्तभगवत्स्वरूपः यतइति । एतेनांतर्ज्योतिष्ट्वमेव ज्ञानित्वमेतत्कथं ज्ञानिलक्षणमिति निरस्तं । तत्र हेतुसमर्पकत्वादस्येति । असंप्रज्ञातसमाधिस्थस्य बाह्यादर्शनात्,एवशब्दः संप्रज्ञातसमाधावन्यदर्शनसत्वेपि तस्य विक्षेपाहेतुत्वाददर्शनकल्पमेव तदिति भावः । एवं चास्यान्यव्यवच्छेदप्रधानत्वादन्यदर्शनहीनांतर्ज्योतिष्ट्वमित्येवं लक्षणोक्तिपरत्वेऽपि न दोषः । अंतःसुखत्वादौ हेतुस्तु सयोगी ब्रह्मभूतो-

ब्रह्मणि स्थितोनिर्वाणं-अशरीरं ब्रह्माधिगच्छति । यतोंतःसुखादिरित्येव उत्तरार्धोक्तोन्वयः । नन्वेवं ब्रह्मभूतोब्रह्माधिगच्छतीत्युक्त्यर्थाद्ब्रह्मभूतत्वस्य ब्रह्माधिगतिरूपब्रह्मज्ञानहेतुत्वमुक्तं । तच्च ',तद्बुद्धय'' इत्यादिनोक्तमेव ब्रह्मभूतत्वस्य तद्बुद्धित्वादिरूपत्वात् । सत्यमयमप्यनुवादएव योंतःसुखो यांतरारामोयोंतर्ज्योतिरेव यश्च तद्बुद्धित्वादिरूपब्रह्मभूतःनिर्वाणं ब्रह्माधिगच्छति सयोगी ज्ञानीत्येवं ब्रह्मभूतपदं प्रागुक्ततद्बुद्धित्वादिरूपज्ञानसाधनानुवादः । यस्य ज्ञानस्य तद्बुद्धित्वादिरूपं ब्रह्मभूतत्वं साधनं तादृशज्ञानवानंतःसुखत्वादिलक्षणकइति तात्पर्यार्थः । अत्र यइति पुनरुक्तिः सर्वत्रान्वयार्था ॥२४॥ अंतः सुखत्वादिलक्षणसंपादकोब्रह्माधिगमोन ब्रह्मभूतत्वमात्राद्भवति । किंतु पापक्षयाच्चेत्याह । लभंतइति ॥ ॥ द्वैधशब्दोत्र द्वेधाभावोद्वैधमिति विषयापेक्षयाऽन्यप्रकारत्वरूपायथार्थत्वपरः सन्नयथार्थ्योपेतज्ञानलक्षकोभूत्वा संशयवि-

लभंते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः । छिन्नद्वैधायतात्मानः सर्वभूतहिते रताः ॥२५॥ कामक्रोधवियुक्तानां यतीनां यतचेतसां । अभितोब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥२६॥ ॥ ॥ ॥

पर्ययपरः । ऋषयोज्ञानिनः क्षीणकल्मषाः-निवृत्तपाप्मानोभूत्वा छिन्नद्वैधायतात्मानःसर्वभूतहिते रताश्च भवंतीति शेषः । छिन्नौ द्वैधौ संशयविपर्ययौ येषां ते छिन्नद्वैधाः ते च ते आयतात्मानश्च-दीर्घमनस्काः श्रवणादिना विदितसर्ववेद्याइति यावत् । छिन्नद्वैधायतात्मानः छिन्नद्वैधत्वे क्षीणकल्मषत्वमिवायतात्मत्वमपि बुद्ध्या विविच्य हेतुत्वेन योज्यं । यतात्मानोवशीकृतमनस्काइति भिन्नं पदं । ततश्च निर्वाणमशरीरं ब्रह्म लभंते । उपशब्दोत्र योज्यः । उपलभंते-पश्यंतीत्यर्थः । अत्र ज्ञानस्य प्रतिबंधकपापक्षयाख्यकारणोक्तावपि असाधारणं कारणं कार्य (रूप)स्य लक्षणं भवतीत्यस्य लक्षणप्रपंचनपरत्वमविरुद्धं ध्येयं ॥ २५ ॥ न केवलमंतःसुखत्वादिकमेव ज्ञानिलक्षणं किंतु सर्वदेशकालेषु सुखेन ब्रह्मलब्धिमत्त्वमपीत्याह । कामक्रोधेति ॥ ॥ यतीनां-प्रयत्नवतां यतचेतसां-वशीकृतमनस्कानां अभितः-सर्वदेशकालेषु



वर्तते । रक्षकत्वेन ज्ञानविषयत्वेन चेत्यर्थः । विदितात्मनां-ब्रह्मज्ञानिनां । शिष्टं व्यक्तं ॥ २६ ॥ ''सब्रह्मयोगयुक्तात्मे''त्यादौ ब्रह्मयोगादिपदेन प्रकृतध्यानप्रकारमाह । स्पर्शानित्यादिद्वयेन ॥ ॥ स्पृश्यंत इतिस्पर्शाःशब्दाद्याः श्रोत्रादींद्रियविषयाः तेषां बाह्यत्वं-दुःसंपादकत्वं बाह्यान् स्पर्शान्-शब्दादीन्बहिः श्रोत्राद्यविषयान् कृत्वा प्रत्याहारेणेंद्रियाणि नियम्येति यावत् । भ्रुवोरंतरे-मध्ये चक्षुश्च कृत्वा-भ्रुवोर्मध्यमवलोकयन्नित्यर्थः''संप्रेक्ष्य नासिकाग्रं स्वमि''त्यादेर्वक्ष्यमाणस्योपलक्षणं । प्राणापानौ समौ-समानौ निर्विकारौ नासाभ्यंतरचारिणौ कृत्वा कुंभके स्थितेवति यावत् ॥ २७ ॥ यतेंद्रियमनोबुद्धिः मुनिः-मननशीलः । एवंभूतोयः समुक्तएवेति स्तुतिः । यद्वा अभिमाना-

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवांतरे भ्रुवोः । प्राणापानौ समौ कृत्वा नासाभ्यंतरचारिणौ ॥२७॥ यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः । विगतेच्छाभयक्रोधो यः सदा मुक्तएव सः ॥२८॥ भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं । सुहृदं सर्वभूतानां ज्ञात्वा मां शांतिमृच्छति ॥ २९ ॥ ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे (संन्यासयोगो) कर्मयोगस्य कामादिवर्जनं, स्वकर्मानुष्ठानमित्यंशद्वयप्रपंचनं, नाम पंचमोध्यायः ॥ ५ ॥ ॥ ॥ ॥ ॥

दिपरित्यागेन मुक्तसादृश्यान्मुक्तएवेति गौणप्रयोगः ॥ २८ ॥ ध्यानमुक्त्वा ध्येयमाह । भोक्तारमिति ॥ ॥ यज्ञो-ज्योतिष्टोमादिः । तपः कृच्छ्रचांद्रायणादिः । महांश्चासावीश्वरश्च महेश्वरस्तं । सुहृदं-उपकारिणं । शांतिं-शांतिसाधनं । मुक्तिहेतुमिति ईश्वरविशेषणं । ज्ञात्वा-ध्यात्वेत्यर्थः । ऋच्छति-साक्षात्करोतीत्यर्थः ॥ २९ ॥ इति श्रीगीतार्थसंग्रहे राघवेंद्रयतिकृते कर्मयोगस्य कामादिवर्जनं, स्वकर्मानुष्ठानमित्यंशद्वयप्रपंचनं, नाम पंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ॥ ॥

ॐ"बुद्धियोगे त्विमां शृणि"ति योगवचनं प्रतिज्ञातं द्वितीये । स च योग उत्तरषट्के वक्ष्यमाणभगवज्ज्ञानं प्रति उपायः । सच द्विविधः । कर्मयोगोध्यानयोगश्चेति । तत्र कर्मयोगोज्ञानं प्रति बहिरंगोपायत्वात त्रैगुण्यविषयावेदाइत्यादिना द्वितीये संक्षेपेण, तृतीयाध्यायादावतीतग्रंथे विस्तरेण च पूर्वं निरूपितोऽधुना कर्मयोगसाध्यत्वाद्वक्ष्यमाणज्ञानांतरगसाधनत्वाच्चावसरप्राप्तं समाधियोगं"स्पर्शानि"त्यादिना पूर्वाध्यायांते संक्षेपेण प्रकृतं विस्तरेणास्मिन्नध्याये वक्ति । आसनादीनामंगानां वक्ष्यमाणत्वेपि तेषां ध्यानार्थत्वेन ध्यानस्यैव प्राधान्यात् । "उद्धरेदात्मनात्मानमि"त्यादिना ध्यानयोगं विधातुं तत्र ध्याने संन्यासयोगयुक्तएवाधिकारीति ज्ञापनाय कामादिवर्जनरूपसंन्यासं ईश्वराराधनरूपस्वकर्मानुष्ठानलक्षणयोगं चाह । अनाश्रितइति ॥ ॥ यः कर्मफलमनाश्रितः कार्यं-स्वस्ववर्णाश्रमोचिततया कर्तव्यं कर्म करोति । संन्यासी योगी च सएव च ध्यानाधिकारीति भावः । आहवनीयाद्यग्नित्यागेन अग्निहोत्रादिक्रियात्यागेन च निःसंगतया वर्त-

**श्रीभगवानुवाच । अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । ससंन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥ यं संन्यासमिति प्राहुर्योगं तं विद्धि पांडव । न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥२॥**

मानएव ध्यानाधिकारीति सांख्यमतमपाकरोति । नेति ॥ ॥ निरग्निरक्रियश्च संन्यासी योगी च नेत्यर्थः । यतेरपि"दैवमेवापरे यज्ञमि"त्यादिनाग्निक्रिययोरुक्तत्वात्संन्यासाश्रमस्वीकारकाले पूर्वाश्रमस्वीकृताग्नेरात्मनि समारोपणाच्च सोपि संन्यासी योगी च भवत्येवेति भावः ॥ ॥ १ ॥ "संन्यासी च योगीचे"त्युक्त्या प्राप्तां तयोरत्यंतभेदशंकां निरसितुं अमुख्ययोगापेक्षया पृथगुक्तोपि संन्यासोमुख्ययोगांतर्भूतइत्याह । यमिति ॥ ॥ "ज्ञेयः सनित्यसंन्यासी"त्यादिनोक्तप्रकारेण कामक्रोधादिवर्जनरूपं संन्यासं प्राहुस्तं सन्यासयोगं मुख्ययोगं ज्ञानोपायभूतकामादिवर्जनविशिष्टनिवृत्तकर्मानुष्टानरूपयोगांतर्भूतं विद्धि-जानीहि । हे पांडव कुतः कश्चन कोपि । असंन्यस्तसंकल्पः- अत्यक्तसंकल्पादिः संन्यासहीनकर्मानुष्टानमात्रवानिनि यावत् योगी ज्ञानोपायवान्न भवति । नहि सामग्र्येकदेशः कार्यजनकोभवति । कचित्पृथगुक्तिरिवैकदेशापेक्षयेति भावः ॥ २ ॥ ध्यानाधिकारत्वेनोक्तोमुख्यः कर्मयोगः किं सकृदनुष्ठेयउत फलप्राप्तिपर्यंतमित्यतः फलपर्यंतमित्याह । आरुरुक्षोरिति ॥ ॥ योगं-ज्ञानोपायं आरुरुक्षोः-संपूर्णं कामयमानस्य मुनेः-परोक्षज्ञानिनः कर्म कारणमुच्यते । योगारोहरूपसाक्षात्कारस्येति योज्यं । अपरोक्षरूपफलोदयपर्यंतं कार्यमिति भावः । तस्यैव मुनेर्योगारूढस्य संपूर्णज्ञानोपायस्यापरोक्षज्ञानिनः शमः-उपलक्षणं भगवन्निष्ठबुद्धित्वरूपध्यानव्याख्यानार्चनादिकं कर्म कारणं मुक्तिगतसुखातिशयस्येति योज्यं । यद्यप्ययं प्रश्नो"यदाते मोहकलिलमि" त्यनेन द्वितीये परिहृतः । तथापि तत्र परोक्षज्ञानार्थिनोऽत्र तु योगारोहशब्दितसंपूर्णोपायशब्दितापरोक्षज्ञानार्थिनइति भेदइति भावः। यद्वा योगारूढस्येत्युत्तरार्धे अपरोक्षज्ञानिनोध्यानादिकं कर्म वक्तुं"यदा त"इति श्लोकोक्तस्यैव प्रश्नोत्तरस्य पूर्वार्धेनानुवादइति ज्ञेयं । यद्वा। कर्मयोगमध्ये ज्ञानार्थिना कीदृशोयोगोऽवश्यापेक्षितइत्यतआह ॥ ॥ आरुरुक्षोरिति पूर्वार्धेन ज्ञानार्थिनः उत्तमाधममध्यमरूपनानाजन-

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ॥३॥ यदा हि नेंद्रियार्थेषु न कर्मस्वनुषज्जते । सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥४॥ ॥ ॥ ॥**

शुश्रूषाख्यमेव कर्मावश्यापेक्षितमित्युच्यते । ( ज्ञानार्थिनोयथाशक्ति त्रिविधप्राणिनां शुश्रूषयोपकारकृतः हरिस्तुष्टः स्वापरोक्षं ददाति । तेन तदवश्यं कार्यमित्युच्यते)चरमार्धेन तु ज्ञानिनोनानाजनशुश्रूषाख्यकर्मोपशमएव शमपदेनोच्यते न तु ध्यानाद्युपशमःतत्तु कार्यमेवेत्युच्यते शमपदस्योभयार्थत्वात्(तस्यस्वोत्तमसेवयैवेष्टसिद्धौ अन्यशुश्रूषया कृत्याभावात्)एवंचात्र श्लोके पूर्वार्धेज्ञानार्थिनःकर्मापेक्षितमित्युक्त्वाउत्तरार्धे ज्ञानिनः शमपदेन कर्मोपशमोपेक्षितइत्युच्यते । तथाच"न निरग्निर्नचाक्रियः'योगी'त्याद्युक्तिविरोधइति प्रत्युक्तं ध्येयं । कर्मशमशब्दाभ्यां नानाजनशुश्रूषाख्यकर्मतदुपशमयोरेवात्र विविक्षितत्वादिति ॥ ३॥ योगारूढशब्दितसंपूर्णोपायसिद्धिमतोलक्षणमाह ॥ ॥ यदेति । यदा हींद्रियार्थेषु-शब्दादिविषयेषु कर्मसु च प्रयत्नं विनापि नानुषज्जते । ननु कर्माननुषंगोनाम-कर्मस्वरूपत्यागएव तथाच"नचाक्रियोयोगी"ति प्रागुक्ताविरोध-

इत्यतः कर्मानतुषंगं स्वयमेव व्याख्याति ॥ ॥ सर्वेति । ज्ञानिनः कर्माननुषंगोनाम-सर्वकर्मसंकल्पन्यासएव । सर्वेषु कर्मसु संकल्पत्यागी सन् कर्मसु नानुषज्जते यदा तदा योगारूढउच्यते इति योजना । कर्मसु संकल्पत्यागो नाम ममतात्यागएव । संकल्प ( ल्पाख्य ) क्रियादिकं सर्वं भगवदधीनमिति ज्ञानमेव । एवं च संकल्पादेर्भगवदधीनताज्ञानेन हेतुना कर्मस्वनासक्तत्वे सत्यप्रयत्नेन शब्दादिविषयेषु अनासक्तत्वं योगारूढस्य लक्षणमित्युक्तं भवति । अप्रयत्नेनेति विशेषणाद्योगमारुरुक्षौ नातिव्याप्तिः । तस्यानासक्तेः प्रयत्नसाध्यत्वात् ॥४॥ यस्य-ध्यानयोगस्य कामादिवर्जनरूपसंन्यासयुक्तस्ववर्णाश्रमोचितकर्मानुष्ठानवानधिकारी उक्तः । अपरोक्षाख्यफलपर्यंतं कर्मानुष्ठानं चोक्तं । सएव ध्यानयोगोऽभियोगेन कार्यइत्याह ॥ ॥ उद्धरेदिति । आत्मना-मनसा आत्मानं-जीवमुद्धरेत् पुमर्थभाजनं कुर्यात् । आत्मानं-जीवं नावसादयेत्-न क्लेशभाजनं कुर्यात् । कुतः हि-यस्मादात्मनोजीवस्यात्मैव-मनएव बंधुः रिपुश्च भवत्यतइति ॥५॥ कीदृशस्यात्मनः कीदृशं मनो बंधुः

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् । आत्मैव ह्यात्मनोबंधुरात्मैव रिपुरात्मनः ॥५॥ बंधुरात्मात्मनस्तस्य येनात्मैवात्मना जितः । अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥ ॥ ॥ ॥

रिपुश्चेत्यतआह ॥ ॥ बंधुरिति । येनात्मना-येन-जीवेनेति समानाधिकरणं वा । येन-जीवेन कर्त्रा आत्मना-बुद्ध्या-करणेनेति व्यधिकरणं वा । आत्मा-मनः जितः-जितं वशीकृतं तस्यात्मनोजीवस्यात्मा-मनः बंधुरेवोपकार्येव भगवद्ध्यानोपयोगीति यावत् । अनात्मनस्तु-अजितमनस्कस्य तु जीवस्य आत्मैव-मनएव शत्रुवत्प्रसिद्धशत्रुरिव शत्रुत्वे-अनुपकारित्वे वर्तेतेति मनोजयेन ध्यानयोगः कार्यइत्युक्तं भवति ॥ ६ ॥ यद्वा योगारोहशब्दितयोगसंपूर्तेर्भगवत्प्रसादोमुख्यसाधनमित्याह ॥ ॥ उद्धरेदिति । आत्मना-परमात्मना तत्प्रसादेनेति यावत् । आत्मानं-जीवं प्राग्वदेव योजना । आत्मनोजीवस्यात्मैव-परमात्मैव बंधुः रिपुश्च हि यतः ॥५॥ कीदृशस्य हरिर्बंधुः रिपुश्चेत्यत आह ॥ ॥ बंधुरिति । पूर्ववदेवार्थोयोजना च । परंतु प्रथमांतात्मशब्दोत्र परमात्मपरः । आत्मना-बुद्ध्येत्यत्र बुद्ध्युपलक्षितभक्त्येत्यर्थः । अनात्म-



काग्रं संप्रेक्ष्य दिशश्चानवलोकयन् युंज्यादिति पूर्वेण वा युक्तआसीतेत्युत्तरेण वान्वयः ॥ १३ ॥ प्रशांतात्मा स्वतोविषयेषु अप्रवृत्तमनस्कः विगतभीः-व्याघ्रचोरादिभयहीनःब्रह्मचारिव्रते स्थितः मनः सम्यक् प्रत्याहृत्य मच्चित्तोमद्ध्यानवान्मत्परः-अहमेव परः-सर्वोत्तमः यस्य समत्परः युक्तः समाधिसंपन्नआसीतेत्यर्थः ॥ १४ ॥ समाधेः फलमाह ॥ ॥ एवं युंजन्निति । नियतमानसोयतचित्तः । योगी-योगानुष्ठाता । एवमुक्तप्रकारेण सदात्मानं युंजन्-ध्यायन् आत्मानं-मनोभगवति युक्तं कुर्वन्निति वा निर्वाणपरमां-शरीरत्यागोत्तरकालीनां मत्संस्थां-मयि स्थितिरूपां शांतिमधिगच्छति-प्राप्नोति । न जीवन्मुक्तिमात्रमाप्नोतीत्यर्थः ॥१५ ॥ ध्यानयोगनिष्ठस्याहारादिनियममाह

प्रशांतात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः । मनः संयम्य मच्चित्तो युक्तआसीतमत्परः ॥१४॥ एवं युंजन्सदात्मानं योगी नियतमानसः । शांतिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥ नात्यश्नतस्तु योगोऽस्ति नचैकांतमनश्नतः । नचातिस्वप्नशीलस्य जाग्रतोनैव चार्जुन ॥१६॥ युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगोभवति दुःखहा ॥१७॥ यदा विनियतं चित्तमात्मन्येवावतिष्ठते । निस्पृहः सर्वकामेभ्यो युक्तइत्युच्यते तदा ॥१८॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ ॥ नात्यश्नतइत्यादिद्वाभ्यां । अति-अधिकं भुंजानस्य एकांतं सर्वथैवाभुंजानस्य चातिनिद्राशीलस्यातिजाग्रतश्च योगोनैवास्तीत्यर्थः । अत्राशनजागरणनिषेधोऽशक्तस्य शक्तस्य त्वनशनादावपि न योगक्षतिरिति ज्ञेयं ॥१६॥ कथंभूतस्य योगोभवतीत्यतआह ॥ ॥ युक्तेति । युक्तौ-योगोपेतौ आहारविहारौ भोजनसंचारौ यस्य सतथा तस्य यावता श्रमादिर्न भवति तावदाहारव्यापारवतइत्यर्थः । कर्मसु-कार्येषु युक्तचेष्टस्य-श्रमानापादकचेष्टायुक्तस्य युक्तस्वप्नावबोधस्य-यावन्निद्रावबोधौ योगाविघातकौ तावन्निद्रावबोधोपेतस्य योगोध्यानयोगः समाधिरिति यावत । दुःखहा भवतीत्यर्थः ॥ १७ ॥ योगसंपूर्तिस्वरूपमाह ॥ ॥ यदेत्याद्यनेकश्लोकैः । यदा विशेषेण नियतं विष-

येभ्यः प्रत्याहृतं चित्तमात्मन्येवावतिष्ठते सर्वकामेभ्यः निस्पृहश्च यदा तदा युक्तो योगसंपूर्तिमानित्युच्यतइत्यर्थः ॥ १८ ॥ योगसंपन्नः कथं तिष्ठतीत्यतआह ॥ ॥ यथेति । वायुशून्यदेशस्थोदीपोयथा नेंगते-न चलति । सा उपमा-दृष्टांतः कस्येत्यतउक्तं ॥ ॥ योगिनइति । आत्मयोगं-भगवद्विषयसमाधिं युंजतः-कुर्वतः योगिनः-यतचित्तस्येति ॥ १९ ॥ योगसेवया निरुद्धं चित्तं यत्र समाधावुपरमते बाह्यव्यापारहीनं भवति । यत्रचैव-यस्मिन्नेव समाधियोगे आत्मना-मनसा-आत्मानं भगवंतं पश्यन्नात्मनि-देहे तुष्यति-तोषमाप्नोतीत्यर्थः । यच्छब्दयोस्तमित्यग्रेऽन्वयः । एवमुत्तरत्रापि ॥ २० ॥ यत्र समाधौ स्थितः बुद्धिग्राह्यं-अनुभवेन वेद्यं अतींद्रियमिंद्रियाग्राह्यं आत्यंतिकमतिश-

**यथा दीपोनिवातस्थो नेंगते सोपमा स्मृता । योगिनोयतचित्तस्य युंजतोयोगमात्मनः ॥ १९ ॥ यत्रोपरमते चित्तं निरुद्धं योगसेवया । यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥ सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियं । वेत्ति यत्र न चैवायं स्थितश्चलति तत्वतः ॥ २१ ॥ यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः । यस्मिन्स्थितोने दुःखेन गुरुणाऽपि विचाल्यते ॥ २२ ॥ तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितं । सनिश्चयेन योक्तव्यो योगोनिर्विण्णचेतसा ॥ २३ ॥ ॥ ॥ ॥ ॥**

यितं सुखं वेत्ति-अनुभवति । यत्र योगे स्थितोऽयं तत्वतोभगवद्रूपान्न चलति तमित्यन्वयः ॥ २१ ॥ यं-योगं लब्ध्वा च ततोपरं लाभमधिकं न मन्यते यस्मिन् स्थितोगुरुणाऽपि दुःखहेतुना न विचाल्यते ॥ २२ ॥ तं दुःखसंयोगवियोगं दुःखसंयोगेन वियुज्यमानं । दुःखसंयोगस्य वियोगोयस्मादिति वा । वियुज्यतेऽनेनेति वियोगः । करणे घञ् । दुःखसंयोगोयस्य वियोगइति वा । योगसंज्ञितं विद्यात् । संयोगपदेन न केवलमुत्पन्नदुःखं नाशयति किंतूत्पत्तिमेव निवारयतीति सूचयति । सयोगः-समाधिः निर्विण्णचेतसा-विषयविरक्तमनसा निश्चयेन योक्तव्योऽवश्यं कर्तव्यएव मुमुक्षुणेत्यर्थः । मुमुक्षोर्ध्यानाऽयोगव्यवच्छेदार्थोयं निश्चयशब्दः अयोगव्यवच्छेदविधानार्थमेव । उद्धरेदित्यत्र



नस्त्वित्यस्य भक्तिबलेनावशीकृतभगवत्स्वरूपस्य पुंसइत्यर्थः ॥६॥ ननु मनसोभगवतश्च वशीकरणे तावस्य बंधू भवतइत्युक्तं । केनोपकारेण तावस्य बंधू आत्मना आत्मानमुद्धरेदिति-आत्मोद्धारं कुरुतइत्युक्तमिति चेत्तएव कइत्यतआह ॥ ॥ जितेति । जितात्मनः-वशीकृतमनस्कस्य-भक्त्या वशीकृतभगवत्स्वरूपस्य प्रशांतिर्भवति । स्वतएव मनसोविषयेष्वप्रवृत्तिर्भवतीत्यर्थः । प्रशांतस्य च परमात्मा सम्यगाहितोहृदि सन्निहितोभवति-ध्यानविषयोभूत्वाऽपरोक्षविषयोभवतीत्यर्थः । संपूर्णयोगसिद्धिमद्रूपोयोगारूढोभवतीति यावत् ॥ ७ ॥ "यदा हि नेंद्रियार्थेष्वि"त्यत्रापरोक्षिणोलक्षणोक्तावपीह लक्षणं स्पष्टयति ॥ ॥ शीतोष्णेत्यादिसार्धश्लोकद्वयेन । शीतोष्णादिद्वंद्वधर्मे कूटस्थः-कूटमाकाशं तद्वत्तिष्ठतीति कूटस्थः-उत्सेकानुत्सेकरूपविकारहीनइत्यर्थः । तत्र हेतुर्ज्ञानेत्यादि । वेदादौ सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञान-

**जितात्मनः प्रशांतस्य परमात्मा समाहितः । शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥ ज्ञानविज्ञानतृप्तात्मा कूटस्थोविजितेंद्रियः । युक्तइत्युच्यते योगी समलोष्ठाश्मकांचनः ॥८॥ सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु । साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥ ॥ ॥ ॥ ॥**

मित्युच्यते । तदवांतरमाहात्म्यविशेषज्ञानं विज्ञानमित्युच्यते । यद्वा-परोक्षापरोक्षज्ञाने ज्ञानविज्ञानशब्दाभ्यां वाच्ये ताभ्यां तृप्तोविषयेष्वलंबुद्धिमान्विजितेंद्रियश्च यतोतः कूटस्थः-समलोष्ठाश्मकांचनः योगी-योगं कुर्वन् युक्तः-योगसंपूर्णइत्युच्यते ॥८॥ सएव च सुहृदादिषु समा भगवद्विषयिणी बुद्धिर्यस्य ससमबुद्धिर्योगारूढः योगिवर्गात्सर्वस्माद्विशिष्यतइति । सुहृदादिषु सर्वत्र स्थितहरिरूपाणां गुणादिषु तारतम्यं नेति बुद्धिर्वा सुहृदि सुहृत्त्वमेव मित्रादिषु मित्रत्वादिकमेव ददाति न तु सुहृदि मित्रत्वं मित्रादौ सुहृत्त्वादिकमिति वैषम्येणातः सुहृदादौ सुहृत्त्वादिकमीशकृतमेव न स्वतंत्रमिति वा भगवद्विषये समबुद्धिः । यद्वा सुहृदादिजीवविषये समा बुद्धिर्यस्येत्यर्थः तेषु समबुद्धित्वं नाम यत्सुहृत्त्वमित्रत्वादिकमस्ति तन्न स्वरूपांतर्गतं किंत्वंतःकरणोपाधिकमेव देवदानवमानवभेदेन स्वतोविषमाणां चैतन्यस्वभावत्वमेकमेव

सममिति बुद्धिमत्त्वमेवेति ज्ञेयं । अथवा सुहृदादिषु विषये शास्त्रेषु यथायथा वृत्तिर्विहिता तथातथा वर्तनं-वर्तनज्ञानं वा सुहृदादिजीवेषु समबुद्धिर्ध्येया । प्रत्युपकारनिरपेक्षोपकारकृत्-सुहृत् । क्लेशस्थानं विज्ञाप्य ततोरक्षाकृन्मित्रं । वधादिकर्ताऽरिः । कर्तव्ये उपकारे अपकारे च यउदास्ते सउदासीनः । उपकारापकारोभयकृन्मध्यस्थः । अवांछितकृद्द्वेष्यः । बंधुरुपकर्ता ॥९॥ उद्धरेदित्यादिना विहितं ध्यानयोगमनूद्य तत्प्रकारमाह । योगीति ॥ ॥ योगी-ज्ञानोपायमनुतिष्ठन्नात्मानं-मनः युंजीत-भगवन्निष्ठं कुर्यात् । समाधियुक्तं कुर्यादिति यावत् । सततं-निरंतरं रहसि स्थितएकाकी संगशून्यः यतं-नियमितं चित्तं-मनः आत्मा-देहश्च यस्य सयतचित्तात्मा निराशीः-कामनाहीनः परिग्रहो-

योगी युंजीत सततमात्मानं रहसि स्थितः । एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥ ११ ॥ तत्रैकाग्रं मनः कृत्वा यतचित्तेंद्रियक्रियः । उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥१२॥ समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥ ॥ ॥ ॥

ज्झश्च भूत्वा कुर्यादिति ॥ १० ॥ पुनर्ध्यानप्रकारमेवाह ॥ ॥ शुचावित्याद्यनेकश्लोकैः । शुचौ देशे मनःप्रसादहेतुभूतदेशोपलक्षणमेतत् । चेलं-वस्त्रं अजिनं-व्याघ्रादिचर्म कुशोदर्भाःउत्तरं उपरि-यस्य तत्तथा नात्युच्छ्रितं नातिनीचं न समातःएवं भूतमासनं स्थिरं यथाभवति तथाऽत्मनःप्रतिष्ठाप्य ॥११॥ तत्रासने उपविश्य । तदाह सूत्रे ॐआसीनःसंभवात्ॐइति । यतचित्तेंद्रियक्रियः सन् एकाग्रं मनः कृत्वा आत्मनोमनसोविशुद्धये-सर्वमलदाहाय स्वस्य संसारमलनिवृत्तये वा योगं-ध्यानयोगं युंज्यात्-कुर्यादिति विध्यनुवादेन प्रकारोक्तिरियं ॥ १२॥ कायशिरोग्रीवं कायोमध्यदेहः- सच शिरश्च ग्रीवाच प्राण्यंगत्वाद्द्वंद्वैकवद्भावः । समं-ऋजु धारयन् अचलं यथा तथा स्थिरोदृढः स्वं नासि-



१-अ. ४, पा. १, सू. ७-॥ सर्वदोपासनं कुर्वन्नप्यासीनोविशेषतः कुर्यात्, तदा विक्षेपाल्पत्वेन संभवात् ॥

विहितस्यात्र पुनर्विधानं ॥ २३ ॥ किंच संकल्पेन एतदर्थमिदं कुर्यामिति संकल्पपूर्वकानुष्ठानेन प्रभवोजन्म येषां तान्कामान्विषयभोगान्सर्वानशेषतोनिःशेषतः त्यक्त्वा इंद्रियसमूहं समंततः-सर्वतः मनसैव विनियम्य-इंद्रियनियमनं न मनसोन्येनेति ज्ञापनायैवकारः ॥२४॥ मनश्च धृतिगृहीतया- धैर्योपेतया धारणया गृहीतया-वशीकृतयेति वा बुद्ध्या शनैःशनैः उपरमेत्-विषयेभ्योव्यावर्तयेत् भगवति रमेतेति वार्थः । किंचात्मसंस्थं भगवन्निष्ठं मनः कृत्वा बुद्ध्येत्यनुषंगः भगवतोन्यत्र किंचिदपि चिंतयेत् ॥२५ ॥ ध्यानेन मनोनवस्थितं चेत्प्रत्याहारेण वशीकुर्यादित्याह ॥ ॥ यतोयतइति । आद्यादिभ्यउपसंख्यानमिति सप्तम्यर्थे तसिः । यत्र यत्र-विषये स्वतश्चंचलं मनोस्थिरं सत्

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः । मनसैवेंद्रियग्रामं विनियम्य समंततः ॥ २४ ॥ शनैः शनैरुपरमेद्बुध्या धृतिगृहीतया । आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत् ॥ २५ ॥ यतोयतोनिश्चरति मनश्चंचलमस्थिरम् । ततस्ततोनियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥ प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् । उपैति शांतरजसं ब्रह्मभूतमकल्मषम् ॥२७॥ एवं युंजन् सदात्मानं योगी विगतकल्मषः । सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥



निश्चरति-प्रवर्तते ततस्ततएतन्मनोनियम्य प्रत्याहृत्य तदात्मन्येव भगवत्येव वशं तन्निष्ठमेव नयेत्-कुर्यादित्यर्थः ॥२६॥ एवं सांगयोगमभिधाय तदनुष्ठातुः फलं प्रपंचयति ॥ ॥ प्रशांतेति । प्रशांतमनसं-स्वतोविषयेष्वप्रवृत्तमनसं शांतरजसं-विगतरजोगुणमतएवाकल्मषं-कामक्रोधादिदोषहीनं रजोजन्यत्वात्तेषां 'ब्रह्मभूतं' 'तद्भूद्य'इत्युक्तदिशा ब्रह्मणि स्थितिमंतमेनं योगिनं समाधियोगवंतमुत्तमं सुखं कर्तृ उपैति-प्राप्नोति । हि प्रसिद्धं श्रुत्यादावित्यर्थः ॥२७॥सुखमुपैतीत्युक्तसुखं किमायासेन प्राप्नोति कीदृशं च तदित्यतोऽवनक्ति ॥ ॥ एवमिति । विगतकल्मषो-

विगतरागादिदोषोयोगी एवमुक्तदिशात्मानं-भगवन्तं युंजन्-धारयन्नसुखेनाक्लेशेन ब्रह्मसंस्पर्शं भगवत्संसर्गाभिव्यक्तं अत्यंतमतिशयितं सुखमश्नुते-प्राप्नोति ॥ २८ ॥ एवं युंजन्निति ध्यानप्रकरणस्य फलकथनेनोपसंहृत्येदानीं ध्येयमाह ॥ ॥ सर्वेति । "ओंकारमि"ति पंचमांते मच्चित्तोयुक्तआसीतेत्यत्रैवाध्याये ध्येयस्योक्तावपीहोत्तमाधिकारिणां ध्येयस्योक्तिरिति ज्ञेयं । आत्मानं-परमात्मानं ब्रह्मादिसर्वप्राणिगतं आत्मनि-परमात्मनि सर्वत्र-ब्रह्मादितृणांतेषु भगवंतं ऐश्वर्यादिना साम्येन पश्यन्समदर्शनोयोगयुक्तात्मा समाधियुक्तमनस्कः । ईक्षते-पश्यतीत्यर्थः ॥ २९॥ सर्वभूतस्थात्मध्यानविशेषस्य फलमाह ॥ ॥ योमामिति । सर्वत्र-ब्रह्मादितृणांतेषु स्थितं मां यः पश्यति सर्वं च ब्रह्मादि-

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥ योमां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि सच मे न प्रणश्यति ॥ ३० ॥ सर्वभूतस्थितं योमां भजत्येकत्वमास्थितः । सर्वथा वर्तमानोपि सयोगी मयि वर्तते ॥ ३१ ॥ आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन । सुखं वा यदिवा दुःखं सयोगी परमोमतः ॥ ३२ ॥ ॥ ॥ ॥

जगत् मयि-मदधीनं पश्यति । तस्याहं न प्रणश्यामि-सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति-सदा मद्भक्तोभवतीत्यर्थः ॥ ३० ॥ "योमामिति"ति श्लोकोक्तमेव स्पष्टयति ॥ ॥ सर्वेति । यएकत्वमास्थितः सर्वत्र परमेश्वरएवेत्यास्थितोज्ञानी सर्वभूतस्थं मां भजति-सेवते । सयोगी सर्वप्रकारेण न्यायेन अन्यायेन वा वर्तमानोपि मयि वर्तते । अन्यायप्रवृत्तावपि ज्ञानिनोमोक्षोनियतएवेति भावः । तदाह सूत्रे ॐकामकारेण चैकेॐ"इति । आनंदग्हासस्त्वस्त्येवेति ज्ञेयं ॥ ३१ ॥ समदर्शनइत्युक्ते योगवयादिवद्भवति किं साम्यदर्शनमित्याकांक्षायामेकत्वमास्थितइति

१-अ. ३ पा. ४ सू. १५ ॥ कामाचाराः कामभक्षाः कामवादाः कामैवेमं देहमुत्सृज्याथ परात्परमीयुरनारंभणमिति चैके पठंति ॥.



साम्यदर्शनं स्वयमेव व्याख्यातमिदानीं भगवदनुवर्तिविषयतया साम्यदर्शनं स्वयमेव व्याचष्टे ॥ ॥आत्मेति । यथा सुखं स्वस्य प्रियं दुःखं चाप्रियं तथान्येषामपि भगवद्भक्तानामित्येवमात्मौपम्येन-सर्वत्र स्वसादृश्येन सर्वत्र भगवदनुवर्तिषु समं यः पश्यति सुखमेव सर्वभक्तेषु योवांछति स्वात्मनइवेति यावत् सयोगी परमोमतइति विष्णवनुवर्तिषु स्वात्मनीव स्नेहं कुर्वन् श्रेष्ठोमतइति फलितार्थः ॥ ३२॥ भगवदुक्तयोगस्याननुष्ठानलक्षणमप्रामाण्यमाशंकते ॥ ॥ योयमिति । हे मधुसूदन-भगवतः साम्येन-सर्वत्रैक्येन तथा भगवदनुवर्तिषु चात्मौपम्यरूपसाम्येनेति वा मनसएकाग्रत्वेनेति वा । योयं ध्यानयोगस्त्वया प्रोक्तः एतस्य योगस्य चंचलत्वात्स्थिरां स्थितिं मनसः चंचलत्वात् न पश्यामि

अर्जुनउवाच । योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन । एतस्याहं न पश्यामि चंचलत्वात्स्थितिं-स्थिराम् ॥ ३३ ॥ चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् । तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥ श्रीभगवानुवाच । असंशयं महाबाहो मनोदुर्निग्रहं चलम् । अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते ॥ ३५ ॥ असंयतात्मना योगो दुष्प्रापइति मे मतिः । वश्यात्मना तु यतता शक्योवाप्तुमुपायनः ॥ ३६ ॥ ॥

॥ ३३ ॥ चंचलत्वादित्यत्र कस्येति शंकां निरस्यन्मनोनिग्रहेणास्तु योगस्य स्थिरतेति शंकां निराह ॥ ॥ चंचलमिति । मनश्चंचलं हि प्रसिद्धं । प्रमाथि-प्रमथनशीलं देहेंद्रियक्षोभकरं किंच बलवत्-विवेकेनापि जेतुमशक्यं धृढं-विषयवासनानुविद्धतया दुर्भेदं साधुविषये नेतुमशक्यं । अतआकाशे दोधूयमानस्य वायोः वस्त्रेण कुंभादिना वा निरोधनमशक्यं यथा तथा तस्य मनसोनिग्रहं-निरोधनं दुष्करमहं मन्ये-जानामि ॥ ॥ ३४ ॥ अर्जुनोक्तं मनश्चांचल्यादिकमंगीकृत्य मनोनिग्रहोपायं भगवानाह ॥ ॥ असंशयमिति । हे महाबाहो स्वभावतश्चंचलं मनोऽसंशयं यथा भवति तथा दुर्निग्रहं-दुःखेन निरोध्यं तथाप्यभ्यासवैराग्याभ्यां तु निगृह्यते ॥ ३५ ॥ ननु यथा मत्तमातंगः स्वयमेव

श्रांतः सन् शांतोभवति । तथा विषयैस्तृप्तं मनः कदाचित्स्वयमेव नियतं भवति किमभ्यासादिनेत्यतआह ॥ ॥ असंयतेति । अभ्यासादितोऽवशीकृतचित्तेन योगोदुष्प्रापोऽसाध्यः इति मे मतिः । अभ्यासादिना वश्यात्मना-वशीकृतमनस्केन तु पुंसा यतता-पुनरनेनोपायेन यत्नं कुर्वता योगोऽवाप्तुं शक्यइत्यर्थः ॥ ३६ ॥ अभ्यासादिहीनस्य फलं पृच्छति ॥ ॥ अयतिरिति । अयतिरप्रयत्नः श्रद्धया-आस्तिक्यबुद्ध्या उपेतोयुक्तः योगात्-ध्यानरूपोपायात् चलितमानसः योगसंसिद्धिं-ध्यानसंपूर्तिं ध्यानफलं ज्ञानमिति यावत् । अप्राप्य हे कृष्ण कां गतिं गच्छतीति ॥ ३७ ॥ कच्चिदिति किमित्यर्थः । उभयविभ्रष्टः-उभयस्मात्स्वर्गापवर्गरूपाद्विभ्रष्टः प्रच्युतः-ऐहिकामुष्मिकपु-

अर्जुनउवाच । अयतिः श्रद्धयोपेतो योगाच्चलितमानसः । अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ॥ ३७ ॥ कच्चिन्नोभयविभ्रष्टः छिन्नाभ्रमिव नश्यति । अप्रतिष्ठोमहाबाहो विमूढोब्रह्मणःपथि ॥ ३८ ॥ एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः । त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥ श्रीभगवानुवाच । पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥ प्राप्य पुण्यकृतान्लोकानुषित्वा शाश्वतीः समाः । शुचीनां श्रीमतां गेहे योगभ्रष्टोभिजायते ॥ ४१ ॥

मर्थाद्विभ्रष्टइति वा । यद्वा स्वर्गाद्युपायात् काम्यकर्मानुष्ठानादपवर्गोपायाद्ध्यानाच्च विभ्रष्टः अप्रतिष्ठो निराश्रयः अतएव ब्रह्मणः पथि-परब्रह्मप्राप्त्युपाये विमूढः वायुना द्वेधाकृतमेघइव किं नश्यति-नरकाद्यनर्थं प्राप्नोत्युत न नश्यति ॥ ३८ ॥ एतन्मे संशयं-एतं संशयं व्यक्तार्थः ॥ ३९ ॥ प्रश्नस्योत्तरमाह । सार्धैश्चतुर्भिः । हे पार्थ इह-लोके अमुत्र-परलोके च नाशस्तस्य नास्ति । इह नाशस्तिर्यगादिदुर्गतिप्राप्तिः । परत्र नाशोनरकप्राप्तिः । तद्द्वयं तस्य योगभ्रष्टस्यनेत्यर्थः नञ्द्वयमादरार्थं -कुतइत्यतउक्तं ॥ ॥ नहीति । कल्याणकृत् श्रद्धया किंचित्कालं ध्यानादिकृदित्यर्थः ॥ ४० ॥ तर्हि किं प्राप्नोतीत्यतआह ॥ ॥ प्राप्येति । पुण्यकृतान्-पुण्यसंपाद्यान्लोकान्प्रा-



प्य तेषु शाश्वतीः समाः-अनेकसंवत्सरानुषित्वा शुचीनां श्रीमतां-धनिनां गेहे अभिजायते ॥ ४१ ॥ धीमतां ज्ञानिनां योगिनां कुले वंशे वा भवति । यत् ईदृक् जन्म-उक्तं द्विविधं जन्म एतत् दुर्लभं-कष्टलभ्यं न सुलभसाध्यं हि-प्रसिद्धं । ४२ ॥ तत्र द्विप्रकारेपि जन्मनि पौर्वदैहिकं-पूर्वदेहे भवंतं बुद्धिसंयोगं-भगवति मनोयोगं ध्यानमिति यावत् । लभते ततोभूयः-पौर्वदैहिकादधिकं संसिद्धौ-ध्यानसंपूर्तौ यततेयत्नं करोति हे कुरुनंदन ॥ ४३ ॥ तेनैव पूर्वाभ्यासेनावशोपि सन् ह्रियते-ध्यानादौ बुद्धिपूर्वं स्वरसतया प्रवृत्तिहीनोपि पूर्वाभ्यासवशात् ध्यानादिकर्मणि प्रवर्ततइत्यर्थः । योगभ्रष्टस्य पुण्यलोकादिकमित्येतत्कैमुत्येनाप्याह ॥ ॥ जिज्ञासुरपीति । योगस्य-ध्यानयोगस्य जि-

अथवा योगिनामेव कुले भवति धीमताम् । एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥ तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् । यतते च ततोभूयः संसिद्धौ कुरुनंदन ॥ ४३ ॥ पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः । जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥ प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः । अनेकजन्मसंसिद्धस्ततोयाति परां गतिम् ॥४५॥ तपस्विभ्योधिकोयोगी ज्ञानिभ्योपि मतोऽधिकः । कर्मिभ्यश्चाधिकोयोगी तस्माद्योगी भवार्जुन ॥ ४६ ॥ ॥ ॥ ॥

ज्ञासुरपि केवलं योगज्ञानेच्छुरपि । "नलोकाव्ययेति" नञा निर्दिष्टस्य अनित्यत्वाद्योगस्येति साधु । शब्दब्रह्म-विधिनिषेधरूपशब्दब्रह्मातिवर्तते-विधिनिषेधातीतोभवति मुक्तोभवतीति यावत् । किमु किंचित्कालं-योगानुष्ठातेति भावः ॥ ४४ ॥ योगजिज्ञासामात्रेण मुक्तिश्चेत्तदनुष्ठानं व्यर्थमित्यतोन तावन्मात्रेण मुक्तिरपित्वनेकजन्मनीत्याह ॥ ॥ प्रयत्नादिति । योगजिज्ञासुरपीत्यनुषंगः । योगं ज्ञात्वेति शेषः । यतमानः-प्रयत्नं कुर्वन् ततः प्रयत्नाद्योगी-ध्यानयोगवान्संशुद्धकिल्बिषः-निर्धूतपापः अनेकजन्मनि संसिद्धोऽपरोक्षज्ञानी अनेकजन्म-

संसिद्धः ततः-अपरोक्षज्ञानात् परां गतिं यातीति ॥ ४५ ॥ योगं स्तौति ॥ ॥ तपस्विभ्यइति । कृच्छ्रचांद्रायणादितपोयुक्तेभ्योऽयोगिज्ञानिभ्योपि योगी-ध्यानानुष्ठाताऽधिकोमतः । तस्मात्सर्वाधिकोमतः तस्मात्सर्वाधिकत्वाद्योगस्येत्यर्थः ॥ ४६ ॥ ध्यानवत्स्वपि तारतम्यमाह ॥ ॥ योगिनामिति । सर्वेषामपि योगिनां मध्ये श्रद्धाशब्दोदितभक्तिमान्यः सयुक्तोमतः । तत्रापि-भक्तिमत्स्वपि योमां

योगिनामपि सर्वेषां मद्गतेनांतरात्मना । श्रद्धावान्भजते योमां समे युक्ततमोमतः ॥ ४७ ॥ ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ( आत्मसंयमयोगो ) कर्मयोगसाध्य ज्ञानांतरंगसाधन समाधियोगप्रपंचनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥

भजते-सेवते सयुक्ततरः । तत्रापि मद्गतेनांतरात्मना-मद्गतांतःकरणेन फलकामनां विना भजते सयुक्ततमोमतइति-योगिष्वप्युत्तमइति मे मतः ॥ ४७ ॥ इति श्रीमद्भगवद्गीतार्थसंग्रहे श्रीराघवेंद्रयतिकृते कर्मयोगसाध्य ज्ञानांतरंगसाधन समाधियोगप्रपंचनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥





ॐ । "बुद्धियोगे त्विमां शृण्वि"ति भगवज्ज्ञानोपायं प्रतिज्ञाय कामादिवर्जनयुक्तनिवृत्तकर्मानुष्ठानरूपकर्मयोगं ज्ञानस्य बहिरंगोपायमपंचमाध्यायांतं ज्ञानांतरंगसाधनं ध्यानरूपं योगं च षष्ठे निरूप्याधुना पूर्वोक्तं ध्यानं भक्तिपूर्वकमेवानुष्ठितं ज्ञानसाधनं न चैद्यादेरिव द्वेषपूर्वकं । अतोभक्त्यर्थं भगवन्माहात्म्यं "मयी"त्यादिनाऽध्यायषट्केनोच्यते । 'नत्वेवाहमि'त्यादिना पूर्वषट्केऽपि भगवन्माहात्म्योक्तावपि साधनस्यैव प्राचुर्येणोक्तिः । उत्तरषट्के कचित्कचित्साधनस्योक्तावपि प्राचुर्येणैव भगवन्महिम्नोवर्णनान्न पूर्वोत्तरषट्कयोः सांकर्यं । तयोः पौर्वापर्यबीजं तु यदर्थं साधनं निरूपितं तज्ज्ञानाय ज्ञातव्यमाहात्म्यनिरूपणात्कार्यकारणभावरूपं योगं युंजन्समग्रं मां यथा ज्ञास्यसि तच्छृण्विति प्रतिज्ञांतरकरणादेव व्यक्तमिति श्रोतारमभिमुखीकुर्वन्भगवन्माहात्म्यं वक्तुं प्रतिजानीते ॥ ॥ मयीति । मयि-श्रीकृष्णे आ-अत्यंतं सक्तमनाः-अतीवस्नेहयुक्तमनाः योगं-द्विरूपं ज्ञानोपायं युंजन्ननुतिष्ठन्मदाश्रयः-भगवानेव मया सर्वे कार-

श्रीभगवानुवाच । मय्यासक्तमनाः पार्थ योगं युंजन्मदाश्रयः । असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥ ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । यज्ज्ञात्वा नेह भूयोन्यज्ज्ञातव्यमवशिष्यते ॥२॥ मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः ॥ ३ ॥ ॥

यति सएव मे शरणं तस्मिन्नेवाहं स्थितइति जानन्नित्यर्थः । असंशयं समग्रमिति क्रियाविशेषणं । तव असंशयं समग्रं च यथा भवति तथा मां यथा येन प्रकारेण ज्ञास्यसि तच्छृणु तत्प्रकारकमज्ञानजनकवचनं श्रुत्वा तत्र निष्ठां कुर्वित्यर्थः । तदित्यस्य तथेत्यर्थः ॥ १ ॥ श्रवणं प्रवचनाधीनमित्याह ॥ ॥ ज्ञानमिति । ज्ञानविज्ञानशब्दौ कर्मार्थल्युडंतौ । हे पार्थ ते-तुभ्यं इदं-मदीयं विज्ञानसहितं ज्ञानं-विशेषेण ज्ञातव्यसहितं ज्ञातव्यं माहात्म्यं-सामान्यं विशेषमाहात्म्यं च वक्ष्यामीत्यर्थः । अशेषतइत्यस्य यावदर्जुनयोग्यं तावन्मध्ये शिष्यमाणमकृत्वेत्यर्थः । वक्ष्यमाणं स्तौति ॥ ॥ यदिति । यन्माहात्म्यं ज्ञात्वा भूयः पुनरन्यज्ज्ञातव्यमिह-मदुक्तेर्थे नावशिष्यते-अवशिष्टं नास्तीति ॥ २ ॥ प्रतिज्ञाते ज्ञाने आदरजननाय तस्य दौर्लभ्यमाह ॥ ॥ मनुष्याणामिति । कश्चिदेव पुण्यवान्पु-

रुषः सिद्धये-ज्ञानाय यतति-यतते । यततां ज्ञानार्थं यतमानानामपि मध्ये कश्चिदेव सिद्धिमान्भवतीति योज्यं । सिद्धानां-ज्ञानिनामपि मध्ये कश्चिदेव तत्वतोमां वेत्ति-यथावज्जानाति ॥ ३ ॥ एवमुपोद्घातमुक्त्वाऽधुना प्रथमप्रतिज्ञातं ज्ञानपदोक्तं ज्ञातव्यं तावदाह ॥ ॥ भूमिरित्यादिश्लोकचतुष्टयेन । भूम्यादिपंचमहाभूतानि मनस्तत्वबुद्धितत्वे च । अहंकारपदेन महत्तत्वमुपलक्षणीयं । अहंकारश्चेति च शब्दान्वयः । इत्येवं मदधीना प्रकृतिरष्धा भिन्ना । उद्दिष्टापेक्षया अष्टधेत्युक्तिः । उपलक्षितापेक्षया तु नवधेति ज्ञेयं । मत्प्रेरिता प्रकृतिः पृथिव्यादिकार्यरूपेणैव भिन्नेत्यर्थः ॥४॥ न केवलं जडप्रकृतेरेव स्वकार्येण सह मद्वशा किंतु ब्रह्मादिजगन्माता चित्प्रकृतिरपीत्याह ॥ ॥ अपरेति । यद्वा हरेः परत्वं वक्तुं तदुपयोगितया परावरवस्तुनी आह ॥ ॥ अपरेति । इयं-प्रागुक्ताजडप्रकृतिः जीवाअप्युपलक्ष्यंते ।

**भूमिरापोनलोवायुः खं मनोबुद्धिरेव च । अहंकारइतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥५ ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥**

जडप्रकृतिः जीवाश्चापराः-अधमाः । इतस्तु-जडप्रकृत्यादितस्तु अन्यां जीवभूतां सर्वजीवदेहेषु स्थित्वा तदीयान्प्राणान्तद्देहेषु धारयतीति जीवेत्युक्ता 'जीव'प्राणधारणइति धातोः, सा चसा भूताच सर्वदा विद्यमाना च जीवभूतां 'भूसत्तायां'मिति धातोः । ( प्राणधारकत्वेन सर्वदा विद्यमानामित्यर्थः ) मे-मदधीनां प्रकृतिं ( चित्प्रकृतिं ) मुक्ताअप्युपलक्ष्यंते । श्रियं मुक्तांश्च परां परानुत्तमान्विद्धि । परत्वे हेतुः ययेति-श्रियेत्यर्थः । मुक्तानां पराभासत्वात् ययेत्येवोक्तं । इदं ब्रह्मादिजगद्धार्यतइति ॥ ५ ॥ ननु देहेंद्रियादेरपि सत्वेन प्रकृत्योरेवेशाधीनत्वमहिमोक्तिः कथमित्यतो देहादिसर्वकार्यजातस्य प्रकृत्योरेवांतर्भावइति दर्शयितुमाह ॥ ॥ एतदिति ।  शरीरेंद्रियविषयलक्षणकार्यसहितानि जीवजातरूपभूतानि सर्वाण्येतद्योनीनि-जडाजडप्रकृतिकारणकानि. यथासंभवं तदुत्पन्नानीत्युपधारय-जानीहि । पूर्वं प्रकृत्योरवरत्वं परत्वं च वाक्यभेदेनोक्त्वा 'म'इति स्ववशत्वं चोक्त्वा "ययेदं धार्यते जगदि"ति "एतद्योनीनी"ति जगद्धारकत्वकारणत्वे कथिते तत्र प्रकृती एव भगवद्वशे । जगज्जन्मस्थितिलयास्तु प्रकृत्यधीनाएव नेशाधीना इति प्रतीतिनिरासार्थमाह ॥ ॥ अहमिति । प्रभवप्रलययोः सत्ताप्रतीतिकारणत्वादहं प्रभवः प्रलयश्चेत्युक्तिः । प्रभवप्रलयभोक्तृत्वाच्च तथोक्तिः । जगत्प्रभवादिभोक्तृत्वं च यथा पुत्रादिप्रभवोरिपुलयश्च सुखहेतुरित्युपलब्धः पित्रादेस्तद्भोक्तृत्वं तथा हरेरिति ज्ञेयं । प्रभवाद्युपलब्धेर्भगवत्सुखहेतुत्वं च "आगमिष्यत्सुखं चापि तच्चास्त्येव सदापि तु । तथाप्यचिंत्यशक्तित्वाज्जातं सुख ( मितीर्यतइ ) मतीव चे"ति स्मृत्युक्तदिशा ज्ञेयं । प्रकृतिद्वारा कृत्स्नजगत्कर्ताहमेवेति भावः ॥६॥ ननु परावरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्यावरत्वस्य परत्वस्य चायोगात् ( अवरत्वस्य बाधादुत्तरवाक्यविरोधायोगात् ) परतरत्वशब्दितं सर्वोत्तमत्वं तव प्राप्तमित्यस्तु जगत्पितृत्वं तद्वत्सर्वोत्तमांतरस्यापि जगत्पितृत्वाद्युपपत्तेः कथमहमेव कृत्स्नस्ये-

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणाइव ॥७॥ रसोहमप्सु कौंतेय प्रभास्मि शशिसूर्ययोः । प्रणवःसर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥ ॥ ॥**

त्याद्युक्तिरुपपद्यतइत्यतआह ॥ ॥ मत्तइति । मत्तोन्यत्परतरशब्दितं सर्वोत्तमं किंचिन्नास्ति । येनाहमेवेत्युक्तिरयुक्ता स्यात् । यद्वा अन्यत्परतरं नेत्युक्तया अर्थात् तात्पर्यगत्या लब्धमहमेव परतरइत्यादौ योजयित्वा पश्चान्मत्तइत्यादि योज्यं । तथाचावतारिकायां उक्तदिशा लब्धस्यापि परतरत्वस्यात्रोक्तिः अपरतत्वं यथा भूम्यादिभेदेनानेकविधं यथा चापरतत्वं श्रीदेवीमुक्तभेदेनानेकं तथा परतरमप्यनेकविधमुतैकमेवेति जिज्ञासायामहमेकएवेति ज्ञापयितुमिति ध्ये ( ज्ञे ) यं । न केवलं जगतःप्रभवप्रलयौ मदधीनौ । किंतु स्थितिरपि मदधीनेत्याह ॥ ॥ मयीति । इदं-सर्वं प्रकृत्यादिजगत् ॥७॥ "ज्ञानं तेहमि"ति ज्ञानपदेन प्रतिज्ञातं ज्ञातव्यं "भूमिरापः" इत्यादिश्लोकचतुष्टयेनोक्त्वाऽधुना विज्ञानपदेन प्राक् प्रतिज्ञातं विशेषेण ज्ञातव्यं हरेरलौकिकमाहात्म्यमाह ॥ ॥ रसइति । अप्सुसारभूतोयोरसः तस्य अपा-

मनागंतुकधर्मस्वभावत्वे अब्धर्मेषु संख्यादिषु सारत्वे रसत्वे विशेषतोहरेः कारणत्वात्तद्धोकृत्वाच्च 'रसोहमित्यभेदोक्तिः । शशिसूर्ययोर्या प्रभा तस्याः शशिसूर्ययोरनागंतुकधर्मत्वे चंद्रसूर्यधर्मेषु सारत्वे प्रभात्वे विशेषतःकारणत्वात्प्रभाहमस्मीत्यभेदोक्तिः । सर्ववेदेषु सारभूतोयः प्रणवः तस्य वेदसारत्वं प्रणवत्वं चेशाधीनमित्यभेदोक्तिः खे-आकाशे यः शब्दः ध्वन्यात्मकः तस्याकाशानागंतुकधर्मत्वं संख्याद्याकाशधर्मेषु सारत्वं शब्दत्वं चेशायत्तं तद्भोग्यश्च शब्दइति शब्दोहमस्मीत्युच्यते । नृषु यत्पौरुषं-स्त्रीव्यावृत्तः प्रागल्भ्यविशेषः तस्य सत्ताप्रतीतिकारणत्वात्पौरुषमहमस्मीत्युच्यते ॥ ८ ॥ पृथिव्यां यः पुण्योगंधः तस्य भूम्यनागंतुकधर्मस्वभावत्वे पृथिवीधर्मेषु सारत्वे गंधत्वे हरिः कारणं गंधभोक्ता चेति गंधोहमस्मीत्युच्यते । अहमस्मीति सर्वत्रानुषंगः । विभावसौ यत्तेजोदाहसामर्थ्यं तदुक्तहेतुबलादहमस्मीत्युच्यते । सर्वभूतानां सारभूतं यज्जीवनं तन्नियंतृत्वात्तदप्यहमस्मीत्युच्यते । तपस्विषु सारभूतं यत्तपः-कृच्छ्रादि तदप्यहमस्मि तन्नियामकत्वहेतुनेति

**पुण्योगंधः पृथिव्यां च तेजश्चास्मि विभावसौ । जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥ बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् । बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥ ॥**

भावः ॥ ९ ॥ सर्वभूतानां बीजं-व्यंजकत्वाद्बीजमिव बीजं मां विद्धि न परिणामिकारणं । बुद्धिमतां-ज्ञानिनां या बुद्धिः साप्यहमस्मि । बुद्धिमद्धर्मेषु सारत्वे बुद्धित्वे बुद्धिमद्धर्मत्वे नियामकोहमिति बुद्धिरहमस्मीत्युच्यते । एवं तेजइत्यपि ध्येयं । अप्शशिसूर्यादेरवधितयोक्तस्य सर्वस्योक्तदिशा रसादेरिवेशायत्तत्वाविशेषेपि रसोहमस्मीत्यादिरूपेण निष्कृष्योक्तिः 'लोके कुविंदादिः पटादिद्रव्येष्वेव व्यापारवाननुभूयते, न तु तदीयगंधरसादिगुणेषु तन्निष्ठगंधत्वादिधर्मेषु च पृथग्व्यापारवान्, किंतु पटादिजन्मानुषंगिकजन्मानएव, न तथा भगवान्, अपितु अबादिधर्मेषु रसादिषु तद्धर्मेषु रसत्वादिषु पृथक् प्रयत्नवान्, नत्वबादिनियमानुषंगिकसत्तादिका इति दर्शयितुं अबादिभोगादप्यतिशयेन रसादिभोगः परमेश्वरस्येति दर्शयितुं च । किंच रसादयोह्यत्र हरेरुपासने प्रतिमात्वेन विवक्षिताः रसोहमस्मीत्युपासीतेत्यादिरूपेण प्रतिमायां चाभेदोक्तिः "नामब्रह्मेत्युपासीते"त्यादौ प्रसिद्धा । तथाचाबादिषु भगवदुपासनपेक्षया रसादिषु तदुपास्तेरतिशयाच्च

विशिष्योक्तिः । अपि च ज्ञानार्थिनोहि रसाद्यभिमानिदेहेषु भगवान्सर्वत्र तिष्ठति । अबादिमानिनस्तु तत्पार्षदाइत्युपासते । ततोपि विशिष्योक्तिः । यद्वा "सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमितीर्यते । तद्विशेषपरिज्ञानं विज्ञानमिति गीयते" । इति स्मृत्या सर्वत्र सामान्यतोविष्णोरुत्कर्षज्ञानं ज्ञानपदेन विवक्षितं । "अपरेयमि"त्यादिनोक्तदिशा जडप्रकृतिब्रह्मादिजीवाश्चावराः आसुरजनाश्चवरतराः श्रीर्मुक्तजनाश्च पराः । तत्रापि श्रीर्मुख्यपरा कदापि दुःखासंबंधात् । मुक्तास्तु पराभासाः कदाचिद्दुःखसंबंधात् । ते सर्वे हर्यधीनाः । हरिस्तु परतरः । अत्र तरशब्दस्तमबर्थश्च भवति । हरेरप्यन्यस्य परतमस्याभावादयमेव परतमइति वक्तव्यत्वात् । परत्वेनोक्तश्रीमुक्तानां हरेश्च मध्ये कस्यचित्परतरस्याभावेनायमेव परतरश्चेति वाच्यत्वात् । हरिरेव परतरः परतमश्च ततोन्यत्परतरं परतमं वा किंचिन्नास्ति । नच मुक्ताः पराः श्रीः परतरेति शंक्यं । "मुक्तस्तु स्यात्पराभास" इति तात्पर्योक्त्या तेषां परत्वाभावात् । "अभावादंतरान्यस्य त्विहैकार्थौ तरपूतमावि" ति स्मृतेश्चेत्येवं परापरतत्वविवेचनपूर्वं हरेः सर्वोत्तमत्वं "ज्ञानं तेहं सविज्ञानमि"ति प्रतिज्ञातं ज्ञानं विज्ञानं च द्वयमपि भूमिरित्यादिश्लो-

**बलं बलवतां चाहं कामरागविवर्जितं । धर्माविरुद्धोभूतेषु कामोस्मि भरतर्षभ ॥ ११ ॥ ॥ ॥**

कचतुष्टयेनोक्तं । तद्विज्ञानमेव सर्वस्य तदधीनत्वप्रदर्शनेनाह ॥ ॥ रसइत्यादिना । अत्र रसादिशब्दास्तद्धोकृत्वतन्नियंतृत्वहेतुना भगवन्नामानः । तथाहि अप्स्वित्यादिसप्तम्योऽधिकरणसप्तम्यः । अप्सु स्थित्वा रसमाददामीति तं प्रेरयामि चेति रसनामाहमस्मि । शशिसूर्ययोः स्थित्वा स्वयं प्रभासमानत्वात्प्रभाहमस्मि । सर्ववेदेषु स्थित्वा स्वात्मानं प्रणौति स्तावकं प्रेरयति इति प्रणवनामास्मि । खे स्थित्वा शब्दं प्रेरयतीति शब्दनामास्मि । स्वयं पुण्यः पुण्यगंधः सन्पृथिव्या स्थित्वा सुरभ्यसुरभितया गंधं प्रेरयतीति गंधनामा । भूतेषु स्थित्वा जीवनदत्वाज्जीवननामा । तपःस्विषु स्थित्वा तपःकुरुते तपः प्रेरयति चेति तपोनामा । बीजप्रेरकत्वाद्बीजनामा बुद्धिमतां सप्तम्यर्थे षष्ठी । बुद्धिमत्सु स्थित्वा बोद्धृत्वाद्बुद्धिप्रेरकत्वाद्बुद्धिनामा । तेजस्विषु स्थित्वा तेजःप्रेरयतीति तेजोनामा । अबादिसर्ववस्तूनां रसगंधप्रभादिधर्मान्व्यवस्थया ददातीति रसादिनामा ( हं ) हरिरित्यर्थः ॥ १० ॥ बलवतां बलवत्सु स्थित्वा कामरागविवर्जितं बलमस्मि-

विषयभोगनिरपेक्षतया नित्यपूर्णबलवत्त्वात्कामववविवर्जितबलात्मास्मि । अस्थाने अप्रयुज्यमानत्वाद्रागवर्जितबलात्मास्मीत्यर्थः । रागिणोह्य-स्थानेपि बलं प्रयुंजते । भूतेषु धर्माविरुद्धोयः कामः सोस्मीत्यर्थः । अत्र पुण्योगंधइति कामरागविवर्जितमिति गंधबलादेः पुण्यत्वादि-विशेषणोपादानं तु गंधबलकामादिषु विशिष्टेष्वेव भगवानुपास्यः । न त्वशुचिषु धर्मविरुद्धेष्विति ज्ञापनायेति ध्येयं ॥ ११ ॥ न केवलं रसादिधर्मप्रेरकः किन्नामाऽबादिसर्वप्रेरकश्चेत्याह ॥ ॥ येचेति । ये च भावाः-पादार्थाः सात्विकाः-सत्वगुणविकाराः राजसास्तामसाश्च तान्सर्वान्पदार्थान्मत्तएवोत्पन्नान्विद्धि । तथा ते मयोत्पन्नाः पदार्थाः मयि मदाधारतया मदुपजीवनेनेति यावत् वर्ततइति विद्धि । यथेदं जगत् त्वदधीनं तथा त्वमपि किमेतदधीनइत्यतोनेत्याह ॥ ॥ नत्वहं तेष्विति । तदुपजीवनेनाहं नैव तिष्ठामीत्यर्थः । ये च येचेति पृथगुक्तिः सर्वेषां त्रिगुणविकारत्वेपि सत्वादिप्राचुर्याभिप्रायेणेति ज्ञेयं ॥१२॥ ननु विज्ञानोक्त्युपसंहारपरपूर्वश्लोके सत्वादिगुणनिष्पन्नानां सर्वपदार्थानां

**येचैव सात्विकाभावा राजसास्तामसाश्चये । मत्तएवेति तान्विद्धि नत्वहं तेषु ते मयि ॥१२॥ त्रिभिर्गुणमयै-र्भावैरेभिःसर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यःपरमव्ययम् ॥ १३ ॥ ॥ ॥**

- नैव -च

भगवानेव कारणं तदाश्रयश्चेत्युक्तम् । ते गुणातीतइतिचोक्तप्रायं तदेतदयुक्तं, गुणातीतत्वेन अज्ञायमानत्वस्य सगुणत्वेन ज्ञायमानत्वस्य च तत्रायोगादित्यतआह ॥ ॥ त्रिभिरिति । त्रित्वं योग्यतया गुणविशेषणं । सत्वरजस्तमोरूपत्रिगुणमयैः गुणत्रयात्मकैरित्यर्थः । तादात्म्या-र्थोयं मयट् । भावैः-पदार्थैः । उपादानोपादेययोरभेदात् त्रिगुणतत्कार्यरूपैः एभिर्भावैः पदार्थैरित्यर्थः । यद्वा गुणमयैस्त्रिभिः प्रागुक्तरीत्या सात्विकादिभेदभिन्नैरेभिः प्रमितैर्भावैः पदार्थैः मोहितं सत् इदं ज्ञानिभिन्नं जगदेभ्योगुणतद्विकारेभ्यः परं-व्यतिरिक्तं अतएव देहतोप्य-व्ययं मां नाभिजानाति । विपरीतं च जानातीत्यर्थः । अत्र एभिरिति सर्वपदार्थानां गुणमयत्वप्रदर्शनाय.प्रमितसर्वपरामर्शित्वात्तस्य।नच भगवद्विषय ( क ) सगुणत्वादिमोहस्य कथं गुणमयात्मकाः पदार्थाः कारणं । येन गुणमयैर्भावैर्मोहितमित्युक्तिर्युक्ता स्यादिति शंक्यं ।



लोके गुणमयदेहादिकं दृष्ट्वा ईश्वरदेहादिरप्येतादृशः देहत्वादिति हेतुना गुणमयमिति मोहितमिति तात्पर्यात् । ज्ञानिनोयथावत्तया जानं-तीति तद्व्यावृत्त्यर्थमिदमिति जगद्विशेषणं । उपायाभावादज्ञजनस्य गुणातीतत्वेन भगवतोनुपलंभः । देहादित्वानुमानाभासेन सगुणतया विपरीतोपलंभश्चेत्युक्तं भवति ॥ १३ ॥ ननु ब्रह्मादिदेहेंद्रियादिदृष्टांतेन देहादित्वहेतुना भगवान् गुणमयदेहइति धीः कथं मोहः । बाधकाभावात् । ज्ञानिनां धीर्बाधिकेति चेत् । बहुतरपामरधीविरोधेन तस्याएवाल्पीयस्याअयथार्थत्वोपपत्तेः । नच तेषामेव कालांतरे बाधधीस्सेत्स्यतीति शंक्यं । अनादिकालेप्यजातस्योत्तरत्राप्यसंभवादित्यतोयथावज्ज्ञानाभावविपरीतज्ञानयोर्गुणाभिमानिनी दुर्गैव कारणं । देहत्वाद्यनुमानं तु निमित्तमात्रमिति भावेनाह ॥ ॥ दैवीति । सृष्ट्यादिरूपक्रीडादिगुणविशिष्टस्य देवस्येयं दैवी-देवसंबंधिनी । को-देवइत्यतोदैवीत्युक्तं विवृणोति ॥ ॥ ममेति । मदीया-ममातिप्रियेति यावत् । एषा-प्रमाणप्रमिता गुणमयी-सत्वादिगुणात्मिका गु-

**दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥ १४ ॥ न मां दुष्कृ-तिनोमूढाः प्रपद्यंते नराधमाः । मायया॓पहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥ ॥ ॥**

णाभिमानिनीति यावत् । माया-दुर्गा मोहिकेति शेषः कालांतरे तत्कृतोमोहोनिवर्तता मित्यतआह ॥ ॥ दुरत्ययेति । अत्येतुमशक्य तत्कृतं मोहं कोपि नात्येतुं शक्नोतीत्यर्थः । अतोन कस्यापि बाधकप्रत्ययोभवतीति भावः । मम मायेत्येव पूर्तौ दैवीत्युक्तिः मदीयत्व-मात्रेण कथं दुरत्ययेत्यतः सृष्टिस्थितिलयादिगुणविशिष्टतयातिसमर्थस्य मे अतिप्रियत्वेन तस्याअप्यतिशयशक्तिरवादिति ज्ञापयितुं । गुणमयी-त्युक्तिस्तु गुणाभिमानित्वात्तमोगुणेनैवं विधं मोहं जनयतीति सूचयितुमिति ज्ञेयं । ननु यदि न केवलमनुमानं किंतु भगवतोप्युल्लसिता माया मोहहेतुः तर्हि न कथंचिदत्येतुं शक्येति कस्यापि ज्ञानं न स्यादित्यतआह ॥ ॥ मामिति । एवशब्दोत्र भगवत्प्रतिपत्तावित्थंभाव-सूचकः । अन्यत्परित्यज्य गुर्वादिवंदनादिकमपि भगवदुक्तत्वेनैव कुर्वंतोमां ये प्रपद्यंते-शरणं प्राप्नुवंति ते एतां-मायां मायाकृतमोहं तरंति-अतिक्रामंतीत्यर्थः ॥ १४ ॥ ननु यदि त्वत्प्रतिपत्तिर्मायातरणोपायस्तर्हि त्वां प्रपद्य सर्वे किमिति मायां नात्यायन्नित्यतआह

॥ ॥ नमामिति । दुष्कृतिनः-पापशीलाः अतएव मूढाः-विवेकहीनाः अतएव नराधमाः मायया ( हरीच्छया स्वभावेनच ) अभि-भूताधिष्ठानयाथात्म्यज्ञानाः अतश्च मूढाः-मिथ्याज्ञानिनः अतएवासुरं भावमसुरत्वमाश्रिताः अतोमां न प्रतिपद्यंतेइति । असुष्विंद्रियेषु रताअसुरास्तदीयं भावमाश्रिताइत्यर्थः ॥ १५ ॥ सुकृतिनोमां भजंतः प्रपद्यंते तत्राप्यस्ति तारतम्यमित्याह ॥ ॥ चतुर्विधाइति । ये सुकृतिनः-पूर्वजन्मकृतपुण्यवंतोजनाः मां भजंते-सेवंते च ते चतुर्विधाः । आर्तः-रोगाद्युपद्रुतः । जिज्ञासुः-आत्मज्ञानेच्छुः । अर्थार्थी-धनेच्छावान् । ज्ञानी च-आत्मतत्त्वविवेचेति इति शब्दोत्र ध्येयः । द्विः संबोधनमादरार्थं ॥१६॥ नित्ययुक्तः-सदा भगवत्समाधिमान् । एकस्मिन्न मय्येव प्राधान्येन भक्तिर्यस्यासौ एकभक्तिः विशिष्यते-अतिशयितोभवति । कुतइत्यतोममातिप्रियत्वादित्याह । प्रियो-

चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥ तेषां ज्ञानी नित्ययुक्तः एकभक्तिर्विशिष्यते । प्रियोहि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतं । आस्थितः सहि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥ बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥ ॥ ॥

हीति ॥ १७ ॥ एकप्रशंसया प्राप्तेतरनिंदां निराह ॥ ॥ उदाराइति ॥ एते चत्वारोजनाः । ज्ञानी मे आत्मैव-स्वरूपमेवातिप्रियत्वात् । मदधीनसत्तादिरिति ज्ञानवत्त्वाद्वा अभेदोपचारः । यद्वा आप्नोतीत्यात्मा-मत्प्राप्तिमानित्यर्थः । इति मे मतं-सिद्धांतः सहि-ज्ञानी । अनुत्तमां गतिमुद्दिश्य युक्तात्मा-समाधियुक्तमनाः मामास्थितः-प्राप्तइति योजना ॥ १८ ॥ एवंविधज्ञानी दुर्लभइत्याह ॥ ॥ बहूना-मिति । बहूनां जन्मनामंते । वासुदेवः सर्वं-वासुदेवाधीनसत्तादिमादिति ज्ञानवान् । सर्वं संपूर्णं वस्तु वासुदेवइति ज्ञानवानिति वार्थः । एतेन भगवज्ज्ञानिनामेव मोक्षइति कुतइति शंका निरस्ता । भगवतएव पूर्णत्वेन ज्ञानादिदानसमर्थत्वादिति । समां प्रपद्यते समहात्मा

ताहशज्ञानवान्सुदुर्लभः । एतेन-वासुदेवज्ञानेन यदि मोक्षस्तर्हि सर्वेषां सस्यादिति शंका निरस्ता । वासुदेवज्ञानेन मोक्षसत्वेपि न तज्ज्ञा-निनः सर्वे । अतोन सर्वेषां मोक्षइति तात्पर्यात ॥ १९ ॥ लोके भगवज्ज्ञानिनां बहूनां दृश्यमानत्वात्कथं दौर्लभ्यमित्यतआह ॥ ॥ कामैरिति । तैस्तैः कामैः स्वस्वाभिमानकामैरिच्छाभिरपहृतज्ञानाः तं तं नियमं तत्तदागमोक्तनियममाश्रित्य स्वया प्रकृतिः-स्वभावः । स्वकीयस्वभावेन नियताः-वशीकृताः संतोन्यदेवताः ब्रह्मादिदेवताः प्रपद्यंते । ज्ञानितया दृश्यमानाः नानाविधकामापहृतभगवदुत्तमत्वज्ञानाः संतोन्यदेवतायाजिनोन्यदेवताएव प्रपद्यंते ततः शुद्धोभागवतोदुर्लभइति भावः ॥ २० ॥ ननु मिश्रयाज्यपि क्रमेण भागवतोभवति किमि-त्यतः सार्कि नित्यत्रैविध्यरूपः उत शुद्धभागवतोनिर्णायकाभावादिनिमित्तेनान्यदेवतायाजी । आद्ये आह ॥ ॥ योयोइति । शुद्धभागवत-

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः । तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥ यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥ सतया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान् हि तान् ॥ २२ ॥ अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसां । देवान् देवयजोयांति मद्भक्तायांति मामपि ॥ २३ ॥ ॥ ॥

तमोयोग्याभ्यामन्योविष्णुतत्वज्ञानाविपरीतज्ञानाभ्यां हीनोयोयः कारणविशेषवशाद्यां यां-ब्रह्मरुद्रादितनुं भक्तस्तद्भक्तिमान् श्रद्धया आ-स्तिक्यबुद्ध्यार्चितुमिच्छति । तस्य तस्य तामेव श्रद्धां अचलां अहं विदधामि ॥ २१ ॥ सच तया श्रद्धया युक्तस्तस्य देवस्याराधनमी-हते-करोति । ततस्तदाराधनात्तद्देवस्थेन मयैव विहितान् तान्स्वाभिप्रेतान्कामान्लभते च मदितरस्य फलदाने सामर्थ्याभावात् । द्वितीये-प्याह ॥ ॥ योयइति । भक्तः स्वतोविष्णुभक्तएव योयः ज्ञात्वापि विष्णुं कारणांतरवशादेव यां यां ब्रह्मादितनुं । प्राग्वदेवेहतेइत्यंत-स्यार्थः । ततः क्रमेणेशानुग्रहप्राप्तगुरूपदेशद्वारा तस्य विष्णोराराधनमीहते । ततोभगवदाराधनान्मयैव विहितान्मोक्षादिकामान्लभते चेति ॥ २२॥ अन्यदेवतायाजिनामपि त्वत्तएव फलं चेत्कुतस्तत्त्यागेन त्वदाराधनमेव कार्यमित्यतआह ॥ ॥ अंतवत्त्विति । विष्णोः रमाब्रह्मा-

दिभ्यः परत्वं ज्ञात्वा अन्यदेवतायाजिनां तेषां फलमंतवदेव । कुतः अल्पमेधसां अल्पफलएव बुद्धिमत्त्वादित्यर्थः । कथमंतवत्त्वमित्यतउक्तं ॥ ॥ देवानिति । विष्णूत्कर्षं ज्ञात्वा ब्रह्मादिदेवतायाजिनोब्रह्मादिदेवान्यांति न तु मां अतोंतवत्फलं । मद्भक्तास्तु देवान् प्राप्यान्ते मामपि यांति । अतोनंतं तेषां फलं । तस्मान्मदाराधनं प्राधान्येन अन्यदेवताराधनं च परिवारतया कार्यमिति ॥ २३॥ ननु कोविशेषस्तवान्येभ्यो ब्रह्मादिभ्यः येन त्वां प्राप्तानामनंतफलं देवान्प्राप्तानामंतवत्फलमित्यतआह ॥ ॥ अव्यक्तमिति । अबुद्धयोऽज्ञानिनः परमितरविलक्षणं-अनुत्तमं-उत्तमरहितं अव्ययं मम भावं-प्रमाणाव्यभिचरितत्वरूपं याथार्थ्यमजानंतः अव्यक्तं-कार्यदेहादिहीनं मां व्यक्तिमापन्नं-कार्यदेहादि-युक्तं मन्यंते । कार्यदेहादिराहित्यं तद्युक्तान्यदेवेभ्योमम विशेषइति भावः । यद्वा यथा देवयाजिनोमद्याजिनश्च त्रैविद्याः भागवताश्च वर्तंते तथा मद्द्वेषिणश्च केचन संतीत्याह ॥ ॥ अव्यक्तमिति । सर्वात्मना ज्ञेयत्वहेतुना अव्यक्तपदार्थं मामीश्वरं व्यक्तिं-सर्वात्मना ज्ञेयत्वमापन्नं

अव्यक्तं व्यक्तिमापन्नं मन्यंते मामबुद्धयः । परं भावमजानंतो ममाव्ययमनुत्तमम् ॥२४ ॥ नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोकोमामजमव्ययम् ॥ २५ ॥ ॥ ॥

प्राप्तं जीवमिति यावत् । मम परं भावमजानंतोऽल्पबुद्धयोमन्यंते । जीवैक्यं मन्यंतइत्यर्थः । यद्वा“मयि सर्वमिदं प्रोतं” इत्यादावुक्तादिशा प्रेरकत्वादिमहामहिमवांश्चेद्भवान्तत्कथं भवतः केचिज्जीवाभेदं मन्यंतइत्यत आह ॥ ॥ अव्यक्तमिति । प्रागुक्तदिशाऽव्यक्तं मामीश्वरं व्यक्तिमापन्नं जीवं जीवाभेदेन मां मन्यंते ये ते मम परं भावमजानंतोल्पबुद्धयस्तमोयोग्याइत्यर्थः ॥ २४ ॥ ननु तेषां त्वद्विषयविपरीत-ज्ञानकृतनिंदया तव खेदोस्ति किमित्यतः परंभावमजानंतोन्यथामन्यंतइत्युक्तविपरीतज्ञानहेतुभूतमज्ञानं न स्वतंत्रं किंतु मदायत्तमेव अतः कुतोमम खेदइति भावेनास्य स्वाधीनतामाह ॥ ॥ नाहमिति । योगेन-सामर्थ्यलक्षणोपायेन मायया-देव्या च योगसहिता माया यो-गमायेति विग्रहः । समावृतोहं न सर्वस्य प्रकाशः । कर्मणि घञ् । प्रकाशविषयोन भवामि । अतोमयैव मूढोऽयं लोकोमामजमव्ययं

जन्मव्ययहीनं नाभिजानातीति ॥ २५ ॥ ननु यवनिकाद्युभयभागवर्तिनोः परस्पराज्ञानवत् तवापि भूतविषयाज्ञानं स्यादित्यतोयवनिकास्थानीयापि माया न मां बध्नातीत्याह ॥ ॥ वेदेति मायाकृतबंधहीनत्वादहं भूतभविष्यद्वर्तमानभूतानि प्राणिनोवेद-जानामि । मां तु कश्चन कोपि यथावत्त्वेन न वेद मायाकृतबंधसत्वाल्लोकस्येति । ब्रह्मादिरतिशक्तोपि किंचिदेव वेत्ति न सर्वथेति भावः ॥ २६ ॥ पूर्वं "दैवीह्येषा गुणमयी"ति'नाहं प्रकाश'इति च गुणमयी माया भगवांश्च जीवाभेदादिविषयमोहे मुख्यं कारणमुक्तं । इदानीमिच्छाद्वेषप्रवृद्धिजनितसुखदुःखादिद्वंद्वविषयमोहोप्यवांतरकारणमस्तीत्याह ॥ ॥ इच्छेति । इच्छाद्वेषाभिवृद्धिजातेन द्वंद्वमोहेन-द्वंद्वानि-सुखदुःखलाभालाभादीनि । तद्विषयमोहः । दुःखादिर्यथा हेयस्तथा वैषयिकसुखादिरपि हेयः । तथाप्युपादेयत्वेन तस्य यज्ज्ञानं तद्रूपमिथ्याज्ञानेनेत्यर्थः

वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥ इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत । सर्वभूतानि संमोहं सर्गे यांति परंतप ॥ २७ ॥ येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् । ते द्वंद्वमोहनिर्मुक्ता भजंते मां दृढव्रताः ॥ २८ ॥ ॥ ॥

सर्वभूतानि सर्गे-सर्गकाले । सर्गकालमारभ्यैवेति यावत् । संमोहं-भगवद्विषयजीवाभेदादिमिथ्याज्ञानं यांतीत्यर्थः । यद्वा यत्केषांचिदद्वैतज्ञानं मदिच्छाधीनमिति यदुक्तं भगवता तदयुक्तं । "ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः । कामक्रोधाभिभूतत्वादहंकारवशं गता", इत्यादाविच्छाद्वेषादेरेवाद्वैतज्ञानहेतुत्वोक्तेरित्यतः तदवांतरकारणं । सर्गात्पूर्वमभावेन सर्गमारभ्यैवोत्पत्तेरिति भावेनाह ॥ ॥इच्छेति इच्छाद्वेषोत्पन्नद्वंद्वमोहेन जीवेश्वरौ तद्धर्मभूतानि सर्वज्ञत्वाल्पज्ञत्वस्वातंत्र्यपारतंत्र्यसर्वशक्त्यादिरूपाणि च द्वंद्वानि तद्विषयमिथ्याज्ञानेन सर्वभूतानि सर्गकालमारभ्यैव संमोहं-उक्तद्वंद्वमोहदार्ढ्यं यांतीति । द्विः संबोधनमादरार्थं॥ २७ ॥ सर्वभूतानि संमोहं यांति चेत्कुतोमुक्तिमार्गइत्यतोद्वंद्वमोहरहिताश्च केचित्संतीत्याह ॥ ॥ येषामिति । येषां-पुण्यकर्मणां जनानां पापमंतगतं-नष्टं-ते द्वंद्वमोहनिर्मुक्ताः प्रागुक्त

द्विविधद्वंद्वविषयमिथ्याज्ञानहीनाः दृढव्रताः संतोमां भजंतइत्यर्थः ॥ २८ ॥ भगवद्भजने किं फलं भवतीत्यतः प्रागुक्तभजनानुवादेन तस्य ब्रह्मज्ञानरूपं फलमाह ॥ ॥ जरेति । ये साधुप्रकृतयः जरामरणमोक्षाय लक्षणया स्वर्गादिकामनिवृत्तये मामाश्रित्य यतंति-यतंते भजंतइत्यनुवादः । ते तद्ब्रह्म विदुः कृत्स्नमध्यात्मं विदुः-जानंति । अखिलं कर्म च विदुः । जरामरणमोक्षायेत्येतत् मोक्षशक्तिरन्यासक्तितः प्रशस्तेति मोक्षासक्तिस्तुत्यर्थं वा । प्रागुक्तदिशान्यकामानिवृत्त्यर्थं वा । न सर्वथा तदुद्देशेन भजनविधिः । एकांतभक्तानां मोक्षापेक्षाभावात् । "मामेव ये प्रपद्यंते मायामेतां तरंतित" इति भगवद्भजनफलस्योक्तावपीह तदुक्तिः भगवद्भजनमेव ज्ञानद्वारा मायातरणोपायोना-

जरामरणमोक्षाय मामाश्रित्य यतंति ये । ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥ साधिभूताधिदैवं मां साधियज्ञं च ये विदुः । प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥ ॐतत्सदिति० (ज्ञानविज्ञानयोगोनाम) ज्ञानसाधनभक्तिपूर्वकध्यानयोगोनाम(भक्त्यर्थं भगन्महिमावर्णनं नाम ) सप्तमोध्यायः ॥७॥

न्यइति ज्ञापनायेति ॥ २९ ॥ तद्ब्रह्मेत्युक्त्या ब्रह्म भगवतोन्यदिति शंकानिरासायाह ॥ ॥ साधिभूतेति । अधिभूताधिदैवसहितं साधियज्ञं-अधियज्ञसहितं च मां ये विदुः । अपि च प्रयाणकाले मां विदुः ते युक्तचेतसः समाधियुक्तमनस्काइत्यर्थः । यद्वा प्रयाणकालेपि च मां विदुः-स्मरंति युक्तचेतसोमामाश्रयंति ये जनाः ते तत् ब्रह्म विदुरिति ॥ ३० ॥ इति श्रीराघवेंद्रयतिकृते श्रीमद्गीतार्थसंग्रहे ज्ञानसाधनभक्तिपूर्वकध्यानयोगोनाम ( भक्त्यर्थं भगवन्महिमावर्णनं नाम ) सप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥



" ॐ "ते ब्रह्म तद्विदुरि"त्यस्य "प्रयाणकालेपि च मां विदुरि"त्युक्तस्य च व्याख्यानमत्र प्राधान्येन क्रियते । तत्प्रसंगादंतकालस्मरणफलं तदुपायप्रकारोब्रह्मप्राप्तिमार्गश्चात्रोच्यतइति पूर्वानंतर्यमध्यायमेदः स्वस्मिन्नेकवाक्यता च । स्मरणविषयत्वप्राप्यत्वरूपोमहिमैव वर्ण्यतइति षट्कांतर्भावश्च ज्ञेयः । पूर्वत्र तद्ब्रह्म विदुरिति परोक्षनिर्देशेन ब्रह्मभगवतोन्यदिति प्रतीयते । तथा साधिभूतं साधिदैवं साधियज्ञं मां च विदुरिति योजनया भगवज्ज्ञानाद्ब्रह्मज्ञानमन्यादिति प्रतीयते । "वासुदेवात्मकं ब्रह्मे"त्यादौ भगवानेव ब्रह्मेति प्रतीयते । अतोविप्रतिपत्त्या जातसंशयात्पृच्छति ॥ ॥ किं तद्ब्रह्मेति । अत्राद्यश्लोके किमिति स्वरूपप्रश्नः । द्वितीये कथमिति प्रकारप्रश्नः । अधिगतोयज्ञमधियज्ञइति प्रादिसमासोनाव्ययीभावः । अत्र देहे अधियज्ञः कथमित्यर्थः । अस्मिन्देहे अधियज्ञः कइति स्वरूपप्रश्नः । अस्मिन्देहइति पद-

अर्जुनउवाच । किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम । अधिभूतं च किं प्रोक्तमाधिदैवं किमुच्यते ॥ ॥ १ ॥ अधियज्ञः कथं कोत्र देहेऽस्मिन्मधुसूदन । प्रयाणकाले च कथं ज्ञेयोसि नियतात्मभिः ॥ २ ॥ श्रीभगवानुवाच । अक्षरं ब्रह्म परमं स्वभावोध्यात्ममुच्यते । भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

द्वयकृत्यं परिहारवाक्ये वक्ष्यामः अंतकाले किमर्थं कथंभूतः केन प्रकारेण स्मर्तव्यइत्यर्थः ॥ १ ॥ २ ॥ प्रश्नाष्टकस्यापि क्रमेणोत्तरमाह ॥ ॥ अक्षरमित्यादिना । किं तद्ब्रह्मेति त्वया पृष्टं ब्रह्मपरममक्षरमुत्तमाक्षरं परमक्षरशब्दितं वस्तु अत्र भगवतोन्यद्ब्रह्मेति शंकायां किं ब्रह्मेति प्रश्ने अहं ब्रह्मेति परिहारे कार्ये अक्षरं ब्रह्मेत्युक्तिः "तस्मादक्षरं तस्मादक्षरमित्याचक्षतएतमेवसंतमि"त्यादौ विष्णावेवाक्षरत्वप्रसिद्धेरक्षरमित्युक्त्यैव विष्णुर्ब्रह्मेति वा अहमेव ब्रह्मेति वा फलितत्वात् अज्ञानामक्षरत्वमपि स्वस्य ज्ञापनाय तथैव वाच्येऽपि परममित्यक्षरविशेषणं तु "अधमं त्वक्षरं या सा प्रकृतिर्जडरूपिके"त्यादेः प्रकृत्यादेरप्यक्षरशब्दार्थत्वात् तद्व्यावृत्त्यर्थमिति ज्ञेयं । आत्मानं जीवमधिकृत्य यदस्ति जीवोपकारित्वेन वर्तमानदेहेंद्रियांतःकरणरूपं तदध्यात्मं । स्वभावशब्दः स्वस्य ते विदुरिति प्रकृतजीवस्य भवति उप-

कारित्वेन वर्तते इति व्युत्पत्त्या देहादिपदार्थवाची । देहेंद्रियांतःकरणलक्षणः पदार्थः । अध्यात्ममिति प्रथमांताव्ययपदेनोक्तव्युत्पत्त्यो-च्यते । यद्वा अध्यात्मपदं सप्तम्यंतमुपेत्य अध्यात्ममात्माधिकाराख्यग्रंथे प्रतिपाद्यं किमिति चेत्तत्र प्रश्नः तदाध्यात्ममात्माधिकारग्रंथप्रति-पाद्यं स्वभावः-स्वशब्दः ते विदुरिति प्रकृतजीववाची भवति सदैकप्रकारेणास्तीति भावः । स्वश्चासौ भावश्च सदैकरूपेण वर्तमानश्चेति स्वभावः । अध्यात्मशब्दितात्माधिकारग्रंथोक्तस्तु सदैकप्रकारोजीवइत्यर्थः । स्वइत्येवोक्तौ स्वशब्दस्यात्मीयेऽपि प्रयोगादंतःकरणादिरपि प्रतीयेत । अतोभावइत्युक्तिः । "अन्नमयं हि सोम्यमन" इत्यादेर्मनःप्रभृतेरन्नविकारत्वेनैकप्रकारत्वाभावात् । भावइत्येवोक्तौ ईश्वरस्यापि सदैकरूपत्वात्तेन तस्य प्रतीतौ द्वितीयप्रश्नोनोत्तरितः स्यादतः स्वइत्युक्तिः तेन च प्रकृतत्वाज्जीवएव परामृश्यतइति पदद्वयमप्यर्थवदेवेति भावः । किं कर्मेत्यस्योत्तरं ॥ ॥ भूतेत्यादि । भूतानां-जीवानां भावानां-जडपदार्थानां चोद्भवकरः-उत्पत्तिकरोविसर्गोविशेषेण सर्जनं

अधिभूतं क्षरोभाव पुरुषश्चाधिदैवतम् । अधियज्ञोहमेवात्र देहे देहभृतां वर ॥ ४ ॥ ॥ ॥

ईश्वरकर्तृकोव्यापारः कर्मेति शब्दितइत्यर्थः ॥ ३ ॥ अधिभूतं च किमित्यस्योत्तरं ॥ ॥ अधिभूतमिति सदेहान् जीवानधिकृत्य तदुप-कारित्वेन वर्तमानं वस्तु । क्षरोभावः-विनाशिभावः कार्यभूतः पदार्थः । भवत्युत्पद्यतइति व्युत्पत्तेः । अधिदैवं किमित्यस्योत्तरं पुरुषश्चे-त्यादि । अधिदैवतं दैवतानि सर्वदेवानधिकृत्य तत्स्वामित्वेन वा देवताप्रकरणे मुख्यतया प्रतिपाद्यत्वेन वा वर्तमानं च किमिति पृष्टं वस्तु पुरुषः पुरि देहे शेते-तिष्ठतीति पुरुषोजीवः । सच सर्वजीवाभिमानी संकर्षणोब्रह्मा वा ज्ञेयः । अस्मिन्देहेऽधियज्ञः कइत्यस्योत्तरं ॥ ॥ अधियज्ञोहमेवेति । प्रागुक्तदिशाधियज्ञइति प्रादिसमासः । अधिष्ठितोयज्ञोनेनेति बहुव्रीहिर्वा । अत्र लौकिकदेहे यज्ञाधिष्ठाताऽह-मेवेत्यर्थः । अत्रेति देहविशेषणं ईश्वरदेहव्यावृत्त्यर्थं । भगवतः प्राणिदेहइव स्वदेहे पृथगभावेन नियंतृत्वाभावात् । कर्तृभोक्तृफलदातृणां देहे प्रेरकत्वेन वर्तमानस्यात्र विवक्षितत्वात् । देहइत्युक्तिरप्यस्मिन्देहेऽधियज्ञः कइति कृतप्रश्नानुरोधात् प्रश्ने वा अधियज्ञः कइत्येवोक्तावि-

ग्न्यादेरप्यधियज्ञस्य हरेरन्यस्य सत्त्वात् प्रश्नस्य तद्विषयत्वे सिद्धार्थतादोषप्रसक्तेस्तद्व्यावृत्यर्थं कर्तृभोक्तृफलदातृणां देहे प्रेरकतया वर्तमानोधियज्ञः कइत्यर्थलाभाय देहइत्यवश्यं वाच्यत्वात् किंच पूर्वाध्यायांते साधियज्ञं मां विदुरिति भगवतोधियज्ञसाहित्योक्त्याधियज्ञो-भगवतोन्योऽग्न्यादिरिति प्राप्तशंकाव्युदासायच देहइत्युक्तिः । सर्वप्राणिदेहगताधियज्ञाख्यरूपविशेषापेक्षया साहित्याभिप्रायेण साधियज्ञं मामित्युक्तिरिति । देहइत्युक्त्या साहित्योक्तेर्गतिसूचनेन भगवदन्यत्वशंकानिरासात्साहित्योक्त्या प्राप्तभेदशंकाया अवश्यं परिहार्यत्वादेव प्रथमप्राप्तस्यात्र देहेऽधियज्ञः कथं केन प्रकारेणेति प्रश्नस्य परिहारमनुक्त्वा कइति प्रश्नएव परिहृतः । किंच सर्वयज्ञभोक्तृत्वसर्वयज्ञप्रवर्तकत्वप्रकारेण हि भगवतोधियज्ञत्वं तच्च सर्वयज्ञभोक्तृत्वादिकं"भोक्तारं यज्ञतपसामि"त्यादिपंचमांतोक्तं श्रुतवतोर्जुनस्य सिद्धमित्यधियज्ञोहमिति भगवतोयज्ञाधिष्ठातृत्वरूपाधियज्ञत्वोक्त्या कथमाधियज्ञइत्यस्य भोक्तृत्वादिना प्रकारेणाधियज्ञत्वमिति परिहारस्य प्राप्तत्वाच्च तत्परिहारोनोक्तइति । यद्वा कथमित्यस्य किंलक्षणकइत्यर्थः । अधियज्ञोहमेवेत्याधियज्ञाभिन्नत्वेनोक्तस्य हरेः "कविं पुराणमि"ति कवित्वादिलक्षणोक्त्या 'एवं लक्षणकोधिय'इति प्राप्तेर्नोक्तमुत्तरं । देहभृतां देहइति चोभयत्रान्वयोज्ञेयः । श्लोकद्वयस्यायमर्थसंग्रहः । ब्रह्म मम व्याप्तरूपं परममक्षरमुच्यते । अध्यात्मं-स्वभावः जीवचिदुपकारिदेहेंद्रियांतःकरणलक्षणः पदार्थः जीवराशिर्वा । कर्म तु चराचरविषयकेश्वरकर्तृकसर्जनं अधिभूतं तु-क्षरोभावः सदेहजीवोपकार्युत्पत्तिविनाशवान्देहेंद्रियाद्यन्यपदार्थउच्यते । अधिदैवतं च पुरुषः ब्रह्मा संकर्षणोवा । अत्र देहस्थितोधिकयाज्यत्वहेतुनाऽधियज्ञाख्योरूपविशेषोऽहमेवेति साहित्योक्त्या प्राप्तभेदशंकानिरासायैवकारप्रयोगः । यद्वा स्वभावोभगवत्स्वभावोध्यात्ममुच्यते अधिकत्वात् । क्षरोभावः सर्वजीवराशिरधिभूतं । भूतशब्दितपृथिव्यादिजडाधिकत्वात् । "षकारः प्राणः प्राण आत्मे"ति श्रुत्या षकारस्य चेष्टापर्यायप्राणवाचित्वात् पुरुप्राणत्वहेतुना पुरुषशब्दिता रमा-अधिदैवतं । दैवतशब्दितोविष्णुरधिकोयस्या इति व्युत्पत्तेरिति । एतेन ते वद्ब्रह्मेत्यर्धद्वयस्यायमर्थः । ब्रह्म व्याप्तं तत मे रूपं ते विदुः कृत्स्नाध्यात्मं जीवोपकारिदेहेंद्रियांतःकरणलक्षणं वस्तु जीवराशिं वा सृष्टिलक्षणं भगवत्कर्म चाखिलं विदुः साधिभूताधिदैवमधिभूतशब्दितसदेहजीवोपकारित्वेन स्थितोत्पत्तिविनाशिपृथिव्यादिपदार्थस्थत्वेन तन्नियंतृतया तत्सहितं तद्गतरूपविशेषसहितमित्येके । पृथिव्यादिभूताधिकतयाधिभूतशब्दितसर्वजीवराशौ स्थिततया

तत्सहितमिति वा । अधिदैवशब्दितसर्वजीवाधिपतौ ब्रह्मणि संकर्षणे वा स्थितत्वेन तत्सहितं तद्गतरूपविशेषसहितमित्येके । अधिदैवशब्दितरमासहितामिति वा । साधियज्ञं च अधियज्ञशब्दितसर्वप्राणिगतरूपविशेषसहितं च मां ये विदुरिति ॥ ४ ॥ अंतकाले च किमर्थं स्मर्तव्योसीति प्रश्नस्योत्तरमाह ॥ ॥ अंतकालेचेति । अंतकाले-मृतिकाले मामेव स्मरन्कलेवरं-देहं त्यक्त्वा यः प्रयाति समद्भावं-मयि निर्दुःखनिरतिशयानंदानुभवात्मिकां सत्तां याति । संदेहोत्रार्थे नास्तीत्यर्थः । निर्दुःखनिरतिशयानंदाभिव्यक्तिरूपमद्भावप्राप्त्यर्थं मत्स्मरणमंतकाले कार्यमित्युक्तं भवति ॥५॥ तत्कथमित्यतः सामान्यव्याप्तिमाह ॥ ॥ यंयमिति वा । अथवा यं यमपि भावं-पदार्थं अंते स्मरन्कलेवरं त्यजति तंतमेव भावं याति । अंतकाले स्मरणोपायमाह ॥ ॥ सदेति । सदा-निरंतरं तद्भावेन तस्मिन्नंतर्गतेन मनसा । "तद्भावोंतर्गतं मन" इत्यभि-

अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरम् । यः प्रयाति समद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥ यं यं वापि स्मरन् भावं त्यजत्यंते कलेवरम् । तं तमेवेति कौंतेय सदा तद्भावभावितः ॥६॥ तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च । मय्यर्पितमनोबुद्धिः मामेवैष्यस्यसंशयः ॥ ७ ॥ अभ्यासयोगयुक्तेन चेतसाऽनन्यगामिना । परमं पुरुषं दिव्यं याति पार्थानुचिंतयन् ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

धानात् । भावितोवासितः नित्यं तच्चिंतया जाततद्गोचरस्मृतिजनकसंस्कारवानित्यर्थः । एवं रूपः पुमान् भावमंते स्मरंस्त्यजतीत्यन्वयः । एतच्च नित्यस्मृतिरूपं सदा तद्भावभावितत्वमपरोक्षज्ञानं जनयित्वा भोगेन प्रारब्धावसानानंतरं अंतकाले स्मृतिहेतुः न साक्षादिति ज्ञेयं । 'स्मरंस्त्यजती''ति त्यागस्मरणयोरेककालत्वप्रतीतावप्यंतइत्युक्तिस्त्यागकाले महादुःखात्स्मरणमसंभावितमिति मंदाशंकाव्युदासाय सर्वदा शरीरं हेयमिति मन्यमानानां ज्ञानिनां न देहत्यागोदुःखहेतुरतस्तदा स्मरणं नासंभावितमिति प्रदर्शनार्था अज्ञस्यापि त्यागक्षणात्पूर्वमेव दुःखं न तु त्यागक्षणइति ॥ ६ ॥ अंतकालस्मरणस्य फलोक्तेरुपयोगमाह ॥ ॥ तस्मादिति । नित्यं मत्स्मृतेः मत्प्राप्तिहेतुचरमकालीनमत्स्मरणकारणत्वादित्यर्थः । मय्यर्पितमनोबुद्धिः सन्युध्यस्व ॥ ७ ॥ सदा तद्भावभावितत्वं स्पष्टयति ॥ ॥ अभ्यासेति । अभ्यासः-पुनः



पुनरावर्तनं तद्रूपयोगेनोपायेन युक्तेन सहितेनानन्यगामिनाऽनन्यविषयेण चेतसा परममुत्तमं दिव्यं सृष्ट्यादिक्रीडादिगुणयुक्तं । दीव्यतेरौणादिकोयक् । परममुत्तमं पुरि सर्वप्राणिदेहे शेते-नियंतृतया वर्ततइति वा पूर्णत्वाद्वा पुरुषाख्यं पृपालनपूरणयोरित्यतः कुषन्धातोरुकारः । अनुचिंतयन्याति परमं पुरुषमित्यनुषंगः ॥ ८ ॥ कथंभूतः स्मर्तव्योसीति प्राकृतप्रश्नस्योत्तरमाह ॥ ॥ कविमिति । कविं-सर्वज्ञं पुराणमनादिं अनुशासितारं-शिक्षकं अणोरणीयांसमत्यंताणुप्रमाणं सर्वस्य चराचराख्यविश्वस्य धातारं-धारणपोषणकर्तारं अचिंत्यरूपं साकल्येन मनसोऽविषयं आदित्यवर्णं-रविप्रभं तमसः प्रकृतेर्मृत्योर्वा । "मृत्युर्वाव तम" इति श्रुतेः ताभ्यां परस्तात् तदुभयास्पृष्टत्वेन स्थितमिति शेषः ॥ ९ ॥ भक्त्या युक्तः सन्प्रयाणकाले योगबलेन भ्रुवोर्मध्ये प्राणमावेश्याचलेन मनसा यः स्मरेत् सदिव्यं परं उत्तमं

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । सर्वस्य धातारमचिंत्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥ प्रयाणकाले मनसाऽचलेन भक्त्या युक्तोयोगबलेन चैव। भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्सतं परं पुरुषमुपैति दिव्यम् ॥१०॥ यदक्षरं वेदविदोवदंति विशंति यद्यतयोवीतरागाः । यदिच्छंतोब्रह्मचर्यं चरंति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥ ॥ ॥ ॥ ॥

पुरुषमुपैतीति योजना । अत्रादित्यवर्णमिति सशरीरत्वप्राप्तेर्जन्मादिप्रसंगः इति शंकाव्युदासाय तमसः परस्तादित्युक्तं । तद्देहस्याप्राकृतत्वान्न जन्मादिदोषइति भावः । योगबलेनैव भ्रुवोर्मध्ये प्राणमावेश्येत्येतद्वायुजयादिमन्मात्रासाधारणं । न तु उपेक्षमिषोःसर्वस्य साधारणं । वायुजयहीनानां ज्ञानभक्तिवैराग्यपूर्त्यैव मुक्तिसिद्धेः । वायुजयादिमतां तु ईषज्ज्ञानाद्यसंपूर्तावपि वायुजयादौ निपुणानां तद्बलादेवाल्पमुक्तिः किंचिच्छीघ्रं च भवतीति विशेषइति ॥ १० ॥ वायुजयादिमतां मरणकाले कर्तव्यमेव सध्येयं स्पष्टयति ॥ ॥ यदक्षरमिति । यद्वा केन प्रकारेण स्मर्तव्योसीति प्रश्नस्योत्तरं सध्येयमुच्यते ॥ ॥ यदक्षरमित्यादित्रिभिः । यत्परं अक्षरं-सर्वथा नाशरहितं

वेदविदोवदंति । यच्च पदं वीतरागाः अपगतकामादिदोषाः यतयः यत्नशीलाः विशंति-प्रविशंति । यच्च पदमिच्छंति ब्रह्मचर्य-मनआ-दीनां ब्रह्मणि चरणं ब्रह्मचर्यं चरंति अनुतिष्ठंति तत्पदं पद्यते मुमुक्षुभिः प्राप्यतइति पदं । पदूलगताविव्यतः कर्मण्यकारप्रत्ययः । स्वरूपं संग्रहेण-संक्षेपेण प्रवक्ष्ये । तत्पदस्मरणप्रकारं वक्ष्यामीत्यर्थः ॥ ११ ॥ एवं ध्येयस्वरूपं तत्स्मरणप्रकारोक्तिं च प्रतिज्ञायेदानीं तत्प्रकार-माह ॥ ॥ सर्वेति । सर्वद्वाराणि वायुसंचारस्थानसर्वसुषुम्नेतरनाडीर्नियम्य । हृदि-हरति जगदिति हृन्नामके नारायणे । हरतेःक्विप् । ह्रस्व-स्यपिति कृति तुक् । मनोनिरुध्य चात्मनः प्राणं-प्राणवायुं मूर्ध्नि-सुषुम्नामार्गेण ब्रह्मरंध्रे आधाय योगधारणां आस्थितः-अखंडस्मृतिरूप-योगधारणएवाभियुक्तइत्यर्थः ॥ १२ ॥ ओमित्येकमक्षरं वाचकं यस्य तदोमित्येकाक्षरं ब्रह्म-परंब्रह्म मां व्याहरन्ननुस्मरन् । ओमित्युच्चार्य तद्वाच्यं

सर्वद्वाराणि संयम्य मनोहृदि निरुध्य च । मूर्ध्न्याधायात्मनः प्राणमास्थितोयोगधारणाम् ॥१२॥ ओमित्ये-काक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं सयाति परमां गतिम् ॥१३॥ अनन्यचेताः स-ततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥ मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवंति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥ ॥ ॥

ब्रह्मरूपं मामनुस्मरन्यः देहं त्यजन्प्रयाति-प्रैति सयाति परमां गतिं ॥ १३ ॥ अंतकाले मत्स्मरणं नित्याभ्यासवतएव भवति नान्यथेति स्पष्टमाह ॥ ॥ अनन्यचेताइति । सततमन्यविषयकचेतोहीनः सन् योमां नित्यशः स्मरति तस्य नित्ययुक्तस्य-नित्योपायवतः योगिनः-संपूर्णोपायवतः अहं सुलभः अंतकाले स्मृतिविषयोभवानीत्यर्थः । यद्वा सुलभ-सुखेन लभ्यः-प्राप्यइत्यर्थः ॥ १४ ॥ प्रागुक्तपरमगतिः केत्यतोमत्प्राप्तिरूपेति तदुपायोक्तिपूर्वं परमगतिविवरणार्थोयं श्लोकः । अतएव परमगतिः । सुलभइत्युक्तभगवल्लाभश्च तत्प्राप्तिरूपमेव फलमिति भावेन तत्प्राप्तिं स्तौति ॥ ॥ मामिति । महात्मानोज्ञानिनोमामुपेत्य-प्राप्य दुःखालयं-दुःखाश्रयं अशाश्वतं-अनित्यं नाशशि-

रस्कं जन्म देहयोगं पुनर्नाप्नुवंति । कुतः यतः परमां संसिद्धिं-मोक्षलक्षणां गताः-प्राप्ताः । ततइति योजना ॥ १५ ॥ ब्रह्मादीन्प्राप्ता-नामपि पुनर्जन्माभावात् किं विशिष्योच्यते मामुपेत्येत्यादि तत्राह ॥ ॥ आब्रह्मेति । आङ्त्राभिविधौ । मेरुस्थब्रह्मसदनादारभ्यार्वाक्तनाः लोकाः तत्र गताः जनाइति यावत् । पुनरावर्तिनः पुनर्भूमावागत्य जन्मादिमंतोभवंतीत्यर्थः । ननु मेरुस्थब्रह्मसदनादर्वाक्तनलोकस्थाः पुनरावर्तिनइत्युक्त्या अर्थात् "आमेरुब्रह्मसदनादाजनाच्च जनिर्भुवि"इति स्मृत्या च ततउपरितनलोकस्थाः न पुनरावर्तिनइति प्राप्तत्वात् । मामुपेत्य पुनर्जन्म नाप्नुवंतीति कथमुच्यतइत्यतः तदेव पुनराह ॥ ॥ मामिति । सत्यं मेरुस्थब्रह्मसदनाज्जनोलोकाच्चोपरिस्थितानां जनिर्नेति । तथापि तल्लोकस्थत्वमात्रं न जन्माभावे प्रयोजकं किंतु तत्र स्थितं मामुपेत्य स्थितानामेव जन्म पुनर्न विद्यते । अतः प्रागुक्तं नायुक्तमिति भावः ॥ ॥ तदुक्तम् "तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजमि"ति । अभावः-जननाभावइत्यर्थः । यत्तु "आजनान्न जनिर्भुवी"-

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन । मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते ॥ १६ ॥ ॥ ॥**

ति जनोलोकादुपरि स्थितानाम्प्यपुनरावृत्त्युक्तेः ब्रह्मसदनादर्वाक् स्थिताः पुनरावर्तिनः तदुपरिस्थाः अपुनरावर्तिनइत्युक्तिरयुक्तेति चोद्यं तद्ब्रह्मभवनपदेन मेरुस्थब्रह्मसदनग्रहणात्परिहृतं । सत्यलोकब्रह्मसदनग्रहणेपि आब्रह्मभवनात्सत्यलोकस्थब्रह्मसदनादर्वाक्तनतपोलोकस्थजनांशेन पुनरावर्तिनइत्यर्थः । नचाजनादिति वचनविरोधः । तत्र स्मृतौ जनिर्नेत्यस्य कार्त्स्न्येन जनिर्नेत्यर्थकत्वात् । जनादिलोकस्थानामप्यंशेनापि भूमौ लयांते लयादौ च कार्त्स्न्येन जनिमृत्योर्भावात् । "आब्रह्मभवनादि"त्यत्र ततउपर्यार्थिकजन्माभावोक्तिस्तु मुख्यजन्माद्यभावोपेतमुक्तजनविषया । तेषामंशेनापि भूमौ जननाद्यभावादिति । एतेन "आमेरुब्रह्मसदनादाजनादि"ति स्मृत्या मेरुजनांतरालिकानां जन्माजन्मनोरर्थात्प्राप्तेर्विरोधइति प्रत्युक्तं । अजनेर्मुक्तविषयत्वात् जनेरुक्तादिशा मुक्तेतरविषयत्वादिति ॥ ॥ तदुक्तं । "निय-

माजन्मनोभावोमुक्तस्यैवे''त्यादि ॥ १६ ॥ मत्प्राप्तावेवापुनरावृत्तिरिति प्रतिज्ञामात्रेणोक्तस्य स्थापनायादौ सृष्टिप्रलयादिकर्तृत्वं आत्मनोवक्तुं उपोद्घातमाह ॥ ॥ सहस्रेति । सहस्रशब्दोत्र बहुशब्दपर्यायः । ये जनाः यत्परब्रह्मणोहः । तद्बहुयुगपर्यंतं द्विपरार्धात्मकं विदुर्जानंति । ब्रह्मणः परब्रह्मणोरात्रिं च युगसहस्रां तां बहुयुगांतां द्विपरार्धात्मिकां विदुः । ''तेहोरात्रविद''इत्यर्थः । यदित्यस्य यइति वार्थः । यइति शेषोवा । परब्रह्मणः कूटस्थनित्यस्यापि सृष्ट्यादिसव्यापारनिर्व्यापारावस्थयोरुपचारादहोरात्रत्वोक्तिः ॥ १७ ॥ ततः किमित्यतआह ॥ ॥ अव्यक्तादिति । ब्रह्मणोऽहरागमे महाप्रलयांतइति यावत् । अव्यक्ताद्भगवतोव्यज्यंतइति व्यक्तयः-गुणवै-

सहस्रयुगपर्यंतमहर्यद्ब्रह्मणोविदुः । रात्रिं युगसहस्रां तां तेऽहोरात्रविदोजनाः ॥ १७ ॥ अव्यक्ताद्व्यक्तयः सर्वाः प्रभवंत्यहरागमे । रात्र्यागमे प्रलीयंते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥ भूतग्रामः सएवायं भूत्वा भूत्वा प्रलीयते । रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥ परस्तस्मात्तु भावोन्योऽव्यक्तोव्यक्तात्सनातनः । यः ससर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥ ॥ ॥ ॥

षम्यादयः कार्यपदार्थाः प्रभवंति-उत्पद्यंते । रात्र्यागमेऽव्यक्तसंज्ञके तत्रैव भगवति प्रलीयंते ॥ १८ ॥ महामहिम (त्व) ख्यापनाय सृष्टिप्रलययोरविच्छेदमाह ॥ ॥ भूतेति । प्राग्जन्मलयवत्त्वेनोक्तोयः सएवायं भूतग्रामश्चराचरसमुदायः ब्रह्मणोऽहरागमे प्रत्यहमिति यावत् प्रभवति । भूत्वा भूत्वा चोत्पद्योत्पद्य रात्र्यागमेऽवशोभगवद्वशः सन्प्रलीयते । भूतग्रामोभूत्वा भूत्वा रात्र्यागमे प्रलीयते पुनरहरागमे प्रभवतीति वा योजना ॥ १९ ॥ भगवतोहोरात्रोक्त्या तस्यापि जगतइवान्यस्मादुत्पत्तिलयौ स्तइत्यतोनेत्याह ॥ ॥ परइत्यादि-द्वाभ्यां । अव्यक्तस्तु-भगवांस्तु तस्मात्प्रभवप्रलयोपेतात् व्यक्ताद्भूतग्रामादन्योविलक्षणोभावः स्वतंत्रः परः उत्तमः सनातनोऽनादिश्च योभ-



गवान्सर्वेषु नश्यत्सु न विनश्यति ॥ २० ॥ सर्वात्मना नाशाभावादेवाव्यक्तोभगवानक्षरइत्युक्तः तस्मादक्षरं ''तस्मादक्षरमिति''श्रुत्यादौ तां परमां गतिमाहुः । तामिति विधेयापेक्षया स्त्रीलिंगता । कुतोव्यक्तोभगवान्परमप्राप्यइत्यतआह ॥ ॥ यं प्राप्येति । तन्मम धाम-स्वरूपमित्यर्थः ॥ २१ ॥ ''भक्त्या युक्तोयोगबलेन चैवे''त्यत्र साधनांतरैः सह भगवत्प्राप्तिसाधनत्वं भक्तेरुक्तं । तत्र साधनांतरसाम्यशंकानिरासाय भक्तेरेव परमसाधनत्वमिति भावेनाह ॥ ॥ पुरुषइति । भूतानि यस्यांतःस्थानि । सर्वमिदं जगत् येन ततं-व्याप्तं

अव्यक्तोक्षरइत्युक्तस्तामाहुः परमां गतिम् । यं प्राप्य न निवर्तंते तद्धाम परमं मम ॥२१॥ पुरुषः सपरः पार्थ भक्त्या लभ्यस्त्वनन्यया । यस्यांतःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥ यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयातायांति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥ ॥ ॥

सपरमः भगवाननन्ययाऽन्यासाधारणया तु भक्त्या लभ्यः-प्राप्यइत्यर्थः । अत्र परमयेत्युनुक्तावपि पुनर्वचनबलादेव परमत्वलाभइति भावः । उक्तं हि ॐपरेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबंधः ॐइति सूत्रे भक्तेः प्राधान्यं ॥ २२ ॥ भगवंतं प्राप्तानां अन्येषां चापुनरावृत्तिपुनरावृत्ती कथिते । । तत्र यद्देवताधिष्ठितमार्गाभ्यां गतानामपुनरावृत्तिपुनरावृत्ती भवतः तादेवताः प्रतिज्ञापूर्वकमाह ॥ ॥ यत्रेत्यादित्रयेण । कालइति यत्कालाभिमानिदेवताधिष्ठितमार्गे कालानभिमानिदेवताधिष्ठितमार्गे च प्रयातायोगिनः अनावृत्तिमावृत्तिं च

१-अ० ३ पा० ३ अ० ३४ सू० ४४ परेणच-परमात्मनैव, आपरोक्ष्यं, न भक्त्याअस्वतंत्रया, शब्दस्य-भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषः भक्तिरेव भूयसीति श्रुतेः, ताद्विध्यं तु-भक्तेः स्वातंत्र्येण दृष्ट्यादिहेतुत्ववाचित्वंतु, कारणत्वाद्युक्तमौपचारेणेतिशेषः, अनुबंधस्तु-भक्तिस्तु. भूयस्त्वात्-प्रवचनाद्यन्यसाधनापेक्षाया भक्तेः प्राधान्यात्.

यांति तं कालं तत्कालाभिमानिदेवताअन्यदेवताश्च वक्ष्यामीत्यर्थः ॥ २३ ॥ तादेवताउद्देशेनाह ॥ ॥ अग्निरिति । अग्निनामकदेवता । ज्योतिरिति अर्चिर्नामकदेवता । अहरहरभिमानिदेवता । अभिजिद्देवतासहितेत्यपि ध्येयं । शुक्लः-शुक्लपक्षाभिमानिनी पौर्णमास्यभिमानिना सहेति ग्राह्यं । षण्मासाभिमानिनी उत्तरायणाभिमानिनी विषुवाभिमानिना सहेति ज्ञेयं । तत्र क्रमेण निर्दिष्टाग्न्याधिष्ठितमार्गे प्रयाताः ब्रह्मविदोजनाः ब्रह्म गच्छंति ॥ २४ ॥ धूमइत्यादि धूमाद्यभिमानिदेवतानिर्देशः । तत्र धूमादिदेवताधिष्ठितमार्गे प्रयाताइति योज्यं । योगी-कर्मयोगी । पूर्वत्र ब्रह्मविदइति अत्र योगीति विशेषणाच्च क्रमान्मार्गद्वयस्य ज्ञानकर्मसाध्यत्वमुक्तं ध्येयं । एतच्च मार्गद्वयं अंतकाले

अग्निर्ज्योतिरहःशुक्लः षण्मासाउत्तरायणम् । तत्र प्रयातागच्छंति ब्रह्म ब्रह्मविदोजनाः ॥ २४ ॥ धूमोरात्रिस्तथाकृष्णः षण्मासादक्षिणायनम् । तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्यययाऽवर्तते पुनः ॥ २६ ॥ नैते सृती पार्थ जानन्योगी मुह्यति कश्चन । तस्मात्सर्वेषु कालेषु योगयुक्तोभवार्जुन ॥ २७ ॥ ॥ ॥ ॥

तद्विषयस्मृतिमतामेवेति ज्ञेयं ॥ ॥ तदाह सूत्रे । ॐयोगिनः प्रतिस्मर्येते स्मार्ते चैते ॐइति ॥२५॥ उक्तौ मार्गौ निगमयति ॥ ॥ शुक्लेति । एते-प्रागुक्ते शुक्लकृष्णे गती-मार्गौ जगतः ज्ञानकर्मयोगिजगत्संबंधिनौ शाश्वत्यौ मते । एकया गतोनावृत्तिं याति । अन्यया गतः पुनरावर्ततइति ॥ २६ ॥ मार्गयोरुक्तेः फलमाह ॥ ॥ नैते इति । हे पार्थ एते-प्रागुक्ते सृती-मार्गौ जानन्योगी सृत्युपायभूतज्ञानकर्मानुष्ठानवान् । यद्वा योगी ब्रह्मापरोक्षज्ञानवानेते सृती जानन्साक्षात्कुर्वन्कश्चन कोपि न मुह्यति । भगवद्विस्मृतिरूपमोहं न प्राप्नोति ।

१ अ० ४ पा० २ अ० १० सू० २२ ॥ एते-ब्रह्मचंद्रगती, योगिनः-ज्ञानयोगिनः, कर्मयोगिनः प्रति ( द्वितीयार्थे ) स्मर्येते-"अग्निर्ज्योतिरहः शुक्लः" "धूमोरात्रिस्तथाकृष्णः" इति स्मृतिभ्यामुच्येते-ज्ञान कर्मसाधनतयास्मर्येतेति यावत् । नतु कालादिकृते इत्यर्थः, एतेगती, स्मार्ते. अनुस्मृतिसाध्येत्यर्थः ॥

तस्माद्योगस्य पुमर्थहेतुत्वात्सर्वदा भगवज्ज्ञानभक्तिपूर्वं स्वोचितनिवृत्तकर्मानुष्ठानरूपोपाययुक्तोभवेति द्विः-संबोधनमादरार्थं फलोक्त्योपसंहरति ॥ ॥ वेदेष्विति । वेदाध्ययनयज्ञानुष्ठानकृच्छ्रादितपश्चरणेषु यदेव पुण्यफलं प्रदिष्टं-निर्दिष्टमस्ति । तत्सर्वमेवेतिवा एवशब्दान्वयः । इदं अध्यात्मादिस्वरूपं भगवतोशेषस्रष्टृत्वं शुक्लकृष्णमार्गादिकं च प्रागुक्तं विदित्वा अत्येति-अतिक्रमति । ततोऽतिशयितफलवान् भवति ।

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् । अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥ ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अंतकालस्मरणफलं तदुपायप्रकारः ब्रह्मप्राप्तिमार्गवर्णनं ( अक्षरब्रह्मयोगो ) नामाष्टमोऽध्यायः ॥८॥ ॥

किंतदित्यतआह ॥ योगीति । ज्ञानोपायवान् आद्यं परं स्थानं विष्णोःस्थानमुपैति चेति । यद्वा मार्गौ-ब्रह्म च यः पश्येत्साक्षादेवापरोक्षतः । ''सर्वपुण्यातिगोऽमुष्मिन्यात्यसौ ब्रह्मतत्परमि''त्युक्तदिशा मार्गब्रह्ममात्रपरामर्शकोत्रेदं शब्दः । विदित्वेत्यस्य साक्षात्कृत्वेत्यर्थः ॥ २८ ॥ इति श्रीगीतार्थसंग्रहे राघवेंद्रयतिकृते अंतकालस्मरणफलं तदुपायप्रकारः ब्रह्मप्राप्तिमार्गवर्णनं नाम अष्टमोऽध्यायः ॥ ८ ॥ ॥



ॐ । सप्तमेध्याये“साधिभूताधिदैवं मां साधियज्ञं च ये विदुरि”त्यादिनोक्तं भगवन्माहात्म्यं अत्राध्याये प्रपंच्यते । नचैवं तदानंतर्यमेवास्य शंक्यं । आध्यात्मादिपदानां निरूपणेन परिहारोक्त्यनंतरमेवात्र साधिभूतादिवाक्यार्थभूतभगवन्माहात्म्यवर्णनस्यावसरादिति ध्येयं । अतिचित्रमहिमानं वक्तुं तत्रादरजननाय प्रतिज्ञापूर्वं वक्ष्यमाणं प्रशंसति ॥ ॥ इदंत्विति । गुह्यतममतिगोप्यमिदं वक्ष्यमाणं ज्ञानं । कर्मणि ल्युट् । ज्ञातव्यं विशेषेण ज्ञातव्यसहितं । अनसूयवे-असूयादिदोषहीनाय । एवंरूपएवाधिकारीति ज्ञापनायैतद्विशेषणोक्तिः । ते-तुभ्यं प्रवक्ष्यामि यज्ज्ञात्वा-अशुभान्मोक्ष्यसे । यच्छब्दस्येदं त्वित्यनेनान्वयः ॥ १ ॥ पुनः प्रशंसति ॥ ॥ राजेति । इदं वक्ष्यमाणं राजविद्या राज्ञी चासौ विद्या च राजविद्या-विद्यानां प्रधानविद्येत्यर्थः । राजगुह्यं गुह्यानां-गोप्यानां मध्ये प्रधानगोप्यं । पवित्रं

श्रीभगवानुवाच । इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे । ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ ॥ १ ॥ राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥ अश्रद्दधानाः पुरुषा धर्म्यस्यास्य परंतप । अप्राप्य मां निवर्तंते मृत्युसंसारवर्त्मनि ॥ ३ ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः ॥ ४ ॥ ॥ ॥

पावित्र्यहेतुं । अतएवोत्तमं । प्रत्यक्षावगमं-अक्षेषु प्रति प्रतिस्थितः प्रत्यक्षो भगवान् । कुगतिप्रादयइति प्रादिसमासोनाव्ययीभावः । अवगम्यते-साक्षात्क्रियते येन तत् अवगमं । ग्रहवृद्दनिश्चिगमश्चेति करणेगमेरप्रत्ययः । प्रत्यक्षस्य हरेरवगमं प्रत्यक्षावगमं सर्वेंद्रियप्रेरकभगवदपरोक्षज्ञानसाधनं । धर्म्यं-सर्वाधारकत्वाद्धर्मोभगवान् । धृञ्धारणइत्यतः औणादिकोमन्प्रत्ययः । धर्मादनपेतं तद्विषयं धर्म्यं । सर्वधारकभगवद्विषयपरोक्षज्ञानं भगवदपरोक्षज्ञप्तिसाधनं । तद्विषयपरोक्षज्ञानं उक्तगुणकं सुकरं चेन्न कोपि संसारी स्यादित्यतोवा अकुर्वतां किमनिष्टमित्यतोवाह ॥ ॥ अश्रद्दधानाइति । धर्म्यस्य-भगवद्विषयस्यास्य ज्ञानस्याश्रद्दधानाः-पुमर्थहेतुत्वरूपश्रद्धाविहीनाः पुरुषाः मामप्राप्य मृत्युसंसारवर्त्मनि निवर्तंते-नितरां वर्तंते-पतंतीत्यर्थः ॥ ३ ॥ यस्य धर्म्यपदेन प्रत्यक्षावगमपदोक्तभगवज्ज्ञानसाधनत्वमुक्तं । यच्च

प्रवक्ष्यामीति प्रतिज्ञातं । यच्च ज्ञात्वेत्यादिना प्रशंसितं । यदकरणे च निंदा कृता । तज्ज्ञानविज्ञानयोर्मध्ये ज्ञानशब्दितं ज्ञातव्यं तावदाह ॥ ॥ मयेत्यादिना अहंक्रतुरिति पर्यंतेन । इदं सर्वं चराचरात्मकं जगदव्यक्तमूर्तिना । बहुव्रीहिः । मया ततं-व्याप्तं । व्याप्तत्वे सर्वत्र कुतोन दृश्यइत्यतोऽव्यक्तेति विशेषणं । ततमित्युक्त्या जगतआधारता स्वस्याधेयता घटादेरिव प्राप्ता तां निराह ॥ ॥ मत्स्थानीति । मदाधारतयैव सर्वभूतानि सजडजीवजातानि । तेषु चाहं नावस्थितः तदाधारतया तदुपजीवनेन नवर्तइत्यर्थः ॥ ४ ॥ त्वयिचेद्भूतानि तिष्ठंति तर्हि भूतले वर्तामहे भूतलशैत्यादिनाहं शीतोभवामीति ज्ञानमिव भगवति वयं वर्तामहइति धीः स्यात् । तथा वन्ह्यादौष्ण्य शैत्याभ्यां भूतलादेरौष्ण्यशैत्यवदन्योन्यधर्मसंक्रांतिश्च स्यादित्यतआह ॥ ॥ नचमत्स्थानीति । त्वगिंद्रियेण तं ज्ञात्वान्योन्यधर्मसंक्रांतिं चासाद्य न तिष्ठंति । भगवतःप्राकृतस्पर्शराहित्वात् । “अशब्दमस्पर्शमरूपमित्यादिश्रुतेः । न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन चेति”

नच मत्स्थानि भूतानि पश्य मे योगमैश्वरम् । भूतभृन्नच भूतस्थो ममात्मा भूतभावनः ॥५॥ यथाकाशस्थितोनित्यं वायुः सर्वत्रगोमहान् । तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥ ॥ ॥

स्मृतेः । भूताधारोपि कथं तदनाधारइत्यतउक्तं ॥ ॥ पश्येत्यादि । ऐश्वरं-ईश्वरसंबंधिनं मे योगं-सामर्थ्यं । “योगोसावुपायः शक्तिरेव चेति”वचनात् । पश्य मम तादृशीं शक्तिमित्यर्थः । पूर्वत्राव्यक्तमूर्तिनेति मूर्तावुक्तायां सास्मदादीनामिव भिन्नेति भ्रांतिनिरासाय स्वलक्षणं भूताधारत्वादिकं स्वदेहस्याप्याह ॥ ॥ भूतभृदिति । भूतभावनः भूतानामुत्पत्तिकर्ता ममात्मा मम देहः अहमिव भूतभृत् भूतस्थश्च न भवति इत्यर्थः । अत्र मम देहइति वक्तव्ये ममात्मेत्युक्तिः अचेतनस्य देहस्य कथं भगवल्लक्षणं स्यादिति शंका स्यात्तन्निवृत्तये तस्य चेतनत्वं पृथग्वाच्यं स्यादात्मपदप्रयोगे तु देहत्वं चेतनत्वं द्वयमप्युक्तं स्यात् । आत्मपदस्य देहचेतनरूपोभयार्थत्वादिति ॥ ५ ॥ भगवतः सर्वाधारत्वेप्यन्योन्यधर्मासंक्रांत्यादिरसंभावितइत्यतोदृष्टांतेन तदुपपादयति ॥ ॥ यथेति । अवकाशं विनावस्थितिर्यस्य योग्यनित्यमाकाशे

स्थितोमहान्वायुः सर्वत्रगोऽपि तत्तद्धर्मान्नाप्नोति । शैत्यसारभौदिकं तु वायुसंबद्धजलाद्यवयवगतमेव । न वायुगतं । तथा सर्वाणि भूतानि मत्स्थानि नान्योन्यधर्मसंक्रांतिमंतीत्युपधारयेति ॥ ६ ॥ प्रतिज्ञातज्ञानप्रदर्शनाय "मयेत्यादिना" हरेर्व्याप्तत्वसर्वाधारत्वाद्युक्त्वा "नचे" त्यादिश्लोकद्वयेन तदुपपाद्याधुना पुनः प्रतिज्ञातज्ञानप्रदर्शनार्थं प्रलयादिकारणत्वमाह ॥ ॥ सर्वेति । कल्पक्षये-प्रलयकाले सर्वाणि भूतानि सजडजीवजातानि मामिकां-मदधीनां त्रिगुणात्मिकां प्रकृतिं यांति-तत्र लीयंते । पुनस्तानि भूतानि कल्पादौ विशेषेण विविधतया चाहं सृजामि ॥ ७ ॥ सृष्टौ प्रकृतेरनुक्तेः साधनानि विनैव सृष्टिं करोतीति प्रतीतिनिरासायोक्तं विवृणोति ॥ ॥ प्रकृतिमिति । स्वां-स्वाधीनां प्रकृतिं त्रिगुणात्मिकामवष्टभ्य उपादानतयाश्रित्य प्रकृतेर्वशात्तदधीनत्वादवशं-स्वानधीनं । यद्वा मदधीनप्रकृतिवशत्वादेवाका-

सर्वभूतानि कौंतेय प्रकृतिं यांति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥ न च मां तानि कर्माणि निबध्नंति धनंजय । उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥ ॥ ॥

रवाच्यब्रह्मरूपमदधीनं इमं कृत्स्नं भूतग्रामं पुनः पुनः विसृजामि । प्रकृत्यादिसाधनावष्टंभोन तेन विना स्रष्टुमसामर्थ्यात् । किंतु लीलयैव । प्रकृत्यादेः साधनताशक्तेर्मदायत्तत्वादिति ज्ञापनाय स्वामिति विशेषणोक्तिः । तदुक्तं "तदनन्यत्वनये" ॐयुक्तेःशब्दांतराच्चॐइति सूत्रे ॥ ८ ॥ ननु नानाविधसृष्टिं कुर्वतस्तव जीवस्येव कर्मबंधोस्ति किं इत्यतोनेत्याह ॥ ॥ नचेति । तानि सृष्ट्यादीनि कर्माणि मां न निबध्नंति । कुतः उदासीनवदासीनं । स्वतएव कर्तृत्वं न मायिकं चेत्कथमुदासीनतया वर्तनमित्यतउदासीनतयासीनामित्यनुक्त्वा उदासीनवदित्युक्तं ।

१ अ० २ पा० १ सू० १९ युक्तेः-साधनानां साधनत्वं यदात्माधीनमिष्यते ॥ तदा साधनसंपत्तिरैश्वर्यद्योतिकाभवेत् ॥ इति साधनांतरेण सृष्टेर्युक्तत्वात् शब्दांतराच्च-अयमभःसंभूतहिरण्यगर्भइत्यष्टावित्यादिशब्दांतराच्च ईश्वरस्यापि लीलया सृष्टौ साधनांतरोपादानसंभवः सिद्धः ॥

वस्तुतोऽनुदासीनोप्युदासीनसदृशतया वर्तमानमित्यर्थः किं तत्सादृश्यमित्यतउक्तं"असक्तं तेषु कर्मस्वि"ति । उदासीनस्य यथासक्तिर्नास्ति तथा ममापि तत्र सृष्ट्यादिकर्मणि सक्तिशब्दितस्यादरस्य आयासस्य वा अभावान्न निबध्नंतीत्यर्थः ॥९॥ ननु पूर्वं"प्रकृतिं स्वामवष्टभ्य विसृजामी"त्युक्त्या "उदासीनवदासीनमि"त्युक्त्या च निष्क्रियत्वं प्रतीयते । एवं तर्हि प्रकृतिरेव स्वातंत्र्येण जगत्प्रसूयते त्वयि तु प्रकृतिसन्निधानात्कर्तृत्वोपचारमात्रमित्यापन्नमित्यतआह ॥ ॥ मयेति । यद्यप्येषा शंका"मामिकामिति""स्वामिति" "असक्तं तेषु कर्मस्वि"त्युक्त्या निरस्ता । तथापि स्वस्वातंत्र्यं स्पष्टं वक्तुं प्रागुक्तपरिहाराच्छादनेनोक्तां शंकां हृदि कृत्वा"मयेति"श्लोकेन पर्यहार्षीदिति ज्ञेयं । "अध्यक्षेणेति"प्रातिपदिकेन साक्षात्कारः तृतीयया च कर्तृत्वमुच्यते । प्रकृतिंहेतुकप्रसवं साक्षात्कुर्वता तत्प्रयोजककर्त्रा च "मयेति" दर्शनपूर्वकत्वात्प्रयोजकत्वस्यैवमुक्तिः । यद्वा अध्यक्षेणाधिपातिना मया प्रकृतिः सचराचरं जगत्प्रसूयते-जनयति । अनेन मत्प्रयो-

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनानेन कौंतेय जगद्विपरिवर्तते ॥ १० ॥ अवजानंति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानंतो मम भूतमहेश्वरम् ॥ ११ ॥ ॥ ॥**

जितप्रकृतिरूपहेतुना दर्शनपूर्वकं मद्रूपप्रयोजककर्तृरूपहेतुना च जगद्विशेषेण परिवर्तते पुनः पुनर्जायते ॥ १० ॥ यद्येवं भवान् जगतः सृष्टिस्थितिसंहाराणां कर्ता तर्हि कुतः केचित्त्वामवजानंति । अवज्ञानेपि तेषामनर्थाभावात्सकर्ता अहमिति प्रागुक्तमयुक्तमतआह ॥ ॥ अवजानंतीत्यादिद्वयेन । "मानुषीं तनुमाश्रितं" मानुषदेहमधिष्ठितोयमिति मूढलोकभ्रांतिविषयं मामितिवा । अज्ञानामवज्ञानकारणतया मानुषीं मनुष्यदेहसादृश्येन प्रतीयमानां तनुं आश्रितमिति वार्थः । एतेनात्र हरेः मानुषदेहोक्तेस्तस्य चाधारेणान्योन्यधर्मसंक्रांत्यादिरवश्यंभावात्"भूतभृन्न च भूतस्थ"इति प्रागुक्तिरयुक्तेति निरस्तं । तथा तनुतनुमतोरभेदेपि आश्रितमित्युक्तिश्चैत्रदेहश्चैत्राधीनोयथा तथा भगवद्देहोपि स्वाधीनत्वगुणयोगाद्गौणीति ममात्मेत्यत्रत्याभेदोक्तिर्न विरूद्धेति ज्ञेयं । एतादृशं मां मूढास्तामसाःभूतमहेश्वरं-भूतं-सदा विद्यमानं

महांतमीश्वरं गुणपरिपूर्णं परमुत्तमं मम भावं-याथार्थ्यं अजानंतोऽवजानंति-अवमतया जानंति । ब्रह्मरुद्रादीनां साम्यदृष्टिरित्यादितात्प-र्योक्तदिशान्यदप्यज्ञानं ज्ञेयं ॥ ११ ॥ अवजानतामनर्थाभावादिति हेतुरसिद्धइति भावेन फलमाह ॥ ॥ मोघेति । मोघाशाः-वृथाशाः भगवद्द्वेषिभिराशासितस्य संपदादेः प्राप्तावपि आमुष्मिकस्य न कस्यचिदप्याप्तिरित्यर्थः । मोघकर्माणः यज्ञादिकर्माणि च तेषां वृथैव । तत्वविषयकज्ञानं च तेषां वृथैवेति मोघज्ञानाः । ज्ञानस्य मोघत्वं नाम केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेनानुत्पत्तिरेव । ॐसर्वथापितु तद-वोभयलिंगात् ॐ ॥ इति सूत्रात् । विचेतसोविरुद्धमनस्काः । किं बहुना । कोप्यामुष्मिकः पुमर्थोनास्त्यतएवेति ज्ञेयं । "द्वेषाचैद्यादयो-

मोघाशा मोघकर्माणो मोघज्ञानाविचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥ ॥

नृपा" इत्यादिनित्यध्यानस्तुत्याद्यर्थमिति भावः । ननु मौढ्यान्मिथ्याज्ञानमस्तु । प्रज्वलनात्मकोद्वेषः कुतइत्यतोवा अन्येषामविद्यमानं मौढ्यमेव तेषां कुतइत्यतोवा तस्य मूलकारणमाह ॥ ॥ राक्षसीमिति । मोहिनीं-बुद्धिभ्रंशकरीं आसुरीं-असुरसंबंधिनीं प्रकृतिं-स्वभावं आश्रिताः तमोयोग्याः मामवजानंतीति पूर्वेणान्वयः ॥ १२ ॥ ननु भगवतोदोषित्वादेवावजानंतीति किं न स्यात् । तथात्वे दैवप्रकृतयो-प्यवज्ञां कुर्युः । नचैवमस्तीत्याह ॥ ॥ महात्मानस्त्विति । दैवीं-मुक्तियोग्योत्तमजीवसंबंधिनीं प्रकृतिं-स्वभावं आश्रिताः महात्मानो-महामनस्कास्तु भूतादिं-भूतानां कारणं अव्ययं-चतुर्विधनाशहीनं मां ज्ञात्वानन्यमनसोन्यविषयकमनोहीनामदेकमनस्काः संतोमां भजंति-से-

---

१ अ० ३ पा० ४ अ० ५ सू० ३४ सर्वथापि-देशकालगुरूपसत्तिश्रवणादिसर्वप्रकारेणोत्साहेपि तएव-ज्ञान योग्याएव, ज्ञानं प्राप्नुवंति इति शेषः नत्वयोग्याः प्रत्युत विपरीतज्ञानमाप्नुवंतीति तोरर्थः । यआत्माऽपहतपाप्मा विजरोविमृत्युर्विशोकोऽविजिघित्सोऽपिपासः सत्यकामःसत्यसंकल्पः सोन्वेष्टव्यः सविजिज्ञासितव्य इति श्रुत्या आचार्यो-पदेशसाम्येपि विरोचनोविपरीतज्ञानमाप इंद्रः सम्यग्ज्ञानमित्युभयविधलिंगात् ॥ मोक्षः योग्यमात्रप्राप्यइति सिद्धम् ॥

वंते ॥ १३ ॥ भजनप्रकारमाह ॥ ॥ सततमिति । मां सततं कृष्णकृष्णेत्यादिरूपेण कीर्तयंतः-यतंतः मत्पूजादौ यत्नं कुर्वंतः । दृढानि उपवासादिनियमव्रतानि येषांते दृढव्रताः । नित्ययुक्ताः-नित्यं मयि मनोयोगवंतः । नित्यं कर्मज्ञानोपायवंतइति वा । भक्त्या नमस्यंतश्च मामुपासते ॥ १४ ॥ अन्येपि च महात्मानोज्ञानाख्ययज्ञेन मां यजंतः-पूजयंतः मामुपासते । श्रवणमननध्यानादिकुर्वंतः परेभ्यउपदिशंतश्च नित्यं भगवन्माहात्म्यज्ञाने रताइत्यर्थः । विश्वतोमुखं मुखशब्दोत्र सर्वावयवोपेतरूपपरः । विश्वस्मिन्सर्वत्र स्थितं मामे-कत्वेन पृथक्त्वेन-सर्वजगद्वैलक्षण्येन बहुधा च शुक्लनीलपीतादिभेदेन बहुधोपासतइति वा । बहुधा-बहवइत्यर्थः "दैवमेवापरे यज्ञमि"त्यादि-ना चतुर्थोक्तदिशा बहवउपासतइति वार्थः । यद्वा"एकमूर्तिश्चतुर्मूर्तिरथवा पंचमूर्तिक" इति तात्पर्योक्तदिशा सर्वरूपात्मकनारायणरूपैकमू-

सततं कीर्तयंतोमां यतंतश्च दृढव्रताः । नमस्यंतश्च मां भक्त्या नित्ययुक्ताउपासते ॥ १४ ॥ ज्ञानयज्ञेन चाप्यन्ये यजंतोमामुपासते । एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥ अहं क्रतुरहं यज्ञः स्वधाऽ-हमहमौषधम् । मंत्रोहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥ पिताऽहमस्य जगतो माता धाता पितामहः । वेद्यं पवित्रमोंकार ऋक्सामयजुरेव च ॥ १७ ॥ ॥ ॥ ॥

र्तित्वेन पृथक्त्वेन-वासुदेवादिचतुर्मूर्तित्वेन बहुधा-नारायणवासुदेवादिपंचमूर्तित्वेन विश्वतोमुखं-द्वादशचतुर्विंशत्यादिभेदेन स्थितं मामुपासतइत्यर्थः ॥ १५ ॥ "ज्ञानं विज्ञानसहितं"वक्ष्यामीति प्रतिज्ञातज्ञानविषयं निरूप्याधुना विज्ञानप्रदर्शनाय तद्विषयमाह ॥ ॥ अहंक्रतु-रित्यादिचतुष्टयेन । क्रतवः-दीक्षाद्यवभृथांतकर्मकलापाः ज्योतिष्टोमादयः । यज्ञस्तु-देवतोद्देशेनद्रव्यत्यागरूपं प्रधानं कर्म । कुरुपांडववत्सा-मान्यविशेषभावेन भेदोज्ञेयः । स्वधा-पितॄणां तिलोदकादिदानं । "अहं क्रतुरि"त्याद्यभेदोक्तिः "रसोहमप्सु कौंतेय "इत्यादाविव क्र-त्वादेः क्रतुत्वादिनियंतृत्वेन क्रत्वंगहविरादिभोक्तृत्वादिना ध्येया ॥ १६ ॥ किंचास्य जगतः पिता-जनकः अहं माता. धाता-पोषकोह-मिति सर्वत्रानुवृत्तिः । पितामहः-पूज्यः । वेद्यं-ज्ञेयं वस्तु, पवित्रं चाहमेव । यद्वा वेद्यपवित्रवस्तुनोर्वेद्यत्वपवित्रत्वप्रदत्वात्तथोच्यते । ॐका-

रादावोंकारत्वऋक्त्वादिनियंतृत्वात्तद्द्येयत्वादिना तदभेदोध्येयः ॥ ॥ यद्वा । "अर्च्यत्वादृक्समत्वाचे" त्यादि स्मृत्युक्तदिशा क्रत्वादिभिन्नस्य हरेर्योगवृत्त्या क्रत्वादिनामकत्वमिह ध्येयं । तथाहि कृतिस्वरूपत्वात्क्रतुः । यदस्ति प्रामाणिकतया तज्जानातीति यज्ञनामा । स्वं-स्वात्मानं धत्तइति स्वधा । उषदाहे कर्मणि घञ् । उषाः-उष्टाः तापत्रयदग्धाः तेषां निधिरित्यौषधनामा । मानाज्ज्ञानात्रातीति मंत्रनामा । आसमंताज्ज्यायज्त्वादाज्यनामा । अगस्य-स्वतोगतिहीनस्य जगतोनेनेत्यग्निनामा । यज्ञादावाहूतत्वाद्धुतनामा । ॐमित्याक्रियतइत्योंकारः । ऋच्यत्वापूज्यत्वादृङ्नामा । सर्वरूपेषु समत्वात्सामनामा । याज्यत्वाद्यजुर्नामा ॥ १७ ॥ मुमुक्षुभिरवगम्यत्वाद्गतिः । भर्ता-पोषकः । प्रभुः-स्वामी । साक्षात्सर्वमीक्षतइति साक्षी । निवासः-आश्रयः । शरणं-भीतरक्षकः । मुक्ताश्रयइति यावत् । सुहृत्-अनिमि-

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् । प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥ तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च । अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥१९॥ त्रैविद्यामां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयंते । ते पुण्यमासाद्य सुरेंद्रलोकं अश्नंति दिव्यान्दिवि देवभोगान् ॥ २० ॥

त्तोपकारी । प्रभवः-जगदुत्पत्तिकर्ता। प्रलयकर्तृत्वात्प्रलयोहं । स्थानं-सर्वाधारोहं । नितरां धारकत्वाद्वा प्रलयकाले प्रकृत्यादिजगदत्र निधीयतइति वा निधानं । प्रकृतिं प्राप्य पश्चात्तया हरौ निधीयतइत्यर्थः । तेन"प्रकृतिं यांति भूतानी"त्युक्त्यविरोधः । जगव्द्यंजकत्वाद्बीजं । तथात्वेप्यविकारित्वप्रदर्शनायोक्तमव्ययमिति ॥ १८ ॥ किंचाहमादित्यस्थस्तपामि-तापं करोमि । मेघचक्रगतः सन्वर्षं-वृष्टिं उत्सृजामि निगृह्णामि उपसंहरामि । अहमिंद्रियेषु स्थित्वा तेषां देहधारणेन मृतिं परिहरतीति हेतोरमृतं अहं। प्रलयकालादन्यकाले संहर्तृत्वान्मृत्युरहं । सत्कार्यजातमहं । असच्च कारणजातमहमेवा । तन्नियंतृत्वादेरभेदोक्तिः । अहमित्यसकृदुक्तिरुपचारनिवृत्त्यर्था । यद्वा साधुगुणपूर्णत्वात्सादित्युक्तोहं । साधुगुणपूर्णं पुरुषांतराद्दित्यांदसदित्युक्तोहमेवेत्यर्थः ॥ १९ ॥ ननु सर्वयज्ञादिमोक्तृत्वादिनाहंक्रतुरि-

त्याद्युक्तिरिति प्रथमव्याख्यानं यत्तदयुक्तं । तथाते त्रैविद्यकृतयज्ञभोक्तृत्वस्यापि प्राप्त्या तेषां भागवतानां च फलभेदोन स्यात् । भगवद्भो-
गनिमित्तकत्वात्कर्मफलस्य । तस्य च सर्वत्र साम्यात् । इतोभगवतानुष्ठितभगवद्भजनस्य त्रैविद्यकृतयज्ञफलादप्यतिशयितफलमाह ॥ ॥
त्रैविद्येत्यादित्रयेण । तिस्रोविद्या-ऋग्यजुःसामलक्षणायेषांते त्रिविद्याः तएव त्रैविद्याः-विष्णुं सर्वोत्तमं ज्ञात्वापि त्रय्यां मुखतः प्रतीयमानं स्व-
र्गाद्युद्देश्यकान्यदेवतायजनं बुद्ध्वा तथैवानुष्ठायांते विष्णौ समर्पणं कुर्वंतः त्रैविद्याः मां यज्ञैरिष्ट्वांऽते मयि तं समर्प्य सोमपाः-हुतशेषसोमरसपा-
नवंतएव पूतपापाः शोधितकल्मषाः संतः स्वर्गतिं-स्वर्गमार्गं स्वराख्यप्राप्यं वा प्रति मां प्रार्थयंते । ते पुण्यं-पुण्यलभ्यं सुरेंद्रलोकं-स्वर्गमा-

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशंति । एवं त्रयीधर्ममनुप्रपन्ना गतागतं काम-
कामालभंते ॥ २१ ॥ अन्यन्याश्चिंतयंतोमां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं
वहाम्यहम् ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥

साद्य-प्राप्य दिवि-स्वर्गे दिव्यान् द्युलोकभवान् अलौकिकानिति वा भोगानश्नंति-भुंजते ॥२०॥ किंच ते स्वर्गकामेनान्यदेवतायाजिनस्तं
विशालं-विपुलं स्वर्गसुखं भुक्त्वा क्षीणे पुण्ये मर्त्यलोकं-भूलोकं भुक्तावशिष्टपुण्ययुक्ताः संतः विशंति । तदाह सूत्रे [1]कृतात्ययेनुशय-
वान्दृष्टस्मृतिभ्याम्[1]इति । पुनरप्येवं त्रयीधर्मं-वेदोक्तं धर्ममनुप्रपन्ना अनुतिष्ठंतः कामकामाः-भोगेच्छवः गतागतं-द्वंद्वैकवद्भावः । गतेन
सहितं आगतमिति वा । स्वर्गं प्रति गमनं ततोमर्त्यलोकं प्रत्यागमनं च लभंते । न कदाप्यपुनरावृत्तिं प्राप्नुवंतीत्यर्थः ॥२१॥ त्रैविद्यानां
फलमुक्त्वा भागवतानां फलमाह ॥ ॥ अनन्याइति । न विद्यतेऽन्यश्चिंत्यत्वेन येषांते अनन्याः अन्यदचिंतयंतोमां चिंतयंतोये जनाः



१-अ० ३ पाद० १ अ० सू० ८—कृतस्य-कर्मणः, अत्यये-स्वर्गादिभोगेन क्षये, अनुशयवान्-भुक्तकर्मशेषवानायाति, "शेषेणेमं लोकमायाति" "भुक्तशेषानुशयवा-
निमां प्राप्य भुवं पुनः" इति श्रुति( दृष्ट ) स्मृतिभ्याम् । स्वर्गगतस्य यथायोग्यं कर्म सहागतमपि किंचिद्भुक्तवतः कर्मशेषयुततयैवागमनस्य पुनः कर्मकरणस्य दर्शांत्रराणीमि-
त्यनल्पफलक कर्मश्रुतेश्चोक्त्या भोगेन निःशेषकर्मक्षयाभावात् कार्यमेव वैराग्यादीति सिद्धम् ।

पर्युपासते-भक्त्युद्रेकेणोपासते तेषां नित्याभियुक्तानां-नित्यमभि-सर्वस्मिन्देशे शरीरेंद्रियमनोभिर्वायुक्तानां भगवत्सेवोद्युक्तानां नित्यं तत्स्मरणवतामिति वा । योगक्षेमं-द्वंद्वैकवद्भावः । योगस्य क्षेम इति वा । अप्राप्तप्राप्तिर्योगोमोक्षरूपः । तस्य क्षेमः अनंतत्वं वहामि । अहमपुनरावृत्तिलक्षणं पुरुषार्थं ददामीत्यर्थः । भगवतः सर्वयज्ञभोक्तृत्वाविशेषेपि त्रैविद्यभागवतयोः फलभेदोभगवद्भजनरूपोपायभेदकृतइति द्योतनायानन्याइत्यादिविशेषणोक्तिः । तथाहि । "योयोयां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छती" त्यादौ पूर्वं त्रैविद्यानामन्यदेवताया-जित्वमुक्तं । भागवतानां तद्विरोधितयाऽनन्याइत्युक्तं । "न तु मामभिजानंति तत्वेनेति" त्रैविद्यानां अतिशयभक्तिज्ञानाभावउक्तः । तत्वज्ञानाभावे-भक्त्यभावस्य सिद्धत्वात् । भागवतानां तत्प्रतियोगितया भक्त्युद्रेकसूचनाय पर्युपासतइति परिशब्दप्रयोगः । तथोपासनस्यैव पर्युपासनत्वात् । "स्वर्गतिं प्रार्थयंते" "कामकामा"इति त्रैविद्यानां कामनमुक्तं । तत्प्रतियोगितया भागवतानां चिंतयंतो मां-मामेव चिंत-

येऽप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः । तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकम् ॥ २३ ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानंति तत्वेनातश्च्यवंति ते ॥ २४ ॥ ॥

यंति न काममिति कामनाभाव उक्तः। "मामिष्ट्वेति""मामेव" यजंतइति त्रैविद्यानां अंते समर्पणमुक्तं । तत्प्रतियोगितया नित्याभियुक्तानामिति तदा तत्स्मरणं तदुद्देश्युक्तत्वमुक्तं । अतोद्वयोर्वैष्णवत्वेपि-भगवद्भोग्यकर्मवत्वेपि फलहेतूपायभेदात्फलभेदइति ॥ २२ ॥ भागवतेभ्योन्य-देवतायाजिनां फलभेदं सहेतुकं प्रपंचयति ॥ ॥ येपीति । अन्यदेवताभक्तायेपि श्रद्धयान्विताः संतोन्यदेवतायजंते-तदुद्देशेन हविस्त्यागं कुर्वंति । तेपि मामेवाविधिपूर्वकं यजंति । मदुद्देशेनैव कर्तव्येपि अन्योद्देशेन कृत्वा ते तत्कर्म अंते मय्यर्पयंतीत्यविधिपूर्वकमासीन्मद्यजनमिति भावः ॥ २३ ॥ तद्यज्ञस्यापि भगवद्भोग्यत्वात्कथमविधिपूर्वकत्वे कारणमाह ॥ ॥ अहं हीति । सर्वयज्ञानां भोक्ता प्रभुश्च प्रवर्तकःउद्देश्यश्च तादृशं मां तु तत्वेन अभि सम्यक् न जानंति । अभीत्यस्य सर्वोत्तमत्वेन हरिं जानंतोपि यज्ञाद्युद्देश्यत्वादिना

सम्यङ्न जानंतीत्यर्थः । तत्वेनेत्यस्य तु ब्रह्माद्यन्यदेवतानां तु तत्परिवारत्वादिकं न सम्यग्जानंतीत्यर्थः हि यतोतस्ते च्यवंति-स्वर्गान्मर्त्यलोकं विशंतीति ॥२४॥ फलभेदं विविच्य प्रपंचयति ॥ ॥ यांतीति । इंद्रादिदेवेषु व्रतं-नियमोयेषांते तथा इंद्रादियाजकाः इंद्रादीन्यांति पितृव्रताः-श्राद्धादिक्रियापराः पितॄन्यांति, भूतेज्याः यक्षादिषुच भूतेषु-सप्तमातृकादिषु-इज्या-पूजा येषांते भूतेज्याः । शिष्टं व्यक्तं ॥ ॥ २५ ॥ अन्यदेवताभजनस्याल्पफलत्वेपि तदेव कार्यं सुशकत्वात् । त्वद्भजनं तु दुर्बलैरशक्यं कर्तुं तवातिमहिमत्वादित्यतआह ॥ ॥ पत्रमिति । अनिषिद्धपत्रादिकं योमह्यं भक्त्या ददाति । प्रयतात्मनः-"यमउपरमे"प्रकर्षेणोपरतमनस्कस्य-विषयविरक्तस्य भक्त्युपहृतंभक्त्या समर्पितमश्नामि । भक्त्यैवाहं तुष्टोभवामि न द्रव्यादिनेति भावः ॥ २६ ॥ यतोल्पमपि भक्त्यार्पितं मम प्रीतिकरं । अतस्त्वमपि

यांति देवव्रतादेवान्पितॄन्यांति पितृव्रताः । भूतानि यांति भूतेज्या यांति मद्याजिनोपि माम् ॥२५॥ पत्रं पुष्पं फलं तोयं योमे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥ यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् ॥२७॥ शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः । संन्यासयोगयुक्तात्मा विमुक्तोमामुपेष्यसि ॥ २८ ॥ समोऽहं सर्वभूतेषु न मे द्वेष्योस्ति न प्रियः ॥ ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥ ॥ ॥ ॥ ॥

तथा कुर्वित्युपसंहरति ॥ ॥ यदिति । हे कौन्तेय यत्त्वं यद्विहितं करोषि, विहितमिति सर्वत्रान्वेतव्यं । निषिद्धादिकरणस्य प्रत्यवायहेतुत्वात् । पात्राय च यद्द्रव्यादि ददासि तत्सर्वं मयि समर्पणं कुरुष्व ॥२७॥ त्वदर्पणेन किमित्यतआह ॥ ॥ शुभाशुभेति । शुभाशुभफलैरिति बहुव्रीहिः । एवं मयि सर्वसमर्पणे सति शुभाशुभफलकैः कर्मबंधनैः मोक्ष्यसे । तदेव व्यनक्ति ॥ संन्यासेति । फलत्यागकर्मानुष्ठानाभ्यां युक्तात्मा विमुक्तः सन्मामुपेष्यसि ॥ २८ ॥ ननु भक्त्युपहृतमश्नामीत्युक्तदिशा यदि त्वं भक्तप्रियः । तर्हि द्वेषिणामप्रियश्चेति स्यात् तथाच भक्तेषु द्वेषिषु यथाक्रमं स्नेहद्वेषवत्त्वादल्पभक्तस्य कस्यचित्सुखरूपं बहुफलं ददासि अल्पद्वेषिणोबहुदुःखरूपं ददासि इत्यापद्यते ।

राजादौ तथा दर्शनात् । एवंच वैषम्यनैर्घृण्ये प्राप्नुतस्तवेत्यतआह ॥ ॥ समोहमिति । अहं सर्वेषु भूतेषु समः-न वैषम्यादिमान् । यतोमे तदीयं द्वेषमपेक्ष्याधिकं द्वेष्योनास्ति । तदीयां भक्तिमपेक्ष्याधिकः प्रियश्च नास्ति । किंतु तत्तदीयद्वेषभक्त्यनुसारेण तत्तत्सदृशफलदएवाहं । अतः समोहं । नहि तत्तत्कर्मानुसारेणानुशासिता यमोविषमोभवति । तथात्वे“समवर्ती परेतराडि”ति प्रसिद्धिविरोधात् । तथेति भावेन भक्तिमतां फलमाह ॥ ॥ यइति । ये भक्ताः मां भजंति-सेवंते ते मयि मदधीनाः-मद्वशाः इति ज्ञानवंतोभवंति । तेषु चाप्यहं तेषां वशोहमित्यर्थः । यद्वा समइति पूर्वार्धे भक्तोभक्तइति पदद्वयमध्याहार्यं । सर्वभूतेषु मे भक्तः द्वेष्यो नास्ति । अभक्तोमे प्रियोनास्ति । अतः समोहं । यदि भक्तेषु द्वेषमभक्तेषु प्रीतिं कुर्यां तर्ह्येव विषमः स्यां । नचैवं । किंतु भक्त्यनुसारेण फलदइति भावेनाह ।

अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव समंतव्यः सम्यग्व्यवसितोहि सः ॥३०॥ क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति । कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥ मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियोवैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम् ॥ ३२ ॥ ॥

॥ ॥ यइति । ये मयि प्रीत्या वर्तंते तेष्वहं प्रीत्या वर्तेत्यर्थः ॥२९॥ भक्तप्रशंसा क्रियते ॥ ॥ अपिचेत्यादिना । सुदुराचारोपि भगवद्भक्तोयः कश्चिद्देवांशः ऋष्यादिः स्वयोग्याधिकपुण्यापगमाय दैवादत्यंतदुराचारोपि अनन्यभाक्-स्वातंत्र्येण देवतांतरभजनहीनः सन्मां भजते चेत्ससाधुरेव मंतव्यः । कुतः हि यस्मात्सचंद्रसूर्यादिवंशःसम्यग्व्यवसितः संजातसमीचीनभगवत्तत्त्वनिश्चयवानतइत्यर्थः ॥ ३० ॥ सम्यग्व्यवसायवत्वेपि सुदुराचारः कुतः साधुर्मंतव्यः इत्यतआह ॥ ॥ क्षिप्रमिति । सम्यग्व्यसायवत्वात्क्षिप्रं धर्मचित्तोभवति । शश्वच्छांतिं-शाश्वतमोक्षं च सम्यगधिगच्छति । हे कौंतेय मे भक्तः दुराचारोपि न प्रणश्यति नरकाद्यनर्थं न प्राप्नोति । एतच्च देवदेवांशऋष्यादिविषयं ॥ ३१ ॥ कैमुत्येन च भक्तेर्महिमानमाह ॥ ॥ मां हीत्यादिना । हे पार्थ पापयोनयः-स्वयमुत्तमवर्णाअपि पापहेतुका-

योनिर्जन्म येषांते पापयोनयः । ते कइत्यतउक्तं 'स्त्रिय'इत्यादिना । स्वतः पुमांसोपि पापात्सुद्युम्नस्येलात्वामिव स्त्रीत्वं प्राप्ताये ये च स्वतो-ब्राह्मणादिरपि पापाद्वैश्यादिहीनवर्णतां प्राप्ताः शूद्रत्वं वा प्राप्ताः मामाश्रित्य स्युः-वर्तेरन्न मयि भक्तिमंतो भवेयुः तेपि परां गतिं यांति ॥ ३ २॥ पुण्याः-पुण्यहेतुकाः ब्राह्मणाः (स्वरूपतः) शुद्रादिहीनवर्णाअपि स्वयं यदि पुण्यवशेन (देहतः) ब्राह्मणत्वं प्राप्ताः तथा राजत्वं ऋषित्वं वा प्राप्ताः परां गतिं यांति । किं पुनः स्वाभाविका- एते स्त्रीवैश्यादयः परां गतिं यांतीति वाच्यमित्यर्थः । अत्र नैमित्तिकस्त्रीवैश्यादिग्रहणमध्ये नैमित्तिकपुंसां स्त्रियः पुमांसोवैश्याः शूद्राइत्यनुक्तिस्तु स्वभावतः स्त्रीणां केनापि हेतुना पुंस्त्वाभावेन नैमित्तिकपुंसामभावादेव "याति

किं पुनर्ब्राह्मणाः पुण्या भक्ताराजर्षयस्तथा । अनित्यमसुखं लोकमिमं प्राप्य भजस्व मां ॥३३॥ मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥ ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ( राजगुह्ययोगो ) भगवन्महिमावर्णनरूप भक्तियोगोनाम नवमोऽध्यायः ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥

स्त्रीत्वं पुमांसोपि पापतः कामतोपि वा । न स्त्रियोयांति पुंस्त्वं तु स्वभावादेव याः स्त्रिय"इत्युक्तेरिति । अतोभक्तेः साधनोत्तमत्वादेव अनित्यमसुखं-सुखहीनं इमं-भक्त्यादिसाधनभूतं लोकं-देहं भूलोकं वा प्राप्य अविलंबेन मां भजस्व ॥ ३ ३ ॥ भजनप्रकारं दर्शयन् तस्य फलमाह ॥ ॥ मन्मनाइति । एवं मन्मनस्त्वादिप्रकारेण मत्परायणः सन्नात्मानं-मनोमयि युंक्त्वा मामेवैष्यसि-प्राप्स्यसीति ॥ ३४ ॥ ॐतत्सदिति श्रीमद्गीतार्थसंग्रहे श्रीराघवेंद्रयतिकृते भगवन्महिमावर्णनरूप भक्तियोगोनाम नवमोऽध्यायः ॥ ९ ॥ ॥ ॥



ॐ ॥ षष्ठेऽध्याये ध्यानयोगउक्तः । नवमांते च ''मन्मना''इत्यादिना तद्ध्यानं स्मारितं । तच्च ध्येयसापेक्षं । अतोध्यानार्थं भगवद्विभूतिरूपाणि अत्राध्याये अग्रे ''हंत ते कथयिष्यामी''त्यादिना प्राचुर्येण वक्ष्यन्नादौ बुद्ध्यादीनां महर्ष्यादीनां सामर्थ्यातिशयोपेततया निर्माणरूपं विशेषकारणत्वंच भगवतोवक्ति । यद्यपि''भोक्तारं यज्ञतपसामि''त्यादिना पंचमांतादौ ध्येयमुक्तं । तथापि विशिष्टाधिकारिणां भगवद्विभूतयउपास्याइति तदुक्तिरत्रेति । उक्तरूपविशेषकारणत्वमपि विशिष्टाधिकारिध्येयमिति तस्याप्यत्रोक्तिः । ननु विभूतिरूपाण्यपि ''रसोहमप्सु कौंतेये''त्यादिना ''अहंक्रतुरि''त्यादिना चोक्तान्येव ॥ ॥ सत्यं । अत्र विस्तरेणोच्यंतइत्यदोषः । अतएवास्य विभूत्यध्यायइति व्यपदेशः । तदुक्तेरेवबहुत्वेनैकवाक्यताचाध्यायस्य । विभूतिशब्दार्थमग्रे वक्ष्यामः । तत्र पार्थस्य श्रोतृत्वसंपत्तिप्रतिपादनाय तद्विशेषणोक्तिपूर्वं संबोध्य प्रतिजानीते ॥ ॥ भूयएवेति । हे महाबाहो भूयएव पुनरेव मे परमं वचः माहात्म्यप्रतिपादकं वचनं शृणु-श्रुत्वा

**श्रीभगवानुवाच । भूयएव महाबाहो शृणु मे परमं वचः । यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ ॥ १ ॥ न मे विदुः सुरगणाः प्रभवं न महर्षयः । अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥ ॥**

तत्र निष्ठां कुरु । प्रीयमाणाय-मद्वचः श्रुत्वा संतोषं प्राप्नुवते । अनेन श्रोतृत्वसंपत्तिरुक्ता । ते-तुभ्यं हितकाम्यया-हितेच्छया वक्ष्यामीति ॥ १ ॥ प्रतिज्ञातं महिमानमाह ॥ ॥ नमइति । सुरगणामहर्षयश्च मे प्रभवं-प्रभावं महिमानं-न विदुः प्रभवमुत्पत्तिं-मदधीनामुत्पत्तिं-जगतइति योज्यं । न विदुः-न जानंति । देवादिजगतोभगवदधीनामुत्पत्तिं सुरगणादयो न जानंतीति किमुतान्यइत्यर्थः । यद्वा मे प्रभवं-ममोत्पत्तिं सुरगणादयोन विदुरित्यर्थः । भगवन्महिमवज्जगदुत्पत्तिवच्च भगवदुत्पत्तिं विद्यमानां न जानंतीति न भ्रमितव्यं । किंतु महिमजगदुत्पत्त्योः सत्वमिव भगवदुत्पत्तेः सत्वमेव नास्तीति तदभावादेव न विदुरिति ज्ञेयं । प्रभावजगत्प्रभवयोरिव मे प्रभवःकुतोनेति-चेत्तत्रोच्यते ॥ ॥ अहमादिरिति । देवानां मनुष्याणां च उपलक्षणमेतत् । देवादिकृत्स्नजगतोहमादिः-कारणं हि यतोतोमे प्रभवो-

नेति । सर्वस्य मत्सृष्टत्वेन मज्जनकस्यान्यस्याभावात् असतश्च पूर्ववृत्तित्वरूपजनकत्वायोगात् । आत्माश्रयापत्त्या मयैव मज्जननायोगादिति भावः । तदाह सूत्रे ॐअसंभवस्तु सतोऽनुपपत्तेः ॐइति ॥ २ ॥ स्वज्ञानान्मोक्षाख्यमहिमानं चाह ॥ ॥ योमामिति । योधिकारी अजमुत्पत्तिहीनं अनादिं-अनश्चासावादिश्च तं-सर्वचेष्टकं कारणभूतं च । अनितेरंतर्णीतण्यर्थात्पचाद्यच् । यद्वा अनस्य-मुख्यप्राणस्य कारणं च । लोकानां महास्वामिनं मां वेत्ति-जानाति समर्त्येषु-मनुष्येषु असंमूढः-संमोहहीनः भ्रांतिहीनः सन्सर्वपापैः प्रमुच्यते-मुक्तोभवति ॥ ३ ॥ मुक्तिहेतुज्ञानविषयत्वमहिमानमुक्त्वा बुद्ध्यादिप्रदत्वमहिमानं चाह ॥ ॥ बुद्धिरिति । यद्वा ''अहमादिर्हि देवानामि''ति देवाद्युपलक्षित-

**योमामजमनादिं च वेत्ति लोकमहेश्वरम् । असंमूढः समर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥ बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः । सुखंदुःखं भवोभावो भयं चाभयमेव च ॥ ४ ॥ अहिंसा समता तुष्टिस्तपोदानं यशोऽयशः । भवंति भावाभूतानां मत्तएव पृथग्विधाः ॥ ५ ॥ ॥ ॥ ॥ ॥**

सर्वकारणत्वं स्वस्योक्तं । तत्र केषांचिद्बुद्ध्यादीनां महर्ष्यादीनां च सामर्थ्यातिशयोपेततया निर्माणरूपविशेषकारणत्वोक्त्या प्रागुक्तं प्रपंचयति॥ ॥ ॥ बुद्धिरित्यादित्रयेण । बुद्धिरंतःकरणं कार्याकार्यनिश्चयोवा । ज्ञानं तु प्रतीतिसामान्यं । असंमोहः-अकार्येच्छाऽभावः मिथ्याज्ञानाभावोवा । क्षमा-क्रोधाभावेन सहापकर्तुरनपकरणं । सत्यं-यथार्थज्ञानपूर्वकमनुष्ठानं वचनं वा । दमः-इंद्रियानिग्रहः । शमः-भगवन्निष्ठता । सुखं-अनुकूलवेदनीयं । दुःखं-प्रतिकूलवेदनीयं । भवः-उत्पत्तिः । भावः-सत्ता । भयं-त्रासः । अभयं-त्रासविरोधिमनोव्यापारः ॥ ४ ॥ अहिंसा-परप्राणिपीडाभावः । समता-द्वंद्वेषु निर्विकारत्वं । तुष्टिः-विषयालंबुद्धिः । तपः-ब्रह्मचर्यादिः । दानं-धर्मार्जितवित्तस्य परस्वत्वापादनं ।

१-अ० २ पाद ३ अधि ३ सू: ९-अत्र ब्रह्मोत्पत्ति ( असतः सदजायत इति ) श्रुत्यविरोधउच्यते ॥ सतः-ब्रह्मणः, असंभवस्तु-अनुत्पत्तिरेव ( कुतः ) असतः सकाशात्सजन्मनः अनुपपत्तेः-क्वाप्यदर्शनात् इति भावः ॥

यशः-कीर्तिः अयशः-अपकीर्तिः । पृथग्विधाः-नानाविधाः एते भावाः-धर्माः भूतानां प्राणिनां मत्तएव भवंति इति ॥५॥ न केवलं भूतानां बुद्ध्यादिधर्माः मत्तोभवंति । किंतु भूतान्यपि मत्तएव भवंतीत्याह ॥ ॥ महर्षयइति । "मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाःपूर्वे सप्तर्षयः स्मृता"इत्युक्ताः । पूर्वे-पूर्वमन्वंतरस्थास्सप्त महर्षयः । मानसाः-ब्रह्मणोमनोपत्यतया जाताः पूर्वे-प्राथमिकाश्चत्वारः-स्वायंभुवस्वारोचिषरैवतोत्तमाख्याः मनवः । यद्वा "मनुअवबोधने" इत्यतः उप्रत्यये बोधवैशेष्याद्ब्रह्माद्यादेवाः विप्रक्षत्रियवैश्यशूद्रभेदेन चतुर्धा स्थितत्वाच्चत्वारः । उक्तं हि बृहद्भाष्ये प्रथमाध्याये चतुर्थेऽव्याकृतब्राह्मणे । "विष्णोर्ब्राह्मणजातिः सन् जज्ञे ब्रह्मा चतुर्मुखः । इतोग्रे जगतस्तस्मात्क्षत्रजातिरजायत । वायुः सदाशिवोनंतोगरुडः शक्रएव च । कामश्च वरुणश्चैव सोमः सूर्योयमस्तथा । एवमाद्याः क्षत्रियास्तु देवता ब्रह्मनिर्मिता"इति । तथा "विवस्वदिंद्रवरुणविष्णुभ्योन्ये दितेः सुताः । रुद्रादन्ये तथा रुद्राः वायोरन्ये च

**महर्षयः सप्त पूर्वे चत्वारोमनवस्तथा । मद्भावा मानसा जाता येषां लोकइमाः प्रजाः ॥ ६ ॥ ॥**

वायवः । अग्नेरन्ये च वसवोवैश्याइत्येव कीर्तिताः" । तथा "अश्विनौ पृथिवी चैव कालोमृत्यवएव च । शूद्रदेवाः समुद्दिष्टादेववर्णाइति स्मृताइति च । विवस्वदिंद्रवरुणानां क्षत्रियत्वाद्विष्णोरवर्णत्वात्तेभ्योन्येष्टावादित्याग्राह्याइति विष्णुभ्यइत्युक्तं । अग्नेर्ब्राह्मणत्वादग्नेरन्यइत्युक्तं । सप्तैव वसवोवैश्याः । सदाशिवस्य क्षत्रियत्वाद्रुद्रादन्यइत्युक्तं दशैव रुद्रावैश्याइत्यर्थः । मद्भावाः मत्तोभावोजन्म येषांते मद्भावाः मत्तएवोत्पत्तिमंतइत्यर्थः । लोके इमाः प्रजाः येषां प्रागुक्तमनूनां पुत्रपौत्रादिरूपेण वर्तते ते मद्भावाइत्यन्वयः।न च"ततोमनून्ससर्जाति मनसा लोकभावनान्" इत्युक्त्या ब्रह्मसृष्टानां स्वायंभुवादीनां कथं मद्भावाइत्युक्तिरिति शंक्यं । ब्रह्मांतर्यामिणोमत्तोजनिमंतइत्यर्थकत्वान्मद्भावाइत्यस्य । ब्रह्मा तु द्वारमात्रं । नचैवमपि प्रियव्रताद्यपत्यतादशायामेवोत्पन्नानां तेषां मनुसंज्ञकत्वेन मानसत्ववेलायां तदभावेन मनवइति उक्तिरयुक्तेति वाच्यं । मानसदेहात्यागेनैव प्रियव्रतादावुत्पन्नानां द्वयोर्देहयोरैक्येन मनुत्वोपपत्तेः इत्येतद्भाष्यटीकायामेवोक्तेः ॥ ६ ॥ उक्तमाहात्म्यज्ञानस्य

फलमाह ॥ ॥ एतामिति । एतां-“न मे विदुः सुरगुणा”इत्यादिनोक्तां विभूर्ति-विशिष्टभवनं सुरगणाद्यवेद्यत्वरूपां महत्तां वक्ष्यमाणना-नाविधभवनं वा । योगं च बुद्ध्यादिसर्वस्रष्टृत्वोक्त्या लब्धं । प्रभवपदस्य प्रभावमिति व्याख्यानेन प्रभवपदेनोक्तं वा मम सामर्थ्यं च । “युज्यते येन योगोसावुपायः शक्तिरेव चे”त्युक्तेः । तत्वतोयोवेत्ति सोविकंपेन-निश्चलेन योगेन ध्यानरूपोपायेन युज्यते युक्तोभवति । अत्रार्थे संशयोनेत्यर्थः ॥ ७ ॥ उक्तफले विश्वासजननार्थं पूर्वोक्तमहिमज्ञानपूर्वं मां भजंतः संतीत्यहमित्यादिद्वाभ्यामुक्त्वा पुनस्तेषामित्यादिद्वाभ्यां फलं च व्यनक्ति । प्रभवत्यस्मादिति प्रभवः-सर्वस्याहमुत्पादकइत्यर्थः । मत्तः सर्वं प्रवर्तते । इष्टानिष्टप्राप्तिपरिहाराद्यनुकूलव्यापारवद्भ-

एतां विभूतिं योगं च मम योवेत्ति तत्त्वतः । सोऽविकंपेन योगेन युज्यते नात्र संशयः ॥ ७ ॥ अहं सर्व-स्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजंते मां बुधाभावसमान्विताः ॥ ८ ॥ मच्चित्तामद्गत-प्राणा बोधयंतः परस्परम् । कथयंतश्च मां नित्यं तुष्यंति च रमंति च ॥ ९ ॥ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयांति ते ॥ १० ॥ ॥ ॥ ॥ ॥

वति । लयादिरपि मदायत्तइत्युपलक्ष्यते इति मत्वा बुधाः- ज्ञानिनः भावसमन्विताः भावेन-भक्त्या समुपेताः संतः मां भजंते । पत्रपु-ष्पादिभिरर्चयंति ध्यायंति चेत्यर्थः । अत्र पूर्वार्धेनैवमामित्यस्य लाभात्पुनर्मामित्युक्तिर्जीवेश्वरैक्याभिप्रायेण स्वात्मानमुद्दिश्याहमेव सर्वस्य प्रभवइति मत्वा भजंतइति प्रतीतिनिरासाय ॥ ८ ॥ पुनर्भजनप्रकारमेवाह ॥ ॥ मच्चित्ताइति । मन्निष्ठमनस्काः । मद्गतप्राणाः-मद्वि-षयचेष्टावंतः । बोधयंतः-शिष्यान्प्रतिबोधयंतोमामुपदेशेनेति योज्यं । परस्परं मां कथयंतः कीर्तयंतश्च नित्यमिति सर्वत्रान्वेति । तुष्यंति-तृप्ताभवंति विषयेष्वलंबुद्धिमंतोभवंति । तत्र हेतुः रमंति च-सुखमनुभवंति चेति ॥ ९ ॥ सततयुक्तानां-नित्यं मयि निबद्धचित्तानां प्रीतिपूर्वकं

मा भजतां तेषां तमेव बुद्धियोगं ज्ञानरूपं मुक्त्युपायं ददामि । येन-बुद्धियोगेन मामुपयांति तमित्यन्वयः ॥ १० ॥ अनाद्यज्ञानकृतबंधसत्वात्कथं तत्प्राप्तिरित्यतआह ॥ ॥ तेषामेवेति । तेषामनुकंपार्थमनुग्रहार्थमेव । न तु किंचित्फलमुद्दिश्य । अहमज्ञानजं तेषां तमःसुखदुःखादिः क्लेशरूपबंधं भास्वता-विरोधिनाशनदक्षतया प्रकाशमानेन ज्ञानाख्यदीपेन आत्मभावस्थः-तदीयचित्तवृत्तिस्थस्सन्नाशयामीति ॥ ११॥ एवं संक्षेपेणोक्तं विभूतिं योगं च श्रुत्वा विस्तरेण ज्ञातुकामः तत्स्तुतिपूर्वकं तद्वक्तुं प्रार्थयते ॥ ॥ परमित्यादिभिःसप्तभिः । हे केशवेत्यग्रेतनमाकृष्यते । भवान्परमुत्तमं ब्रह्म-परिपूर्णं वस्तु परं धाम-उत्तमाश्रयः परमं पवित्रं त्वां ऋषयोवसिष्ठाद्याःदेवर्षिर्नारदोसितादयश्च

तेषामेवानुकंपार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥ अर्जुनउवाच । परंब्रह्म परं धाम पवित्रं परमं भवान् । पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥ आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा । असितोदेवलोव्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥ सर्वमेतदृतं मन्ये यन्मां वदसि केशव । नहि ते भगवन्व्यक्तिं विदुर्देवान दानवाः ॥ १४ ॥ स्वयमेवात्मनाऽत्मानं वेत्थ त्वं पुरुषोत्तम । भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥ वक्तुमर्हस्यशेषेण दिव्याह्यात्मविभूतयः । याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥ ॥ ॥ ॥

पुरुषं-पूर्णषड्गुणं शाश्वतं-निर्विकारं दिव्यं-लोकविलक्षणं आदिदेवं अजं-जन्महीनं विभुं-विशिष्टतया विविधतया च भवनहेतुना विभुशब्दवाच्यमाहुः ॥ १२ ॥ अहं सर्वस्येत्यादिना स्वयं च मे-मह्यं ब्रवीषि-वदसि ॥१३॥ हे केशव यन्मां प्रति वदसि सर्वमेतन्माहात्म्यं ऋतंसत्यमेव मन्ये । केशवशब्दार्थउक्तः प्रथमाध्याये । हे भगवन्-षड्गुणयुक्त ते व्यक्तिं-सामर्थ्यातिशयं देवादानवाश्च न विदुः । हीति"न यस्येंद्रोवरुणोन मित्र" इत्यादौ प्रसिद्धमित्यर्थः ॥ १४ ॥ तर्हि कोजानातीत्यत आह ॥ ॥ स्वयमेवेति । हे पुरुषोत्तम त्वं स्वयमेवान्यदनपेक्ष्यात्मना स्वसामर्थ्येनात्मानं वेत्थ-जानासि । भूतभावन-भूतानामुत्पादक भूतेश-भूतनियामक ॥ १५ ॥ एवं स्तुत्वा प्रार्थयते ।

॥ ॥ वक्तुमिति । दिव्याः याविभूतयः । याभिर्विभूतिभिः त्वमिमान्लोकान्व्याप्य तिष्ठसि । ताविभूतीरशेषेण वक्तुं अर्हसीत्यर्थः । विभूतयोनाम विविधतया-नानारूपतया रामकृष्णादितया भूतानि-रूपाणि । यद्वा"येषां विष्णुस्वरूपाणां सन्निधेरन्यवस्तुषु । विशिष्टत्वं स्वजातेः स्याद्विभूत्याख्यानि तानितिव"त्युक्तादिशा स्वसंनिधिनिमित्तेन वस्तुषु स्वजात्युत्तमतापादकरूपाणि ॥ १६ ॥ नित्यं मच्चिंतनया विभूतिरूपाणि जानीहि किं मद्ववचनप्रार्थनयेत्यत आह ॥ ॥ कथमिति । त्वां परिचिंतयन्नप्यहं त्वद्वचनाभावे । हे योगिन्-अनंतशक्ते विभूतीः कथं विद्यां-जानीयां । अतोहे भगवन्मया केषु केषु भावेषु-पदार्थेषु तेषां स्वजात्युत्तमतापादकतया स्थितः सन् चिंत्योसि ॥१७॥ तमात्मानोविभूतिं-वस्तूनां विशिष्टतापदमात्मनोरूपं विविधतया ( नानाविधतया ) भूतं रूपं च । एकवचनं समुदायाशयं ।

कथं विद्यामहं योगिंस्त्वां सदा परिचिंतयन् । केषु केषु च भावेषु चिंत्योऽसि भगवन्मया॥१७॥विस्तरेणात्मनोयोगं विभूतिं च जनार्दन । भूयः कथय तृप्तिर्हि शृण्वतोनास्ति मेऽमृतम् ॥१८॥ श्रीभगवानुवाच । हंत ते कथयिष्यामि दिव्याह्यात्मविभूतयः । प्राधान्यतः कुरुश्रेष्ठ नास्त्यंतोविस्तरस्य मे ॥ १९ ॥ अहमात्मा गुडाकेश सर्वभूताशयास्थितः । अहमादिश्च मध्यं च भूतानामंतएव च ॥ २० ॥ ॥ ॥

योगं-सामर्थ्यं च विस्तरेण भूयः-पुनःपुनः कथय । ते वचोमृतं शृण्वतोमे तृप्तिर्नास्ति । जनार्दनशब्दार्थउक्तस्तृतीयाध्याये ॥ १८ ॥ वक्तुमर्हस्यशेषेणेत्यस्योतरं वदन्प्रतिज्ञां तावत्करोति ॥ ॥ हंतेति । हंत-हर्षे । यादिव्याः आत्मविभूतयः वस्तूनां विशिष्टताप्रदरूपाणि विविधस्वरूपाणि च । तानि रूपाणि प्राधान्यतः-प्रधानतया स्थितानि । ते तुभ्यं कथयिष्यामि । मे विस्तरस्य विभूतिराशेरंतः-समाप्तिर्नास्ति । अतोनाशेषेण वचनं युक्तमिति भावः ॥ १९ ॥ केषुकेषुच भावेषु चिंत्यइत्यस्य प्रश्नस्य सर्वभूतेष्वपि चिंत्यइति भावेन सर्वभूतस्थत्वं तावत्सामान्यतोवक्ति ॥ ॥ अहमिति । हे गुडाकेश-जितनिद्र । अहमात्मा व्याप्तोपि सर्वभूतानां हृदयगुहायां स्थितः ।

अहमेव भूतानामादिर्मध्यमंतश्च । सृष्टिस्थितिलयकर्ता चेत्यर्थः ॥२०॥ द्विविधं हि भगवतोविभूतिरूपं प्रत्यक्षं तिरोहितं च । तत्र प्रत्य-क्षं-विष्णुकपिलव्यासवासुदेवरामादिरूपं । तिरोहितं तु-पदार्थेष्वन्यतउत्कर्षप्रदत्वेन सन्निहितं । द्विविधविभूतिरूपाणि संकलय्याह ॥ ॥ आदित्यानामिति । द्वादशादित्यानां मध्ये अहं विष्णुरस्मि । सर्वत्र व्याप्तत्वात्सर्वेषु प्रविष्टत्वाद्वा विष्णुनामास्मि । विष्लृव्याप्ताविंत्यतः क्नुप्रत्ययः । विशप्रवेशनइत्यतः क्नुप्रत्यये शकारस्य षत्वे विष्णुरिति सिद्धेः । केषु केष्विति पृष्टस्योत्तरमाह ॥ ॥ ज्योतिषामिति । ज्योतिषां-प्रकाशरूपाणां मध्ये अंशुमान्विश्वव्यापिरश्मियुक्तोरविरहमस्मि । ज्योतिरूपेभ्योरवेराधिक्यहेतुतया रवेण-वेदशब्देन ईर्यते-ज्ञायते इति व्युत्पत्त्या रविनामकः सन् रवौ सन्निहितोस्मीत्यर्थः । रवशब्दउपपदे इण्गताविंत्यतःक्विप् उपपदांतलोपः । मरुतामेकोनपंचाशन्मरुतां

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् । मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥ वेदानां सामवेदोऽस्मि देवानामस्मि वासवः । इंद्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥ रुद्राणां शंकरश्चास्मि वित्तेशोयक्षरक्षसाम् । वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥ ॥ ॥

मध्ये तेभ्योमरीचिनाम्नो मरुतआधिक्यहेतुतया मरशब्दोक्तोदकवान् मेघोमरी तं चालयतीतिव्युत्पत्त्या मरीचिः-मरीचिनामासन् मरुति सन्नि-हितोस्मि । नक्षत्राणां मध्ये तेभ्यः शशिनआधिक्यहेतुतया शशिशब्दितातिसुखवत्त्वेहेतुना शशिनामा सन् शशिनि-चंद्रे स्थितोस्मि । एवमग्रे सर्वत्र तिरोहितेष्वर्थोध्येयः । ग्रंथगौरवभयान्निरुक्तिमात्रं वक्ष्यामः ॥ २१॥ साम्यहेतुना सामवेदनहेतुना वेदे स्थितः सामवेदनामा । वसंत्यत्रे-ति वासः सर्वदेशः तत्र वर्ततइति वासवः । वसतेराधिकरणे घञ् तस्मिन्नुपपदे वृतुधातोर्डः । अवबोधरूपत्वान्मनः मनुतेरसुन् । चेतनेनेतृत्का-चेतना । स्त्रीरूपेण चेतनायां स्थितत्वात्स्त्रीलिंगं । यद्वा भूतानां चेतनारूपसारधर्मइत्यर्थः । चेतनानामचेतसोव्याप्तिः । सा च "बहु-स्मरणशक्तिश्च चेतनेत्यभिधीयत"इत्युक्तदिशा ज्ञेया ॥ २२ ॥ सुखकारणत्वाच्छंकरनामा । वित्तस्वामित्वाद्वित्तेशनामा कुबेरस्थः । पाव-

कः-पावयति-शोधयतीति व्युत्पत्त्या पावकनामा "पव शुद्धावि"त्यतोंतर्णीतण्यर्थात् ण्वुल् शुद्धिकर्तेत्यर्थः । मेरुरित्यत्र मा ईरुरिति विभागः ईरयति-प्रेरयतीति ईरःप्रेरकः-माशब्दोनिषेधार्थः । ईरः-प्रेरकोस्यान्योमा-नास्तीति मेरः मेरएव मेरुः । "ईर प्रेरण"इत्यतः ताच्छील्यार्थे उप्रत्ययः । शिखरिणां-पर्वतानां ॥२३॥ पुरोधसां-पुरोहितानां बृहतां पतित्वाद्बृहस्पतिनामानं । सेनानीनां-सेनानेतॄणां स्कंदनात्स्वस्माज्जगतोनिष्कासनात्स्कंदनामा । स्कंदिर्गतिविशोषणयोरिति धातोरच् । सरसां-सरोवराणां सागरः । गिरतीति गरः गॄ निगरणे पचाद्यच् । सारस्य गरः सागरः रशब्दलोपेनिरुक्तत्वात् । सारभोक्तृत्वात्सागरनामा समुद्रस्थः ॥ २४ ॥ विरोधिनां भर्जनाद्दहनाद्भृगुनामा भृगुस्थः । मुख्यत्वादेकं । चतुर्विधनाशहीनत्वादक्षरनामा प्रणवस्थः । जान्जातान्पातीति जपः याज्यत्वाद्यज्ञः । जपश्चासौ यज्ञश्चेति व्युत्पत्त्या जप-

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् । सेनानीनामहं स्कंदः सरसामस्मि सागरः ॥ २४ ॥ महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् । यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥ अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः । गंधर्वाणां चित्ररथः सिद्धानां कपिलोमुनिः ॥२६॥ उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् । ऐरावतं गजेंद्राणां नराणां च नराधिपम् ॥ २७ ॥ ॥ ॥

यज्ञनामा जपरूपयज्ञस्थः । स्थावराणां-गतिहीनानां हिमालयइति । ह्रीश्च माच तयोरालयः-आश्रयः । ह्रीमालयः सएव हिमालयः । ह्रीश्रीशब्दितलक्ष्मीरूपद्वयस्य आश्रयत्वाद्धिमवत्पर्वतस्थः ॥ २५ ॥ अश्वत्तिष्ठतीत्यश्वत्थनामाश्वत्थगतः नराणामपेक्षितं नारं तद्ददातीतिनारदनामा नारदस्थः । विचित्राधिदेवादिरथत्त्वाच्चित्ररथनामा तन्नामकगंधर्वस्थितः । सुखरूपत्वात्कः पाल्यते जगदनेनेति पिः ॥ पोरक्षणइत्यतःकिः । आतोलोपइटिचेत्याकारलोपः । लीयते जगदनेनेति लः ली श्लेषणइत्यतो डः । ला दानइत्यतोवा कः कश्चासौ पिश्चासौ लश्चेति कपिलः, सुखं पिबत्यनुभवति लीलयेति वा कपिलः ॥ २६ ॥ अत्युत्कृष्टकीर्तिमत्त्वहेतुना उच्चैःश्रवोनामानममृतोद्भवं क्षीरसमुद्र-

जातोच्चैःश्रवःस्थं विद्धि । तदेरं मदीयं सरइति मुक्तिस्थसरसोलक्ष्म्यात्मकत्वात्तदैरं-श्रीः तामवतीतिऐरावतनामानं इंद्रवाहनस्थं विद्धि । नरेश्वर त्वहेतुना नराधिपनामानं चक्रवर्त्यादिस्थं विद्धि ॥ २७॥ सर्वदोषवर्जितत्वादरिभिर्वर्जनाद्वा वज्रनामा इंद्रायुधस्थः । कामितार्थदोग्धृत्वात्कामधुङ्नामा कामधेनुस्थः । कं सुखं तस्य दराःप्रभेदाः तान्पिबत्यनुभवतीति कंदर्पनामा । प्रकृष्टजननकारणमन्मथस्थः। सर्पाणामेकशिरसां । वासस्य कंवासकं अतिशयार्थउकारः वासुकः तद्वत्त्वेन तद्वान्वासुकिः मत्वर्थकइकारप्रत्ययः वासुकियीससुखदइति निरुक्तेः ॥ २८॥ नागानामनेकशिरसां देशकालगुणानंत्यहेतुनाअनंतनामाशेषगतः।यादसां-जलचराणां उत्कृष्टानंददत्वाद्वरुणनामावरुणस्थः । णश्चानिर्वृतिवाचकइत्युक्तेःवरशब्दस्यउकारांतादेशः । वृणोतीति वा वरुणः वृञ्उणप्रत्ययः । ऋगतावितिधातोर्यत्प्रत्यये अर्यज्ञेयं तन्माति जानातीत्यर्यमनामा तन्नामकापितृस्थः ।

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् । प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥ अनंतश्चास्मि नागानां वरुणोयादसामहम् । पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥२९॥ प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् । मृगाणां च मृगेंद्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥ पवनः पवतामस्मि रामः शस्त्रभृतामहम् । झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥ ॥ ॥

संयमतां-नियमनं कुर्वतां यमः नियमनहेतुना यमनामा यमाख्यसारधर्मप्रदइत्यर्थः ॥२९॥प्रकृष्टः ल्हादः-सुखं यस्येति प्रल्हादनामा तन्नामकदैत्यस्थः । कलयतामाकलयतां बंधनादिकुर्वतां वा कालः । कलज्ञानइति धातोः सर्वमाकलयतीतिकालनामा कालस्थः । स्वात्मानं मृगयंत्यन्वेषयंतीति मृगाः भक्तास्तदधिपतित्वान्मृगेंद्रस्थः । विशेषेण नताःविनतास्तेषामाश्रयतया तत्संबंधी वैनतेयः । "वैनतेयोनतास्पद"इति निर्वचनात् संबंधे ढक् ॥ ३०॥ पवतां-शोधकानां वेगवतां वा । पातीति पाः "पा रक्षणे" क्विप् । पाभिः-पालकैः वननीयत्वाद्भजनीयत्वात्पवनः-पवनस्थः लोकं रमयतीति रामः लोकोस्माद्रमतइति वा रामः । रमेर्घञ् । झषाणां-मीनानां । 'माङ्मान'इत्यतोमाशब्देन ज्ञानं त-

स्यालपताज्ञापनाय ह्रस्वतया निर्देशः । "ऊनार्थेचोनमिष्यत"इत्युक्तेः । लोकस्य मं-अल्पज्ञानं करोतीति मकरनामा । मकराख्यजंतुगः । असारतया संसारं जहतस्त्यजतोऽवति-रक्षतीति जान्हवीनामा गंगास्थः ॥ ३१ ॥ सृज्यंतइति सर्गाः-भूतानि तेषां सृष्टिस्थितिलयहेतुरहमेवेत्यर्थः । आत्मनोजीवानधिकृत्य पतित्वेन वर्तते ज्ञप्तिस्वरूपश्चेत्यध्यात्मविद्यानामा ब्रह्मविद्यास्थः । प्रवदतां-जल्पवितंडादिकथां कुर्वतां वाच्यत्वहेतुना वादनामा वादकथास्थः ॥ ३२ ॥ अ इत्याक्रियमाणत्वादकारनामा अकारस्थः । सामासिकस्य-समाससमूहस्य । बहिरंतर्द्विरूपत्वेन द्वंद्वनामा द्वंद्वसमासस्थः । क्षयहीनत्वादक्षयनामा संहर्तृत्वात्कालनामा सन् अक्षयकालस्थःउत्तरावधिशून्यः त्रिकालगतः । "कलच्छेदन"इति धातोः । धाता-धारणपोषणकर्ता । डुधाञ्धारणपोषणयोः । सर्वदिङ्मुखत्वहेतुना विश्वतोमुखनामा चतुर्मुखस्थइत्येके ।

सर्गाणामादिरंतश्च मध्यं चैवाहमर्जुन । अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥ अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च । अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥ मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् । कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥ बृहत्साम तथा साम्नां गायत्री छंदसामहम् । मासानां मार्गशीर्षोहमृतूनां कुसुमाकरः ॥ ३५ ॥ ॥ ॥

सर्वत्र स्थितमुखोपलक्षितसर्वावयववानित्यर्थइत्यन्ये ॥ ३३ ॥ सर्वहरोमारकत्वहेतुना मृत्युनामा मृत्युस्थः । भविष्यतामुत्पत्स्यमानानामुद्भावयतीति व्युत्पत्त्योद्भवनामा उद्भवस्थः । कीर्त्यत्वाश्रयत्ववक्तृत्वहेतुभिः कीर्तिश्रीवाङ्नामा सन् कीर्तौ श्रियां वाचि च स्थितः । स्मरणीयत्वात्स्मृतिनामा स्मृतिस्थः । मेधाधृतिक्षमारूपत्वात्तत्तन्नामा मेधाधृतिक्षमास्थः ॥ ३४ ॥ बृहत्सारत्वाद्बृहत्सः अमेयत्वात् मः बृहत्सश्चासावमश्चेति बृहत्सामनामा । रथंतरवैरूपवैराजशाक्वरादिसाम्नां मध्ये तदाधिक्यहेतुतया बृहत्सामस्थः । स्वगायकांस्त्रातीति व्युत्पत्त्या गायत्रीनामा । त्रिष्टुब्जगत्यादिछंदोभ्यआधिक्यहेतुतया गायत्रीछंदःस्थः । मार्गाणां शीर्षस्थानत्वान्मार्गशीर्षनामा मासेभ्यआधिक्यहेतुत-

या मार्गशीर्षमासस्थः । कुत्सितां सुष्ठुभूतां च मां ज्ञानं करोतीति कुसुमाकरनामा अन्यऋतुभ्यआधिक्यहेतुना वसंतऋतुस्थः ॥ ३५ ॥ छलयतां-कापट्यमाचरतां क्रीडापरत्वहेतुना द्यूतनामा द्यूतस्थः । प्रकाशकत्वात्तेजोनामा तेजस्थः । जयिनां जयरूपसारप्रदत्वहेतुना जयोस्मि । व्यवसायोनिश्चयः व्यवसायिनां व्यवसायरूपसारधर्मदातास्मीत्यर्थोज्ञेयः । सत्त्ववतां-सत्त्वरूपसारधर्मप्रदोस्मीत्यर्थः ॥ ३६ ॥ वासयति-सर्वमाच्छादयति निवासयतीति वा वासुः । "वसआच्छादने""वसनिवासइ"त्यतोवाण्यंतादुण् । सर्वत्र वसतीति वा वासुः वसतेरुण् । सचासौ देवश्च क्रीडादिगुणविशिष्टश्चेति वासुदेवः । धनं जयतीति धनंजयनामा धनंजयस्थः । सर्वस्माद्विशिष्टत्वाद्विः आसमंतात्सः गतः । सुगतावित्यतोडः । विश्वासावासश्च-सर्वगतश्चेति व्यासः । यद्वा विशिष्टा आसा स्थितिर्यस्यासौ व्यासः । "आसाउपवेश-

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् । जयोस्मि व्यवसायोस्मि सत्वं सत्त्ववतामहम् ॥३६॥ वृष्णीनां वासुदेवोस्मि पांडवानां धनंजयः । मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥ दंडोदमयतामस्मि नीतिरस्मि जिगीषताम् । मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥ ॥ ॥

ने"इति धातोः । "उशइच्छाया"मिति धातोःसर्गादीच्छावत्त्वादुशनानामा सन्नुशना कविः उशनसि कवौ स्थितइत्यर्थः ॥ ३७॥दमयतां-दंडं कुर्वतां दंडन हेतुना दंडनामा दंडनरूपधर्मदातास्मीत्यर्थः । जिगीषतां नीतिरस्मि नीतिरूपसारप्रदोस्मि । गुह्यानां-गोपनीयानां मुनीनामीडयत्वसंबंधेन मुनीनामिदं मौनं । शब्दस्वभावान्नपुंसकता । मुनिसंबंधितया मौननामा मौनस्थः । ज्ञानवतां ज्ञानाख्यसारदोहमित्यर्थः स्वयं च ज्ञानरूपत्वेन ज्ञाननामा । अत्र शश्यादिषु विजातीयश्रैष्ठ्यदं विभूतिरूपमुक्तं । नक्षत्रादिनां विजातीयत्वात् । सत्त्वं सत्ववतामित्यादौ धर्मिषु सत्वादिसारधर्मदं विभूतिरूपमुक्तं ज्ञेयं । तथैव दर्शितमस्माभिस्तत्र तत्रैव । रुद्राणां शंकरइत्यादौ सजातीयश्रैष्ठ्यदं विभूतिरूपमुक्तं । वासवोशनोधनंजययज्ञवज्रसामवेदानां सजातीयैकदेशाधिक्यदं विभूतिरूपमुक्तं । तेषां सजातीयसर्वश्रैष्ठ्याभावात् । देवेषु कवि-

त्वादिगुणेषु च ब्रह्मणः । पार्थेषु भीमस्य, यज्ञेषु ज्ञानयज्ञस्य, आयुधेषु चक्रस्य, वेदेषु ऋग्वेदस्याधिक्यात् ॥ ३८ ॥ बीजं-कारणं तदप्यहमेव श्रैष्ठ्यदत्वेन । भगवतः सर्वगतत्वं कुतोमानादित्यतआह ॥ ॥ नतदिति । मया विना यद्भूतं स्यात्तच्चराचरं नास्ति यतोतोहं सर्वत्र स्थितइत्यर्थः । यद्वा रविप्रभृतिषु श्रैष्ठ्यदत्वेन तव सन्निधावुक्ते ज्योतिरादिषु नेति प्राप्तं अतः सर्वत्राहमस्मीति व्यतिरेकमुखेनाह ॥ ॥ नतदिति ॥ ३९ ॥ संक्षेपकरणे कारणं दर्शयन्नुपसंहरति ॥ ॥ नांतइति । अंतः-पर्यवसितिः । अत्र एषइति पदमावर्तते । एषः-"अहमात्मा गुडाकेशे"ति "आदित्यानामहं विष्णुरि"त्यादिना विभूतिरूपसंक्षेपःउद्देशतःशृंगग्राहिकया इदमिति विशिष्य निर्देशेन मया प्रोक्तः । एषतु वक्ष्यमाणतया हृदिस्थस्तु विभूतेर्विस्तरोमया प्रोक्तः-प्रोच्यते । वर्तमाने निष्ठाप्रत्ययः । पुरा प्रोक्तइति वार्थः ॥ ४० ॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन । न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥ नांतोस्ति मम दिव्यानां विभूतीनां परंतप । एषतूद्देशतःप्रोक्तो विभूतेर्विस्तरोमया ॥ ४० ॥ यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ४१ ॥ अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितोजगत् ॥ ४२ ॥ ॥ ॥ ॥**

तमेव विभूतिविस्तरं लक्षणोक्त्याह ॥ ॥ यद्यदिति । यद्यत्सत्वं-वस्तुविभूतिमत्स्वजातितः श्रैष्ठ्योपेतं श्रीमत्संपद्युक्तं ऊर्जितं आभिवृद्ध्युपेतं वा तत्तद्वस्तु मम तेजोरूपेण प्रकाशरूपेणांशेन सह भवतीति तेजोंशसंभवमेवावगच्छ-जानीहि ॥ ४१ ॥ लक्षणमुखेनोक्ततत्तद्वस्तुनिष्ठविभूतिविस्तरादप्यधिकविभूतिविस्तरमाह ॥ ॥ अथवेति । अथवेति पक्षांतरे । एतेन बहुना विभूत्यादियुक्तरविप्रभृतितत्तद्वस्तुनिष्ठपरिच्छिन्नविभूतिरूपाणां विस्तरेण ज्ञातेन तव किं । न किमपि फलं । वक्ष्यमाणव्याप्तज्ञानफलादल्पफलत्वादाक्षेपः । न तु वैफल्यादिति भावः । तर्हि किं ज्ञातव्यमित्यतआह ॥ ॥ विष्टभ्येति । इदं प्रमाणावगतं कृत्स्नं जगदेकांशेन अनंतांशमध्ये एकांशेनैव विष्टभ्य-

व्याप्य स्थितः सर्वांशेन व्याप्तुं जगत्सहस्रमपि नालं । अतः तादृशापर्यवसितव्याप्तिमानहं अतस्तज्ज्ञानमावश्यकमिति भावः । नचैतज्ज्ञानादेव मोक्षसिद्धौ प्रागुक्तपरिच्छिन्नविभूतिरूपाणां ज्ञानं व्यर्थमिति तदुक्तिर्व्यर्थेति शंक्यं । "अज्ञात्वैनं सर्वविशेषयुक्तं देवं परं कोविमु-

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विस्तरतोविभूतिरूपवर्णनं ( विभूति योगो )नाम दशमोऽध्यायः ॥ १० ॥ ॥ ॥ ॥

च्येतबंधादि''ति श्रुत्या प्रागुक्तज्ञानस्यावश्यकत्वात् । महाफलाधिकारित्वात्तवोभयज्ञानमावश्यकं । न विशेषज्ञानमात्रेणालमिति तवैतेन ज्ञातेन किमिति भावेन तवेत्युक्तं ॥४२॥ इति श्रीमद्गीतार्थसंग्रहे राघवेंद्रयतिकृते विस्तरतो विभूतिरूपवर्णनं नाम दशमोऽध्यायः ॥१०॥





ॐ ॥ पूर्वांते "विष्टभ्याहमिदं कृत्स्नमि''ति व्याप्तरूपोपासनस्य संक्षेपेणोक्तरूपस्य बुद्धावनारोहेणाशक्यध्यानत्वात्तद्ध्यानसौकर्याय प्राक् संक्षेपेणोक्तविश्वरूपस्थितिरत्र विस्तरेणोच्यतइति पूर्वानंतर्यमर्थभेदश्चास्येति ध्येयं । विश्वरूपं ज्ञातुं तत्प्रष्टुकामः प्रागुक्तमनुवदत्यर्जुनः । मदनुग्रहायेति द्वाभ्यां । परमं गुह्यमतिगौप्यं आत्मानं भगवंतं अधिकृत्य स्थितमध्यात्मं अध्यात्मनामकं यद्वचः त्वया मदनुग्रहायोक्तं । तेन बंधुस्नेहादिरूपोयं मोहोविगतोपगतः मम ॥ १ ॥ हे कमलदलवदायतनेत्र । त्वत्तः भूतानां भवाप्ययौ । "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथे''त्यादिना सप्तमाध्यायादिषु विस्तरशोमया श्रुतौ अव्ययं माहात्म्यमपि च श्रुतं ॥२॥ तद्वचनं स्तुवन्ज्ञातव्यविश्वरूपा-

अर्जुनउवाच । मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् । यत्त्वयोक्तं वचस्तेन मोहोयं विगतोमम ॥ १ ॥ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशोमया । त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥ एवमेतद्यथात्थ त्वमात्मानं परमेश्वर । द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥ मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो । योगेश्वर ततोमे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥ श्रीभगवानुवाच । पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः । नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥ ॥ ॥

विर्भावं प्रार्थयते एवमित्यादिद्वाभ्यां । हे परमेश्वर यथा येन प्रकारेणात्थ-वदसि । एतद्वचनं एवमेव सत्यमेव । हे पुरुषोत्तम ऐश्वर्यमचिंत्यशक्तिकं ते रूपं द्रष्टुमिच्छामि ॥ ३ ॥ हे प्रभो-समर्थ तद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे । ततस्तर्हि योगेश्वर-सर्वोपायपते । त्वमव्ययमात्मानं-स्वरूपं मे-मह्यं दर्शय । प्रार्थनायां लोट् । प्रभोइति वचनं तत्रातिसमर्थत्वात् तच्छक्त्यैवातींद्रियस्यापि दर्शनं स्यादिति ज्ञापनाय ॥ ४ ॥ एवं कौतुहलान्वितेन प्रार्थितोभगवान् रूपं दिदर्शयिषुरादौ दर्शनं कुर्विति विधत्ते । पश्येत्यादिना चतुष्टयेन । ते रूपं द्रष्टुमिच्छामीत्येकरूपदृष्टिप्रार्थनेपि दिव्यान्यप्राकृतानि । नानाभूताः शुक्लादिवर्णाः आकृतयः संस्थानाविशेषाः येषां तानि ।

शतशः सहस्रशः बहूनीति यावत् । मे रूपाणि हे पार्थ पश्येति बुहुरूपदर्शनोक्तिः एकस्यैव रूपस्याचिंत्यशक्त्या विशेषबलेन चानंतरूपः





समुदायात्मकत्वाभिप्रायेणेति ज्ञेयं । नानाविधानीत्यस्य विवरणं नानावर्णेत्यादि ॥ ५ ॥ पश्ये-त्युक्तौ कस्तत्र विशेषइत्यतआह ॥ ॥ पश्येति । द्वादशादित्यानष्टौ वसूनेकादशरुद्रान्पंचाश-न्मरुतः । तथा शब्दः समुच्चये । अदृष्टपूर्वाणि पूर्वमदृष्टानि बहूनि आश्चर्याणि अद्भुतानि च ॥ ६ ॥ मम देहे-मदीये रूपे पश्य । कृत्स्नमित्यस्य विवरणं सचराचरमिति । जगदिह तव प्रदर्शनीये

पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा । बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥६॥ इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥७॥ न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा । दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥ संजयउवाच । एवमुक्त्वा ततो-राजन्महायोगेश्वरोहरिः । दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

मम देहे एकस्थमेकदेशस्थमद्य पश्य हे गुडाकेश-जितनिद्र । यच्चान्यत्द्रष्टुमिच्छसि तत्सर्वं मम देहे पश्य ॥ ७ ॥ त्वं द्रष्टुमिच्छसि । मयाप्युच्यते पश्येति । तथापि त्वंत्वनेन स्वचक्षुषा मां द्रष्टुं न शक्यसे न शक्तोभविष्यसि । अतस्ते दिव्यं अलौकिकं चक्षुर्ददामि दर्शनशक्तिं ददामि । ऐश्वरभूतमत्संबंधियोगं सामर्थ्यं पश्येति ॥ ८ ॥ अनंतरवृत्तांतं धृतराष्ट्रं प्रति संजयउवाच । तदाह ॥ ॥ एवमिति । “पश्य मे पार्थरूपाणी”त्यादिप्रकारेणोक्तत्वेत्यर्थः । महतां योगानामुपायानां अनंतशक्तीनां वेश्वरः कुतएतदि-

त्यतउक्तं ॥ ॥ हरिरिति । सर्वयज्ञादिभागहरणाद्धरिः परममनेकविभवोपेतं । "इडोपहूतं गेहेषु हरे भागं क्रतुष्वहं । वर्णोमे हरितः श्रेष्ठ तस्माद्धरिरिति स्मृत"इति मोक्षधर्मोक्तेः गेहेषु-इष्टिग्रहेष्वित्यर्थः । हरतेरिकारप्रत्ययः । अप्राकृतविग्रहस्य साकारस्यानंतपूजास्थानेषु युगपत्सन्निधानेन भागहारिणोमहायोगेश्वरत्वं किं वक्तव्यमिति भावः ॥ ९ ॥ ॥ तद्रूपमाह ॥ ॥ अनेकेति । अनेकानि वक्त्राणि नयनानि यस्य तत् । अनेकशब्दोनंतवाची । अनेकेषामद्भुतानां दर्शनं यस्मिन्नित्यनेकाद्भुतदर्शनं रूपं दर्शयामासेत्यनुषंगः ॥ १० ॥ सर्वाश्चर्यमयं-सर्वाश्चर्यात्मकं । तादात्म्यार्थे मयट् । देवं-क्रीडादिगुणं । अनंतं-देशकालगुणापरिच्छिन्नं । विश्वतोमुखं-सर्वदिक्षु मुखं यस्य

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् । अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥ दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् । सर्वाश्चर्यमयं देवमनंतं विश्वतोमुखम् ॥११॥ दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा । अपश्यद्देवदेवस्य शरीरे पांडवस्तदा ॥१३॥ ततः सविस्मयाविष्टो हृष्टरोमा धनंजयः । प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥ १४ ॥ अर्जुनउवाच । पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् । ब्रह्माणमीशं कमलासनस्थं ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥ ॥ ॥ ॥

तद्विश्वतोमुखं । अनंतमुखमिति वा ॥ ११ ॥ किंच दिव्याकाशे सूर्यसहस्रस्यानंतसूर्यराशेः युगपदुत्थितस्येति शेषः । प्रभा युगपदुत्थिता स्यात्सा प्रभा तस्य महात्मनोविश्वरूपस्य भासः-प्रभायाः सदृशी स्यात् नान्यास्त्युपमेत्यर्थः ॥ १२ ॥ ततः किं जातमित्यत आह ॥ ॥ तत्रेति । भगवता प्रदर्शिते सति देवदेवस्य शरीरे विश्वरूपे देवदानवमानवादिभेदेनानेकधा प्रविभक्तं कृत्स्नं जगदेकस्थमेकदेशस्थं तदापश्यत् ॥ १३ ॥ दर्शनानंतरं किमकरोदित्यतआह ॥ ॥ ततइति । दर्शनानंतरं ॥ १४ ॥ किमभाषतेत्यतोदृष्टरूपानुवादपूर्वं स्तुतिमकरोदित्याह । अर्जुनउवाचेत्यादिना । सर्वान्देवान्सर्वान्प्राणिविशेषसमूहांश्चेत्यर्थः । ब्रह्माणं-चतुर्मुखं । कमलासने-च-

तुर्मुखे स्थितं ईशं-रुद्रं । तदुक्तं पाद्मे । "विष्णुं समाश्रितोब्रह्मा ब्रह्मणोंकगतोहरः । हरस्यांगविशेषेषु देवाः सर्वेपि संस्थिताः"इति । तव देहे देवानित्यत्रापि परंपरयेति ज्ञेयं । दिव्यानद्भुतानुरगान्सर्पांश्च तव देहे पश्यामि ॥ १५ ॥ अनेकबाहूदरवक्त्रनेत्रमित्यत्रापि अनेकनयनमित्यत्रेवानेकशब्दोऽनंतवाची । प्रागुक्तानुवादरूपत्वादपौनरुक्त्यं । सर्वतः सर्वस्मिन्देशे अनंतान्यपरिमितानि रूपाणि यस्य तं । हे विश्वरूप-पूर्णरूप "सर्वं समस्तं विश्वं च अनंतं पूर्णमेवचे"त्युक्तेः विश्वेश्वर-जगत्पते । तवादिं मध्यं अंतं वा न पश्यामि । नञ्त्रिरुक्तिरादरार्था । अतएवाद्यंतयोरभावादेव मध्याभावसिद्धौ पुनर्मध्यं नेत्युपचारनिवृत्यर्थं ॥ १६ ॥ दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिः-

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनंतरूपम् । नांतं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूपम् ॥१६॥ किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतोदीप्तिमंतम् । पश्यामि त्वां दुर्निरीक्ष्यं समंताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥ त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् । त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषोमतोमे ॥ १८ ॥ अनादिमध्यांतमनंतवीर्यमनंतबाहुं शशिसूर्यनेत्रम् । पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपंतम् ॥१९॥ द्यावापृथिव्योरिदमंतरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः । दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥ ॥ ॥

प्रकाशोयस्य तमित्युक्त्या प्राप्तपरिमितत्वशंकाव्युदासायोक्तमप्रमेयमिति-अमितद्युतिमित्यर्थः ॥ १७ ॥ परं-निधानं मुख्याश्रयः । शाश्वतधर्मगोप्ता अनादिपरंपराप्राप्तधर्मरक्षकः । अव्ययोन्हासहीनः सनातनोनादिनित्यः पुरुषोमे मतः ॥ १८ ॥ अनादिमध्यांतं-आदिमध्यांतशून्यं गुणतोत्रादिमध्यांतहीनत्वमुच्यते । नांतं न मध्यमित्यत्र देशतः। अतोन पौनरुक्त्यं। शशिसूर्यौ नेत्रयोर्यस्य तमिति वा जन्यजनकभावेन वा भेदोक्तिः । देवानां बहुरूपत्वादनेकाश्रयत्वं युक्तमिति "चंद्रमामनसोजात" इति मनोजाततया तदाश्रयत्वमप्यविरुद्धं । दीप्तहुताशवक्त्रमिति जन्यजनकभावेनाश्रयाश्रयिभावेन वेति ज्ञेयं ॥ १९ ॥ द्यावापृथिव्योरिदमंतरं-मध्यं एकेन त्वया एकरूपेण त्वया व्याप्तं । रूपातरैस्तु सर्वादिशोव्याप्ताइत्यर्थः । त्वयेत्येकवचनेनैवैकेनेति लाभे पुनरेकेनेत्युक्तिः एकेन रूपेण द्यावापृथिव्यंतरव्याप्तिसूचनाय । हे महात्मन्तवेदमुग्रं-भयंकरमद्भुतं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितं-अतिभीतं पश्यामीत्यन्वयः । भूमेर्भारहाराय प्रवृत्तत्वादुग्रमिव न तूग्रमेव । तदुग्रत्वमपि केषांचित्संहार्यत्वकारणविशेषादनभ्यासरूपकारणाद्वा । अभ्यासे तु आनंदएव तद्दर्शनाद्भवति । अत्र लोकत्रयपदेन लोकत्रयस्थभक्तवर्गग्रहः । अभक्तानां तद्दृष्टेरेवाभावात् । यद्वा तद्रूपमदृष्ट्वापि मनसा तदनुसंधायैव बिभ्यज्जनं दृष्ट्वार्जुनोहमिव एतेपि दृष्ट्वा बिभ्यतीति बुध्वा लोकत्रयं प्रव्यथितं पश्यामीत्याहेति ज्ञेयं । अस्मिन्पक्षे लोकत्रयशब्दोभक्ताभक्तवर्गपरः ॥ २० ॥ अन्यदपि

अमी हि त्वा सुरसंघाविशंति केचिद्भीताः प्रांजलयोगृणंति । स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवंति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥ रुद्रादित्यावसवोये च साध्या विश्वेश्विनौ मरुतश्चोष्मपाश्च । गंधर्वयक्षासुरसिद्धसंघा वीक्षंते त्वां विस्मिताश्चैव सर्वे ॥२२॥ रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् । बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥ नभस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रं । दृष्ट्वा हि त्वां प्रव्यथितांतरात्मा धृतिं न विंदामि शमं च विष्णो ॥ २४ ॥ दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि । दिशोन जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ २५ ॥

स्वदृष्टमाहार्जुनः ॥ ॥ अमीहीति । सुरसंघाः-मुक्तदेववर्गाः । "प्रवेशोनिर्गमश्चैव मुक्तानां स्वेच्छया भवेदि"ति वचनात् । तेन "पश्यामि देवांस्तव देव देहे"इत्यनेन न पौनरुक्त्यं । अत्र मुक्तानां तत्रामुक्तानांमुक्तेः । पुष्कलाभिर्गुणपूर्णाभिः स्तुतिभिः स्तुवंति ॥ २१ ॥ ऊष्मपाः-पितरः "उष्मभागाहि पितर"इति श्रुतेः । गंधर्वादीनां संघाः ॥ २२ ॥ बहुदंष्ट्राभिः करालं-विरूपं । लोकाः भक्तवर्गार्थत्वे तु लोकत्रयमित्यत्रेवाभिप्रायोध्येयः । तथाहमपि प्रव्यथितः ॥२३॥ व्यात्ताननं-विवृतमुखं । अंतरात्मा-मनः । न विंदामि-न प्राप्नोमि । शमं सुखंच न विंदामि-न प्राप्नोमि । विष्णुशब्दार्थउक्तः दशमेऽध्याये ॥ २४ ॥ दंष्ट्राकरालानि-दंष्ट्राभिर्विरूपाणि कालेति प्रलय

कालाग्निसन्निभानि समप्रभाणि । न जाने-नजानामि । शर्म सुखं च न विंदामि । जगन्निवास-जगदाधार ॥ २५ ॥ त्वा-त्वां सूतपुत्रः कर्णः । योधमुख्यैः योधेषु-भटेषु प्रधानैः अस्मदीयैः सह ॥ २६ ॥ ते प्रागुक्तधृतराष्ट्रपुत्रादयः ते-तव वक्त्राणि विशंतीत्यत्र तेषां भगवन्मुखाभिमुखचेष्टाभावेपि भगवानेवानेकमुखैः सेनाद्वयस्थयोधान् ग्रसित्वा तिष्ठतीत्युपचारेण विशंतीत्युक्तिर्ज्ञेया । एवमग्रेपि । केचित्तस्मिन्मुहूर्तएव मरिष्यमाणाः । केचिद्दशनांतरेषु विलग्नाः चूर्णितैः शतशः सूक्ष्मरेखोपेतशीर्णघटवत् शतशः सूक्ष्मरेखोपेततया भिन्नैः उत्तमांगैः-शिरोभिरुपलक्षिताः संतः दृश्यंते मयेत्यर्थः । मंददृष्टीनां अन्येषां तथा दृष्टयभावेप्यर्जुनस्य दिव्यदृष्टिमत्वात्तथा दर्शनं युक्तमिति ज्ञेयं । यथान्यैरदृष्टापि पुरूरवसोजरा अश्विभ्यां दृष्टा तथेति । व्यक्तमेतद्विष्णुधर्मे एकोनविंशेऽध्याये तथाहि–पुरूरवसोरूपं दृष्टुमा-

**अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसंघैः । भीष्मोद्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥ वक्त्राणि ते त्वरमाणाविशंति दंष्ट्राकरालानि भयानकानि । केचिद्विलग्नादशनांतरेषु संदृश्यंते चूर्णितैरुत्तमांगैः ॥ २७ ॥ ॥ ॥ ॥ ॥**

गतावश्विनौ प्रति पुरूरवोराजा तैलाभ्यक्तः सन्स्नातः भूषणयुतः सन्नागमिष्यामि तदा मद्रूपं द्रष्टव्यमित्युक्ते "अप्रसाधितमेवाशु भवंतं वसुधाधिप ॥ पश्यावोभूषितं त्वां वै वस्त्रालंकरणान्वितं ॥" इत्याश्विभ्यामुक्ते तूष्णीं बहिर्गतस्य राज्ञः सांगोपांगादिकं सर्वं समपश्यतां । "शिरोललाटबाहूवास्यनयनादिविलोकनं ॥ कृत्वा चिरं महीपाल मूचतुस्तावरिंदमौ ॥ प्रविश्य स्नास्व भूपाल यथार्हैश्च विभूषणैः ॥ विभूषिततनुं भूयस्त्वां द्रक्ष्यावोनरेश्वरं ॥" इत्याश्विभ्यामुक्तोराजा गृहं प्रविश्य स्नातवानुलिप्तोवस्त्रालंकारादिभूषितः सन्नाश्विनोः समीपमागतः तदा तौ तद्रूपं दृष्ट्वा हासं चक्रतुः । तदा राज्ञा हासकारणे पृष्टे "शृणु भूपाल सकलमावयोर्हासकारणं ॥ युष्मद्दर्शनसंभूतलक्षणापचयहेतुकं ॥ अतस्तस्याभवत्पूर्वं यादृशी ते स्वरूपता ॥ सांप्रतं तादृशी नेयं भूषितस्यापि भूषणैः ॥ दिव्येन चक्षुषा भूप कालस्यास्य

च तस्य च ॥ वपुःपरिणातिं स्वस्मात् पश्यावोपचयप्रदां ॥" इत्यादिनेति भावः ॥ २७ ॥ विज्वलंति दीप्यमानानि वक्त्राणि ॥२८॥ "तवापि वक्त्राणि समृद्धवेगा"इत्यत्र भगवता अतितीव्रं ग्रस्यमानत्वात्तथोपचर्यतइति भावः ॥ २९ ॥ समग्रान्लोकान् जनान् ज्वलद्भिर्वदनैः समंताद्ग्रसमानः-मुखांतःकुर्वाणः लेलिह्यसे । कोपेन रुधिरासिक्तमोष्टजपुटादिकं जिव्हाग्रेणास्वादयसीवासकृत्स्पृशसि । हे विष्णो तवोग्राः-तीक्ष्णाः भासः-प्रभाः तेजोभिः-प्रकाशनशक्तिभिः समग्रं जगदापूर्य व्याप्य प्रतपंति-देहादिपदार्थेषूष्णिमानं जनयंति ॥ ३० ॥

यथा नदीनां बहवोंबुवेगाः समुद्रमेवाभिमुखाद्रवंति । तथा तवामी नरलोकवीराविशांति वक्त्राण्यभिविज्वलंति ॥ २८ ॥ यथा प्रदीप्तं ज्वलनं पतंगा विशंति नाशाय समृद्धवेगाः । तथैव नाशाय विशंति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥ लेलिह्यसे ग्रसमानः समंताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः । तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपंति विष्णो ॥ ३० ॥ आख्याहि मे कोभवानुग्ररूपो नमोस्तु ते देववर प्रसीद । विज्ञातुमिच्छामि भवंतमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥ श्रीभगवानुवाच । कालोस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः । ऋतेऽपि त्वां न भविष्यंति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥ ॥ ॥ ॥ ॥ ॥

भगवत्स्वरूपं तदीयगुणकर्माणि जानन्नप्यर्जुनः अज्ञातगुणकर्मविशेषज्ञानार्थं पृच्छति ॥ ॥ आख्याहीति । उग्ररूपोभवान्कः किंधर्मकः किमर्थमुग्ररूपइत्यर्थः ॥ ३१ ॥ एवमर्थितोभगवान्स्वगुणादीनाह ॥ ॥ कालोस्मीति । "कलबंधने कलसंहरणे कलज्ञाने कलविद्रावणे कलकामधेनुरि"ति धातुपाठात् । पूर्णषड्गुणैः कलितत्वात्संबद्धत्वात्कालः पूर्णषड्गुणोस्मीत्यर्थः । तथा जगद्बंधनसंहरणबोधनविद्रावणादिकर्मयुक्तत्वाच्च कालोस्मीत्यर्थः । कलतेः कर्माणि कर्तरिच अण् घञ् प्रत्ययोवा । किमर्थमुग्ररूपमित्यस्योत्तरं लोकक्षयकृदित्यादि । प्रवृद्धो-

देशकालतः परिपूर्णः । अनादिनित्य इति वा । लोकस्य क्षयकृद्भवन्निह युद्धमंडलगतान् जनान्प्रत्यक्षतएव संहर्तुं प्रवृत्तोस्मि । तर्हि पार्थानामपि संहर्तुं प्रवृत्तः किमित्यतआह ॥ ॥ ऋतेपीति । अपिःधर्मादिसमुच्चये । धर्मादिपंचपांडवान् अश्वत्थामकृतवर्मकृपांश्च विनेत्यर्थः । प्रत्यनीकेषु-परस्परं प्रतिस्पर्धितया स्थिते सेनाद्वये । अक्षौहिणीबहुत्वाभिप्रायेण बहुवचनं । येऽवस्थितायोधास्ते सर्वे न भविष्यंतीत्यर्थः॥ ३२॥ पूर्वं द्वितीये "न चैतद्विद्मः कतरन्नोगरीयोयद्वा जयेम यदि वानोजयेयुरि"ति वदंतं पार्थं प्रति संदेहेऽपि युद्धे प्रवृत्तिर्युक्ता । पक्षद्वयेपि फललाभात । "हतोवा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीमि"त्युत्तरमुक्तं । इदानीं तव पराजयशंकापि नास्तीत्याह । तस्मादिति द्वयेन । यस्मादहमेव लोकान्समाहर्तुं इह प्रवृत्तः तस्माद्विजये संदेहाभावादुत्तिष्ठ-योद्धुं सन्नद्धोभव । शत्रून् जित्वा यशोलभस्व समृद्धं राज्यं भुंक्ष्व । पूर्वमेव मया निहताः-निहतप्रायाः अपहृतायुष्ट्वेन संनिहितमरणाः संति । तान्प्रत्यक्षतोहंतुं हे सव्यसाचिन् त्वं निमित्तमात्रं भव । पश्चादपि त्वयि स्थित्वाऽहमेव हनिष्यामीति भावः ॥ ३३ ॥ ननु द्रोणो-धनुर्विद्याचार्यः भीष्मः-स्वच्छंदमृत्युः । योस्य शिरः छित्वा भूमौ पातयेत्तच्छिरोभेत्स्यतइति पितुर्वरेण बलिष्ठः सैंधवः । वासवशक्त्या कर्णोबलवान् । एवमन्ये च बलिष्ठाः संति । ते कथं मया जेयाइत्यतआह ॥ ॥ द्रोणंचेति ॥ ३४ ॥ ततः किं जातमिति धार्तराष्ट्रहार्दं परिहर्तुं संजयउवाच । किमित्यतआह ॥ ॥ एतदित्यादिना । वेपमानः-भयकंपितांगः । भीतभीतः-अत्यंतभीतः ॥ ३५ ॥ तद्वचनमाह ॥ ॥ स्थानइत्यादिना । हे हृषीकेश-सर्वेंद्रियप्रेरक तव प्रकीर्त्या जगत्प्रहृष्यति-अनुरज्यतेचेत्यादिकं स्थाने-अव्ययमेतत युक्तमेवेत्यर्थः ॥ ३६ ॥ कथं युक्तमित्यतआह । कस्मादिति । हे महात्मन्महांश्चासावात्माच तस्य संबुद्धिः महात्मन् । महच्छब्दोत्र पूर्णवाची । आत्मशब्दोपि"यच्चाप्नोती" त्यादिस्मृतेराप्त्यादानाविषयानुभवानित्यसत्तारूपार्थचतुष्टयवाची । पूर्णाप्त्यादिमान्नित्यर्थः । गरीयसे-गुरुतमेयस्ब्रह्मणः-चतुर्मुखस्याप्यादिकर्त्रे-मूलकर्त्रे ते-तुभ्यं कस्मान्न नमेरन् । नमेयुरेव । अनंत-अंतशून्य । देवानामीश । जगन्निवास-जगदाश्रय । यत्सदसद्भावात्मकं जगत्तत्परं तदुत्तममक्षरं त्वमेवेत्यर्थः । ३७। निधानमाश्रयः । वेत्तासि-वेदितासि-परिज्ञातासि । वेद्यं च त्वमेव । परंधाम-तेजोजातं च त्वमेव । अनंतरूप । कालतोंतहीनं रूपं यस्य तस्य संबुद्धिः । नच "नांतं न मध्यं न पुनस्तवादिं पश्यामी"त्यनेन"त्वया ततमि"त्यस्य पौनरुक्त्यं शंक्यं । नांतं पश्यामीत्युक्ते विद्यमानमप्यंतं स्वयं न पश्यामीत्यपि प्रतीत्या परिमाणानंत्यं नेश्वरस्य सिध्यतीत्यतोन केवलमहं न पश्यामि । त्वया ततं च विश्वमित्युक्तत्वेन सप्रयोजनत्वान्न पुनरुक्तिरिति ज्ञेयमिति । "द्यावापृथिव्योरिदमंतरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः"इति । "त्वया ततं विश्वमनंतरूपं" "पश्यामि त्वां सर्वतोनंतरूपमि"त्याद्यभ्यासोविष्णोर्देशकालगुणैः आनंत्ये स्वस्य महातात्पर्यज्ञापनार्थइति न पौनरुक्त्यं शंक्यं ॥३८॥ गुणांतरयुक्तत्वेन पुनः स्तौति ॥ ॥ वायुरिति ।

तस्मात्त्वमुत्तिष्ठ यशोलभस्व जित्वा शत्रून्भुंक्ष्व राज्यं समृद्धम् । मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥३३॥ द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् । मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥ संजयउवाच । एतच्छ्रुत्वा वचनं केशवस्य कृतांजलिर्वेपमानः किरीटी । नमस्कृत्वा भूयएवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥ ॥

अर्जुनउवाच । स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशोद्रवंति सर्वे नमस्यंति च सिद्धसंघाः ॥३६॥ कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोप्यादिकर्त्रे । अनंत देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥ त्वमादिदेवः पुरुषः पुराणः त्वमस्य विश्वस्य परं निधानम् । वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनंतरूप ॥ ३८ ॥ वायुर्यमोग्निर्वरुणः शशांकः प्रजापतिस्त्वं प्रपितामहश्च । नमोनमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमोनमस्ते ॥ ३९ ॥ ॥

वायुर्बलज्ञानरूपः । यमः-दोषेपरतिमान् । अग्निः-स्वतोगतिहीनजगन्नेता । वृणुते भक्तानिति वरुणः । अतिसुखांकितत्वात् शशांकः । प्रजापालनात् प्रजापतिः ॥ ३९॥ सर्वतः दक्षिणोत्तरादिसर्वपार्श्वेभ्यः नमोस्तु ते । हे सर्वपरिपूर्ण । ननु "सर्वं खल्विदं ब्रह्मेति" श्रुतौ इदं सर्वं च जगद्ब्रह्मेत्ति सर्वस्य जगतो ब्रह्मात्मकत्वोक्तेः"त्वमस्य विश्वस्य परं निधानं । त्वयाततमिदं विश्वमि" त्याद्ययुक्तमित्यत: श्रुतिगतसर्वशब्दार्थमाह ॥ ॥ सर्वमिति । सर्वं-विश्वं समाप्नोषि-व्याप्नोषि ततः सर्वोसि-"सर्वं खल्विदं ब्रह्म" "पुरुषएवेदं सर्वं"इत्यादिश्रुतिस्थसर्वशब्दवाच्योसि । इदं ब्रह्म सर्वं खलु-सर्वजगव्द्यापि खल्वित्यादिरूपेण श्रुत्यर्थोज्ञेयः । न तु जगदात्मकत्वेनेत्यभिप्रायः ॥४०॥ एतादृशमाहात्म्यं भगवंतं प्रति यदपराद्धं तत्क्षंतव्यमित्याह ॥ ॥ सखेत्यादिना । इदं प्रागुक्तं जगत्स्रष्टृत्वादिकं महिमानं अजानता मया प्रमादात्-पारवश्यात्प्रणयेन वा-स्नेहेन

नमः पुरस्तादथ पृष्ठतश्च नमोस्तु ते सर्वतएव सर्व । अनंतवीर्यामित विक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥ सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति । अजानतामहिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥ यच्चावहासार्थमसत्कृतोसि विहारशय्यासनभोजनेषु । एकोऽथ वाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥४२॥ ॥ ॥ ॥ ॥

वा सखेति मत्वा हे कृष्ण हे यादव हे सखेति प्रसभं-अबहुमानं यथा यदुक्तं तत्क्षामये-क्षमापये इत्यग्रेतनेनान्वयः । हे सखइति विच्छिद्य वक्तव्ये संधिश्छांदसः ॥ ४१ ॥ किंच अथवेति पक्षांतरे । हे अच्युत सर्वगुणैश्च्युतिहीन । विहारः-क्रीडा तदादिषु एकोपि त्वं सर्वोत्तमोपि-असत्कारानर्होपि इति यावत् । यदपहासार्थमसत्कृतोसि-अवमतोसि । तदप्रमेयं त्वां समक्षं त्वत्पुरतोहं क्षमापये-क्षमस्वेति प्रार्थये । एकशब्दे एशब्दः एकवाची । कशब्दस्तु करोतेरंतर्णीतण्यर्थात् केवल ड्वाडप्रत्यये कइति कर्तृवाची कारयितृवाची च । एकोऽसहायः एकः-कर्ता कारयिता चेत्येकः सर्वोत्तमः अन्यनिरपेक्षकर्तृत्वादिमतएव सर्वोत्तमत्वादिति । अत्र एकशब्दः-सर्वोत्तमपरोऽध्येयः ॥

॥४२॥ असत्कारानर्हतामेव गुणांतरोक्त्या व्यनक्ति । पितासीत्यादिना । त्वमस्य चराचरस्य लोकस्य पितासि-जनकोसि । अतएव पूज्यो-गरीयान् गुरुरत्यंतं गुरुश्च अप्रतिमप्रभाव-अनुपमैश्वर्य ॥४३॥ यस्मादुक्तमहामहिमा कायं भूमौ प्रणिधाय ईशमीड्यं-स्तुत्यं त्वा-त्वां प्रणम्य प्रसादये । हे देव पित्रादिः पुत्रादेरिवापराधं सोढुमर्हसि ॥ ४४ ॥ एवं क्षमाप्य प्रार्थयते ॥ ॥ अदृष्टेति । हे देव पूर्वमदृष्टमदृष्टपूर्वं तव रूपं दृष्ट्वा हृषितोस्मि । तथा भयेन च मे मनः प्रव्यथितं-प्रचलितं । अतोहे देवेश जगन्निवास तदेव रूपं मे दर्शय-प्रसीद ॥४५॥ तदेवेत्युक्तं रूपमाह ॥ ॥ किरीटिनमिति । यथा विश्वरूपं दृष्टवानस्मि तथैव तेनैव पूर्वदृष्टेन चतुर्भुजेन रूपेण त्वां द्रष्टुमिच्छामि । हे सहस्र-

पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् । नत्वत्समोस्त्यभ्यधिकः कुतोन्यो लोकत्रयेऽप्य-प्रतिमप्रभाव ॥४३॥ तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीश मीड्यम् । पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥ अदृष्टपूर्वं हृषितोस्मि दृष्ट्वा भयेन च प्रव्यथितं मनोमे । तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥४५॥ किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव । तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥४६॥ श्रीभगवानुवाच । मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् । तेजोमयं विश्वमनंतमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥ ॥

बाहो-अनंतबाहो विश्वमूर्ते गुणपूर्णविग्रहेति वा विश्वस्मिन्मूर्तिर्यस्येति वार्थः ॥४६॥ भक्त्यतिशयोत्पादनाय विश्वरूपप्रदर्शनस्य दौर्लभ्यमाह ॥ ॥ मयेति । हे अर्जुन प्रसन्नेन मया आत्मयोगात् स्वरूपसामर्थ्यात्परमुत्तमं इदं रूपं तव दर्शितं । तद्विशिनष्टि । तेजोमयं प्रचुर-तेजस्स्वरूपं विश्वं पूर्णं अनंतं देशकालापरिच्छिन्नं आद्यं "त्वदन्येन न दृष्टपूर्वमि"त्यस्य त्वत्तोऽधमैरदृष्टपूर्वमित्यर्थः । तैरपि स्वयोग्यता-नुरोधेन दृष्टत्वेपि अर्जुनवन्न दृष्टमित्यदृष्टत्वोक्तिः । तथा त्वयात्विंद्रशरीरेण दृष्टपूर्वमित्यपि त्वदन्येनेति विशेषणाल्लभ्यते । यन्मे रूपं

दर्शितमित्यन्वयः । अत्र विश्वरूपस्य परमित्युत्तमत्वोक्तिः अज्ञजनापेक्षयैव । ब्रह्मादीनां कृष्णाद्यवतारेष्वपि परत्वधीसत्वादिति ॥ ४७ ॥ ननु अर्जुनादवरैः स्वतोर्जुनवन्न दृष्टमपि विश्वरूपं वेदादिसाधनैरर्जुनेनेव तदवरैरपि तथा दृश्यतामित्यतआह ॥ ॥ न वेदेति । वेदानां यज्ञानां चाध्ययनैरग्निहोत्रक्रियाभिः उग्रैः कृच्छ्रचांद्रायणादितपोभिरेवंरूपः प्राक्प्रदर्शितविश्वरूपोहं नृलोके त्वदन्येन-त्वत्तोऽवरेण त्वद्वद्द्रष्टुं न शक्यइत्यर्थः । सर्वात्मनार्जुनादन्येनादृष्टार्थत्वे "दृष्ट्वाद्भुतं रूपमि"ति प्रागुक्तविरोधइति ज्ञेयं ॥ ४८ ॥ अदृष्टपूर्वमित्यादिना प्रार्थितस्योत्तरमाह ॥ ॥ मातइति । घोरं संहर्तृरूपं ईदृक्-ईदृशम् अनंतबाह्वादिरूपं दृष्ट्वा ते व्यथा मास्तु विमूढभावोविमूढत्वं च मास्तु

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः । एवंरूपः शक्यअहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥ मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् । व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥ संजयउवाच । इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः । आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥ अर्जुनउवाच । दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन । इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥ ॥

व्यपगतभयः प्रीतमनाश्च सन्पुनस्त्वं तदेव रूपं पूर्वदृष्टमेव रूपं प्रपश्येति ॥ ४९ ॥ ततः किं जातमिति धार्तराष्ट्रहार्दं निरासितुं "संजयउवाच । इत्यर्जुनमि"त्यादिना इत्युक्त्वेत्यन्वयः । तथा शब्दः समुच्चये । स्वकं रूपं दर्शयामास चेत्यर्थः । स्वं-स्वकीयतया प्रदर्शनीयमित्यर्थः । विश्वरूपं न स्वकीयं इदं तु स्वकीयमिति लोकभ्रांतिविषयमिति यावत् । भीतमेनं भूयः आश्वासयामास च किं कृत्वा महात्मा सौम्यवपुर्भूत्वेति ॥ ५० ॥ विश्वरूपतिरोधानेन कृष्णरूपप्रदर्शनेनाश्वासितोस्मीत्याहार्जुनोदृष्ट्वेति । किंच मनुष्यवद्दृश्यमानत्वात् मानुषं इदं सौम्यमक्रूरं इदं तव रूपं दृष्ट्वा इदानीं सचेताः प्रसन्नचित्तः संवृत्तोजातोस्मि । प्रकृतिं-पूर्वस्वभावं स्वस्थतां गतोस्मीत्युवाचेत्यन्वयः ॥५१॥

भयंकरं रूपं किमर्थं दर्शितवानसीत्यतः विश्वरूपदृष्टेर्महिमानमाह भगवान् ॥ ॥ सुदुर्दर्शमिति । यन्मम रूपं दृष्टवानसि । अस्य रूपस्य नित्यं दर्शनकांक्षिणोये देवाः तेपि यद्दृष्टवंतस्तदिदं सुदुर्दर्शं । केषांचित्सुखेन दर्शनीयं । केषांचित्सुखेन दुःखेन च दर्शनीयमित्यर्थः । देवानामप्यपेक्षितत्वात्तव शत्रुवधे निमित्तमात्रत्वज्ञापनाय चैतद्रूपं दर्शितमिति भावः ॥ ५२ ॥ किंचातिदुर्लभदर्शनं ते मया कारितमिति भावेनाह ॥ ॥ नाहमिति । यथा दृष्टवानसि एवंविधोविश्वरूपवानित्यर्थः ॥ ५३ ॥ केनोपायेनद्रष्टुं शक्यइत्यतआह ॥ ॥ भक्ते-

श्रीभगवानुवाच । सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम । देवाअप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥५२॥ नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्यएवंविधोद्रष्टुं दृष्टवानसि मां यथा ॥५३॥ भक्त्या त्वनन्यया शक्यअहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥ मत्कर्मकृन्मत्परमो-मद्भक्तः संगवर्जितः । निर्वैरः सर्वभूतेषु यः समामेति पांडव ॥ ५५ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विस्तरतोविश्वरूपस्थितिवर्णनं नाम एकादशोऽध्यायः ॥११॥

ति । वेदादितोविशेषद्योतकस्तु शब्दः । अनन्यया-अन्यासाधारणया असहाययेति वा । तत्वेन ज्ञातुं द्रष्टुं प्रवेष्टुं सायुज्यं प्राप्तुं च शक्योहमिति ॥ ५४ ॥ अनन्ययेत्युक्त्या जातान्यत्यागभ्रांतिं निराह ॥ ॥ मत्कर्मकृदिति । अहमेव परमोयस्य सतथा । मद्भक्तमत्साज्ञानवानित्यर्थः । संगवर्जितः-फलस्नेहहीनः यः समामेतीति ॥ ५५ ॥ ॥ इतिश्रीमद्गीतार्थसंग्रहे राघवेंद्रयतिकृते विस्तरतोविश्वरूपस्थितिवर्णनं नाम एकादशोऽध्याय : ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥



ॐ ॥ देवदेव्युपासनयोर्मध्ये देवोपासनस्याधिक्याय तदुपासनमाहास्मिन्नध्याये । भगवदुपास्त्याधिक्यपरत्वादस्य भगवन्माहात्म्यपरषट्कांतर्भावश्च । "तमेवं विद्वानि"त्यादौ भगवदुपास्तेरिव "श्रियं वसाना अमृतत्वमायन्नि"त्यादिश्रुतौ श्रियं प्रत्युपासीना अमृतत्वं प्राप्ताइति श्रीदेव्युपास्तेरपि मुक्तिहेतुत्वावगमेन जायमानपरकीयसंदेहमाहृत्य विशेषयुक्तिबुभुत्सया पृच्छति ॥ ॥ एवमिति । नच देव्युपास्तेर्मुक्तिहेतुत्वमुपचरितं "अंतवत्तु फलं तेषामि"ति साप्तमिकन्यायात् अतोनास्य संदेहहेतुत्वमिति शंक्यं । ब्रह्मादिदेवानां जनिमृतिमत्त्वेन तदुपास्तेरंतवत्फलकत्वेपि श्रियस्तु "चतुष्कपर्दे"त्यादौ नित्ययौवनज्ञानमयत्वदेवपूज्यत्वादिमहामाहिम्नः श्रवणेन तदुपास्तेर्मुक्तिहेतुत्वसंभवेन संदेहहेतुत्वं मन्वानस्यायं प्रश्नः । ये भक्ताः सततयुक्ताः-सततं ध्यानकर्मयोगवंतः । एवं दृष्टश्रुतरूपं त्वां एवं "मत्कर्मकृदि"त्याद्युक्तप्रकारेण

अर्जुनउवाच । एवं सततयुक्तायेभक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥
श्रीभगवानुवाच । मय्यावेश्य मनोये मां नित्ययुक्ताउपासते । श्रद्धया परयोपेतास्ते मे युक्ततमामताः ॥२॥
येत्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥ ॥ ॥

पर्युपासते । येपि चाक्षरनामकमव्यक्तं चित्प्रकृतिं परिश्रद्धया भक्त्यादिपूर्वकमुपासते तेषां मध्ये के योगवित्तमाः मोक्षोपायज्ञेषु श्रेष्ठाः इत्युवाचार्जुनः इत्यन्वयः । एवमित्यस्य त्वामित्यत्रोपासतइत्यत्र चान्वयः । एवमित्यस्य पूर्वपरामर्शित्वात्पूर्वानंतर्यमप्यस्याध्यायस्य ध्येयं । अत्राव्यक्तमित्येव वाच्ये अक्षरमिति तद्विशेषणोक्तिः क्षरणवद्भ्योब्रह्मादिदेवांतरेभ्योवैलक्षण्यप्रदर्शनेन प्रश्नसंभावनार्था ॥ १ ॥ अव्यक्तोपासकान्मदुपासकाएवोत्तमाइत्याह ॥ ॥ मयीति । ये मयि सम्यङ् मनआवेश्य नित्ययुक्ताः नित्यं कर्मयोगध्यानयोगवत्त्वेन नित्ययुक्ताः । परया श्रद्धयोपेताश्च संतः मामुपासते ते युक्ततमाः मोक्षोपायवत्सु श्रेष्ठाः मे मताइत्यर्थः ॥ २ ॥ नन्वव्यक्तोपासकानां मोक्षाभावे "श्रियं वसाना अमृतत्वमायन्नि"त्यादिश्रुतिविरोधः । मोक्षसत्वे च कथं त्वदुपासकानामेव युक्ततमत्वं फलसाम्यादित्यतआह ॥

चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ॥ तस्यां सुपर्णावृषणा निषीदतुर्यत्र देवा दधिरे भागधेयम् ( श्रुत्यर्थस्तु अध्यायांते द्रष्टव्यम् )

॥ ॥ येत्विति । यद्वोक्तश्रुत्यादिनाऽव्यक्तोपासकानां मत्प्राप्तिरूपमोक्षसत्वेपि तदुपासनं कष्टसाध्यं । मदुपासनं न तथा अतोमदुपासकाएवो-त्तमाइत्याह ॥ ॥ येत्वित्यादिना श्लोकपंचकेन । अक्षरमविनाशिसूक्ष्मत्वात् । अनिर्देश्यं अप्रसिद्धत्वात् जगदुपादानप्रकृत्याभिमानित्वाच्चाव्य-क्तनामकं श्रीतत्वं पर्युपासते विष्णुंभक्ति विष्णूत्तमत्वज्ञानविष्णूपासनादिपूर्वकमुपासते । तद्विशिनष्टि ॥ ॥ सर्वत्रगमिति । देशतोव्याप्तं । गुणबाहुल्यादचिंत्यं । कूटस्थं-कूटे-अव्याकृताकाशे अभिमानितया स्थितं । कदापि स्वपदादभ्रष्टत्वादचलं ध्रुवं-निर्विकारमिति ॥ ३ ॥ तदुपासनायामितिकर्तव्यतामाह ॥ ॥ सन्नियम्येति । इंद्रियग्रामं-इंद्रियसमुदायं सन्नियम्य विषयेभ्यउपसंहृत्य । सर्वत्र समबुद्धयः-षष्ठाध्यायोक्तदिशा साम्यज्ञानवंतः सर्वभूतहिते रताश्च संतः पर्युपासतइत्यन्वयः । अत्राक्षरत्वादिविशेषणं मोक्षदानशक्तिद्योतनाय । ते मामेव

सन्नियम्येंद्रियग्रामं सर्वत्र समबुद्धयः । ते प्राप्नुवंति मामेव सर्वभूतहिते रताः ॥ ४ ॥ क्लेशोधिकतरस्तेषा-मव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥ ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायंतउपासते ॥ ६ ॥ ॥ ॥ ॥

प्राप्नुवंतीति ॥ ४ ॥ अव्यक्तोपासकानामपि त्वत्प्राप्तिरूपमोक्षसत्वे कथं त्वदुपासकानामुत्तमतेत्यत आह ॥ ॥ क्लेशइति । अव्यक्ते-विष्णुं विनाकृतश्रीतत्वे आसक्तचित्तानां तेषां क्लेशः अधिकतरः-अत्यंताधिकः कथमित्यतआह ॥ ॥ अव्यक्ता हीति । गतिशब्दोग-म्यतेनेनेति करणव्युत्पत्त्या मार्गपरः । अव्यक्तशब्दस्तदुपासनं लक्षयित्वा तद्द्वारकलक्षकः । अव्यक्तोपासनद्वारकोभगवत्प्राप्तिमार्गः दुःखं यथा भवति तथा देहवद्भिरवाप्यतेति । प्रागुक्तपरिशब्दार्थपूर्वकमुपासनं इंद्रियग्रामातिनियमनं षष्ठोक्तप्रकारेण सर्वत्र समबुद्धित्वं सर्वभूत-हितकरत्वं सुष्ठ्वाचारं च विना न देवीप्रसादः । तेन विना नेश्वरप्रसादः । तेन विना न तत्प्राप्तिरिति तदुपास्तिद्वारकभगवत्प्राप्तिमार्गस्य क्लेशतरत्वं ध्येयं ॥ ५ ॥ मदुपासने न तथा क्लेशइत्याह ॥ ॥ येत्विति । पूर्वस्माद्वैलक्षण्यद्योतकस्तु शब्दः । ये तु सर्वाणि कर्माणि

मयि संन्यस्य-सर्वस्वतंत्रोहरिरेव मयि स्थित्वा स्वपूजात्वेन कर्माणि स्वाधीनकर्त्रा मया कारयतीत्यनुसंधाय-समर्प्येति वा । मत्पराः अह-मेवोत्तमइति जानंतः अनन्येनैव योगेन अव्यक्तोपासनां विना कृतेन ध्यानेन-केवलमद्विषयध्यानेनापीति यावत् । मां ध्यायंतः उपासते । अत्र उपासतइत्युक्त्या पर्युपासतइत्युक्ताव्यक्तोपासनमिव नातिशायितोपासनं-अतींद्रियनियमनादिकं मत्प्रसादे नापेक्षितमिति न क्लेश-इति सूचितं । तथा न चिरादित्यनेनाव्यक्तापरोक्षे यावान् प्रयासस्तावता यदि मामुपासते तदूनेन वा तदा मदपरोक्षमेव भवतीत्यतोपि न क्लेशइति सूचितं । तेषामहं समुद्धर्ता भवामीत्यनेनेंद्रियसंयमाद्यूनभावेपि देवीवद्देवोनोपेक्षते किंतु तानि साधनानि भक्तिमतः स्वयमे-वाप्रयत्नेन ददातीति चातिसौकर्यं भक्तानां भगवदुपासने इति भावः । यद्वा"क्लेशोधिकतर"इति श्लोके अव्यक्तोपास्तिमार्गस्य क्लेशतरत्वो-

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥ ॥**

क्त्यैव सुष्ठ्वाचारादेरूनत्वेपि मत्प्रसादोभवत्येवेत्यक्लेशत्वान्मदुपास्तिमार्गएव श्रेष्ठइति तात्पर्यगत्योक्तप्रायत्वाद्व्यंतरेणापि भगवदुपास्ति-मार्गः श्रेष्ठइत्याह ॥ ॥ येत्विति । पूर्वार्धस्य प्रागिवार्थः । अनन्येनैव अन्यशब्दोलक्ष्म्याद्यन्यदेवतावाची सन् तन्निष्ठस्वातंत्र्यापरिवा-रत्वविषयकपरः सन भवतीत्यनन्यः तेन योगेन-ध्यानेन भगवदधीनतया तत्परिवारत्वेन लक्ष्मीब्रह्मादिसहितेन ध्यानयोगेनेति यावत् । ॐअंगावबद्धास्तु न शाखासु हि प्रतिवेदम्ॐ ॥ इत्यादिसूत्रात् मां ध्यायंतउपासते ॥६॥ तेषां मय्यावेशितचेतसामहं मृत्युसंसारसागरात् मृत्युरूपसंसारसमुद्रान्न चिरात्-शीघ्रं समुद्धर्ता भवामीत्यर्थः । अत्र न चिरादित्युक्त्या श्रिया सह भगवदुपासने द्वयोरपि परमप्रसादसंभवेन अचिरान्मोक्षोभवति । पृथगव्यक्तोपासनपक्षे तु पूर्वं किंचिद्भगवदुपासनं कृत्वा बहुकालं पृथक् श्रियमुपास्य पुनः श्रिया सह भगवदुपासनं

१-अ० ३ पाद ३ अ० ३६ सू० ७७ ॥ अंगतया-ईशस्यांगतया, अवबद्धाः-स्थिताः ब्रह्माद्याः उपास्याइति शेषः, तु-उपासने अस्ति विशेषः, सच-शाखासु हि प्रतिवेदं-प्रतिवेदं याः शाखाः तासूक्तं ब्रह्मादीनां उत्तमानां असाधारणधर्मादिकं रुद्रादिषु अधमादिषु न-नोपासनीयम् हि-समत्वाद्वोत्तमत्वाद्वा नांगदेवाद्युपासनम् ॥ उपसंहार्यमित्याहुर्वेदसिद्धांतवेदिनइति स्मृतिप्रसिद्धेः



तु निरंतरं कार्यं । ततोमुक्तिरिति चिरेणैव भवतीत्यतोऽचिरेण मुक्तिहेतुत्वाच्च भगवदुपासनमेवाधिकमित्युक्तं भवति । तदुक्तं । "विष्णु-ना सहिता ध्याता देवी तुष्टिं परां व्रजेदि"त्यादि ॥ ७ ॥ एवमुक्तदिशा भगवदुपास्तेरेवोत्तमत्वात्तदेव कुरु । तदशक्तौ तत्सिद्ध्यर्थं उपायांतराणि संपादयेत्याह ॥ ॥ मयीत्यादिचतुष्टयेन । मय्येव मनआधत्स्व-आधेहि मामुपास्वेति यावत् । तदलाभे मयि बुद्धिं निवे-शय-मद्विषयं ज्ञानं संपादय । अतऊर्ध्वं मत्संपत्त्यनंतरं मय्येव निवसिष्यसि-निर्दुःखानंदानुभवात्मिकां स्थितिं प्राप्स्यसि ॥८॥ अथेत्यर्थांतरे । स्थिरं यथा तथा मयि चित्तं समाधातुं न शक्नोषि । ततोमनःसमाधानाशक्तत्वात्पुनः पुनः प्रत्याहारेण भगवन्मनःसमाधानरूपाभ्यास-लक्षणोपायेन मामाप्तुं-ज्ञातुमिच्छ ॥ ९ ॥ अभ्यासेप्यशक्तोसि तदा मत्कर्मपरमः-मत्प्रीत्यर्थं-मद्विषयकर्मानुष्ठानमेव परममुत्तमं यस्य सत-

**मय्येव मनआधत्स्व मयि बुद्धिं निवेशय । निवसिष्यसि मय्येव अतऊर्ध्वं न संशयः ॥ ८ ॥ अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् । अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥९॥ अभ्यासेऽप्यसमर्थोसि मत्कर्मपरमोभव । मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥ अथैतदप्यशक्तोसि कर्तुं मद्योगमा-श्रितः । सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥ श्रेयोहि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते । ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम् ॥ १२ ॥ ॥ ॥ ॥**

था-तादृशोभव । तावता कथमिष्टसिद्धिरित्यतआह ॥ ॥ मदर्थमिति । कुर्वन्नपीत्यर्थः ॥ १० ॥ अथेति प्राग्वत् । एतदपि सर्वा-ण्यपि जपार्चनादीनि कर्माणि मदुद्देश्यकानि मत्प्रीत्यर्थकानीत्यनुष्ठानमपि कर्तुमशक्तोसि । तर्हि देवतांतरोद्देशेन कर्माणि कृत्वांते मयि-समर्पणरूपं मद्योगं मत्कर्मत्वे उपायं अंते मयि समर्पणं सर्वकर्मणां वैष्णवत्वेन करणे यउपायस्तमाश्रितोभव । ततोमद्योगात् यतात्म-वान्-नियतमनस्कः सर्वकर्मफलत्यागं कुर्वित्यर्थः । सर्वप्रकारेणापि मदुपासनमेव त्वदुपलक्षितैः सर्वैः कार्यमिति तात्पर्यार्थः ॥११॥ मयी-त्यादिनोक्तध्यानालाभे ज्ञानं तदलाभेऽभ्यासयोगइत्येतत्समर्थयते ॥ ॥ श्रेयोहीति । अज्ञानपूर्वकादभ्यासाज्ज्ञानं श्रेयः । ज्ञानमात्राज्ज्ञा-

नपूर्वकध्यानं श्रेयः । तस्माद्ध्यानाज्ज्ञानपूर्वकसकामध्यानादित्यर्थः कर्मफलत्यागः श्रेयान् । एतादृशसकामध्यानात्कर्मफलत्यागोपलक्षित-तादृशनिष्कामध्यानं श्रेयइति योज्यं । फलत्यागात्-कर्मफलत्यागोपलक्षितनिष्कामध्यानादित्यर्थः । अपरोक्षज्ञानं श्रेयइति योज्यं । अनंतरं शांतिर्मोक्षइत्यर्थः ॥ १२॥ ये तु सर्वाणिकर्माणीत्युक्तं तदुपलक्षितधर्मांतरोक्त्या प्रपंचयति ॥ ॥ अद्वेष्टेत्यादिना । अद्वेष्टा-अप्रियमकुर्वन् । क्लेशस्थानं निरूप्य ततोरक्षिता मैत्रः । करुणः-कृपावान् । निर्ममः-ममेदमिति स्वातंत्र्यबुद्धिहीनः । निरहंकारः-अविद्यमानात्मगुणाभिमानमोहहीनः । हेयतया दुःखसमं वैषयिकसुखं यस्य ससमदुःखसुखः । क्षमी-सहिष्णुः ॥ १३ ॥ संतुष्टः-अलंबुद्धिमान् । योगी-कर्मध्यानरूपज्ञानोपायवान् । यतात्मा-विषयेभ्यउपसंहृतचित्तः दृढनिश्चयः-अप्रामाण्यशंकाशून्यतत्वनिश्चयवान् । मय्यर्पिते मनोबुद्धी यस्य सतथो-

अद्वेष्टा सर्वभूतानां मैत्रः करुणएव च । निर्ममोनिरहंकारः समदुःखसुखःक्षमी ॥ १३ ॥ संतुष्टः सततं योगी यतात्मा दृढनिश्चयः । मय्यर्पितमनोबुद्धिर्योमद्भक्तः समे प्रियः ॥१४॥ यस्मान्नोद्विजते लोकोलोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैर्मुक्तोयः सच मे प्रियः ॥ १५ ॥ अनपेक्षः शुचिर्दक्ष उदासीनोगतव्यथः । सर्वारंभपरित्यागी योमद्भक्तः समे प्रियः ॥ १६ ॥ ॥ ॥ ॥ ॥

क्तः ॥ १४ ॥ किंच यस्माल्लोकोनोद्विजते- न बिभेति-लोकस्यभयहेतुर्योन भवति । यश्च सर्वमीशाधीनं बुद्ध्वा लोकाज्जनात् नोद्विजते । यश्च हर्षामर्षभयोद्वेगैः । हर्षोनाम-मदादधर्माय मनःप्रवृत्तिः । अमर्षोरोषः । उद्वेगोमनःकंपविशेषः तैर्मुक्तोहीनः । सचेत्यत्र भक्तइत्यनुषज्जते । मे प्रियः ॥ १५ ॥ किंच अनपेक्षः-भगवत्प्रीत्यन्यत्र क्वाप्यपेक्षाहीनः । शुचिः-बाह्यांतरशुद्धिमान् । दक्षः-भगवत्कर्मकरणे पटुः । उदासीनः-कर्तव्योपकारापकारयोरुपेक्षकः । गतव्यथः-परकृतापकारैरप्राप्तमनःक्लेशः । सर्वारंभपरित्यागीत्यस्य अवैष्णवसर्वारंभत्यागीति, सर्वारंभाभिमानत्यागी सर्वारंभफलत्यागी--भगवति सर्वारंभसमर्पणरूपत्यागवानिति चतुर्धार्थः ॥ १६ ॥

हर्षामर्षभयोद्वेगैर्मुक्तइत्युक्ते निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालांतरे हर्षादिमानिति शंका स्यात् । तन्निरासाय तद्व्यनक्ति । "योन हृष्यती"त्यादिना । "नानद्यतनवत्क्रियाप्रबंधसामीप्ययोरिति" सूत्रेण क्रियासातत्यरूपाक्रियाप्रबंधे विहितलट्प्रत्ययांतत्वेन हृष्यतीत्यादेर्यावज्जीवं हृष्यतीत्यादिरर्थः । न हृष्यति न द्वेष्टीत्यादिरूपेण नञ्संबंधे सति कदापि न हृष्यतीत्यादिरर्थोभवतीति भावः । उदाहृतं च वृत्तौ तार्तीयतृतीयपादे । "यावज्जीवमन्नमदादि" त्यादि । सर्वारंभपरित्यागीति सामान्यतउक्तं । विशिष्योक्त्या व्यनक्ति ॥ ॥ शुभाशुभेति । ज्ञानभक्तिवैराग्याद्यन्यशुभत्यागीत्यर्थः । अतएव तदन्यन्न कांक्षतीत्यर्थो न कांक्षतीत्यस्य ज्ञेयः । एवं लोकान्नोद्विजतइत्यस्यापि हर्षामर्षभयमुक्तइत्यनेनापौनरुक्त्यं ध्येयं । उक्तशंकानिरासार्थत्वादिति ॥ १७ ॥ किंच "समः शत्रौ च

योन हृष्यति न द्वेष्टि न शोचति न कांक्षति । शुभाशुभपरित्यागी भक्तिमान्यः समे प्रियः ॥ १७ ॥ समः शत्रौ च मित्रे च तथा मानापमानयोः । शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ १८ ॥ तुल्यनिंदास्तुतिर्मौनी संतुष्टोयेनकेनचित् । अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियोनरः ॥ १९ ॥ ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते । श्रद्दधानामत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥ ॥ ॥



मित्रे चे"त्यादि पूर्वं समदुःसुखइति सामान्येनोक्तं तद्विशिष्योक्त्या व्यनक्ति । शीतोष्णेत्यादि । शीतोष्णादिविषयजन्यसुखदुःखेषु समः-उत्सेकानुत्सेकहीनः संगविवर्जितः-फलस्नेहहीनः ॥ १८ ॥ किंच तुल्यनिंदास्तुतिः-हेयत्वेन निंदायाः तुल्यास्तुतिर्यस्यस तथा । अनिकेतः- अनियतवासः । अकारवाच्यभगवदाश्रयोवा । स्थिरमतिः-कुतर्कैरचंचलज्ञानः । योमद्भक्तः भाक्तिमानिति भक्तेर्बहुवारोक्तिरद्वेष्टेत्यादिनोक्तेषु भक्तेराधिक्यज्ञापनाय । अत्र सुखादिषु साम्यं हर्षादिराहित्यं च प्रायेणेति ज्ञेयं । प्रायः-सुखादिषु समः "प्रायोहर्षादिवर्जित"इत्यादेः। संतुष्टः "सततमि"त्यस्य "संतुष्टोयेन केन चिदि"त्येतव्द्याख्यानरूपमित्यपौनरुक्त्यं ॥ १९ ॥ अद्वेष्टा सर्वभूतानामित्यादा-

वद्वेषादिकं यत्पृथक् प्रीतिमात्रसाधनमुक्तं । "समे प्रियः सचमे प्रियः" इत्यादिना तत्सर्वं मिलितं यत्रास्ति सतु मेत्यंतं प्रियइति प्रागुक्तं पिंडीकृत्योपसंहरति ॥ ॥ येत्विति । धर्म्यामृतं धारकत्वाद्धर्मोविष्णुस्तदुपासनांगत्वादुपचारेण धर्मसाधनं धर्म्यं । अमृतशब्दितमुक्तिसाधनममृतं । धर्म्यंच तदमृतंच धर्म्यामृतं । यथोक्तमद्वेष्टेत्यादिनोक्तमद्वेष्टादिकं प्रीतिसाधनं समस्तं । श्रद्दधानाः-आस्तिक्यवंतः । मत्पर-

ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे देवोपासनस्य अव्यक्तोपासनापेक्षया आधिक्यवर्णनं ( भक्तियोगो ) नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥

माः-मदुत्तमताज्ञानिनः संतोये पर्युपासते सम्यगनुतिष्ठंति ते भक्ताः अतीव मे प्रियाः इत्यर्थः ॥ २० ॥ श्रीमद्गीतार्थसंग्रहे श्रीमद्राघवेंद्रयतिकृते देवदेव्युपासनयोर्मध्ये देवोपासनस्य आधिक्यवर्णनं ( भक्तियोगो ) नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥

प्रथमश्लोकटीकास्थ "चतुष्कपर्दे"त्यस्य व्याख्या-चत्वारः-पूर्वापरदक्षिणोत्तराः कपर्दाः-वेणीबंधाः यस्याः सा, युवतिः-तरुणी, सुपेशा-सुरूपा, घृतप्रतीका-प्रदीप्तावयवा वयुनानि-प्रशस्तांवराभरणानि, वस्ते धारयति, तस्यां-श्रीदेव्यां, वृषणो-भक्तकामवर्षिणो, सुपर्णौ-गरुडशेषरुद्राः ब्रह्मवायूचउभौ, निषीदतुः-आश्रितवन्तौ, यत्र-श्रीमहालक्ष्म्यां देवाः-ब्रह्मरुद्रादयः, भागधेयं-स्वस्वभाग्यं दधिरे-निदधुः-यदधीनमिति मेनिरे,





पूर्वषट्कद्वयोक्तार्थसंग्रहपरोयमध्यायः । तथाहि । यत्प्रथमषट्के"त्रैगुण्यविषयावेदा"इत्यादिना प्राचुर्येण ज्ञानसाधनमाषष्ठसमाप्तेरुक्तं । यच्च तत्र द्वितीयेऽध्याये"नत्वेवाहमि"त्यादिनाऽनादेनित्यत्वादिना जीवस्वरूपमुक्तं । यच्च द्वितीयषट्के भगवत्स्वरूपमुक्तं । यदपि सप्तमे भूमिरापइत्यादिना क्षेत्रशब्दितं भगवदावासस्थानमुक्तं । तद्विकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं संक्षिप्यास्मिन्नध्याये प्रश्नपूर्वकं प्रदश्यते ॥ ॥ प्रकृतिमित्यादिना । पुरुषं-जीवं । ज्ञानं-ज्ञानसाधनं ॥ १ ॥ ननु भगवत्स्वरूपज्ञानस्यैव पूर्वोक्तदिशा मुक्तिहेतुत्वात्तत्स्वरूपोक्तिर्युक्ता । क्षेत्रस्वरूपं महाभूतानीत्यादिना किमर्थमत्रोच्यतइति चेन्न । क्षेत्रज्ञत्वविशिष्टभगवज्ज्ञानोपयोगित्वात्क्षेत्रोक्तिरिति क्षेत्रोद्देशपूर्वं भगवतः क्षेत्रज्ञत्वमाह ॥ ॥ इदमिति । कौंतेय इदं शरीरं--अव्यक्तमहदहंकारादिकं

अर्जुनउवाच । प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च । एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥१॥ श्रीभगवानुवाच । इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते । एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥ २ ॥ क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत । क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ३ ॥ ॥

भगवदावासस्थानत्वात् क्षीयते-स्थीयतेऽत्र भगवतेति व्युत्पत्त्या क्षेत्रमित्यभिधीयते । एतदव्यक्तादिकं क्षेत्रशब्दितं योवेत्ति-जानाति तं तद्विदः-क्षेत्रविदः क्षेत्रज्ञमितिप्राहुरित्यर्थः । शरीरशब्दस्याव्यक्तादिपरत्वं च स्वपरिणामदेहादिवियोगद्वारा जीवस्य हिंसादिहेतुत्वात् शर"शॄहिंसायामि"ति धातोः भगवता प्रेर्यत्वादीरं च । ईरप्रेरण इति धातोः । शरच तदीरंचेति शरीरमिति व्युत्पत्तेरिति ज्ञेयं । तेन संघातश्चेतनेति संघातपदेन क्षेत्रविकारेष्वेकदेशत्वेनोक्तशरीरस्य कथं समस्तक्षेत्रत्वमुच्यतइति शंका निरस्ता ॥ २ ॥ जीवस्यापि किंचित्क्षेत्रज्ञानात्सर्किं क्षेत्रज्ञइत्यतआह ॥ ॥ क्षेत्रज्ञंचेति । सर्वक्षेत्रेष्वव्यक्तादिषु क्षेत्रज्ञं तु मां विद्धि न जीवं । क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं तज्ज्ञानं मम सम्यग्ज्ञानं मतमित्यर्थः । अत्र सर्वक्षेत्रेष्वित्युक्तिरिदं शरीरमित्यत्र शरीरपदोक्ताव्यक्तादेः क्षीयतेऽत्रेश्वरेणेति व्युत्पत्त्या क्षेत्र-

पदवाच्यत्वमिति सूचनाय ॥ ३ ॥ क्षेत्रादिस्वरूपं वक्तुं प्रतिजानीते ॥ ॥ तत्क्षेत्रमिति । तत्क्षेत्रं यद्भगवन्निवासस्थानतया क्षेत्रपदोक्तं । देहद्वारा जीवहिंसाहेतुतया ईश्वरप्रेर्यत्वहेतुना च शरीरपदेन प्रकृतं अव्यक्तादि । यच्च-यत्स्वरूपं यादृक्-यत्प्रकारं यद्विकारि कर्मधारयात् मतुप् । येन विकारेण (सं)युक्तं । यतः-यादृशप्रवृत्त्यनुकूलधर्मयुक्तात्पुरुषात् । यत् इणः शत्रंतं रूपं गतिमत् प्रवर्ततइति यावत् । सच प्रवर्तकः यः-यत्स्वरूपः-यत्प्रभावः यादृशप्रवृत्त्यनुकूलधर्मेतरसामर्थ्यवान्तत्सर्वं समासेन-संक्षेपेण मे सकाशाच्छृणु-श्रुत्वा निष्ठां कुरु ॥ ॥ ४ ॥ श्रोतृविश्वासजननायोच्यमानं प्रामाणिकमित्याह ॥ ॥ ऋषिभिरिति । तदित्यनुषज्यते । यच्छृण्वित्युक्तं क्षेत्रादिस्वरूपं तदृषिभिर्बहुधा गीतं-"गै शब्दे" । उक्तमित्यर्थः । विविधैः छंदोभिर्वेदैः । प्रत्येकं गीतमिति सर्वत्रानुषज्यते ।

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् । सच योयत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥ ऋषिभिर्बहुधा गीतं छंदोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम् ॥५ ॥ महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इंद्रियाणि दशैकं च पंच चेंद्रियगोचराः ॥६॥ इच्छा द्वेषः सुखंदुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७ ॥ ॥ ॥ ॥ ॥**

हेतुमद्भिः-न्यायोपेतैः ब्रह्मसूत्रपदैश्च विनिश्चितमेव शृण्वित्यन्वयः ॥ ५ ॥ क्षेत्रं यच्च यादृक् च तच्छृण्विति प्रतिज्ञातमाह ॥ ॥ महाभूतानीति । पंचमहाभूतानि । महत्तत्वमप्यहंकारशब्देन गृह्यते । बुद्धिरंतःकरणवृत्तिविशेषः । अव्यक्तं-त्रिगुणात्मकं प्रधानं । "इंद्रियाणि दशैकं चे"ति ज्ञानेंद्रियमनोभेदेनैकादशेंद्रियाणि । इंद्रियगोचराः- श्रोत्रादिविषयाः शब्दाद्याः पंच च । एतत्क्षेत्रं समासेन-संक्षेपेण महाभूतत्वादिप्रकारोपेतमुदाहृतमित्यन्वयः ॥ ६ ॥ क्षेत्रं यद्विकारीति प्रतिज्ञातक्षेत्रविकारानाह ॥ ॥ इच्छेति । संघातोदेहः । चेतना-चेतसोऽव्याप्तिः । धृतिर्धैर्यं । एतत्प्रागुक्तं क्षेत्रं इच्छादिविकारोपेतं संक्षेपेणोक्तमित्यर्थः।

कर्मेंद्रिय

महाभूतादिक्षेत्राभिमानिनः तद्विकारेच्छाद्यभिमानिनश्चावश्यं ज्ञेयत्वादुच्यंते । आकाशाभिमानी-विघ्नेशः । वायुमानी-मुख्यवायुजो-अभिमानी मरीचिनामा । अग्निमानी वन्हिः । अबभिमानी वरुणः । भूमिमानिनी धरादेवी । अहंकारः-शिवः-महान्ब्रह्मा । बुद्धिरुमा । अव्यक्तं-श्रीदेवी । इंद्रियेषु मनोभिमानिनः स्कंदेंद्रानिरुद्धाः । श्रोत्रं-चंद्रः । त्वक्-वायुसुतोमरुत् । चक्षुः-सूर्यः । जिव्हा वरुणस्य रूपांतरं । घ्राणमश्विनौ । वागग्निः । हस्तौ-वायुसुतौ मरुतौ । पादौ तु विष्णुनाविष्टौ शचीसुतौ यज्ञशंभुनामकौ । पायुर्यमः । उपस्थः शिवः मनुश्च । इंद्रियगोचरेषु शब्दस्पर्शरूपरसगंधाभिमानिनः शिवपुत्राः पंच ज्ञेयाः विकारेषु इच्छा श्रीर्भारती च द्वेषदुःखाभिमानिनौ कलिद्वापरौ । सुखं-मुख्यवायुः । धृतिः-सरस्वतीभारती च । चेतना-श्रीः । संघातमानिनोन्ये चेतनाः ज्ञेयाः । अभिमानिनां प्रागुक्तव्युत्पत्त्या भगवन्निवासत्वादेव क्षेत्रनामत्वं । क्षेत्रविकारित्वमपि महदादिभ्योतिशयेन विकारितया स्थितत्वादिति ज्ञेयं ॥ ७ ॥ एवं प्रतिज्ञातार्थषट्कमध्ये यच्च यादृक्च

अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवम् । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८ ॥ इंद्रियार्थेषु वैराग्यमनहंकारएव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ९ ॥ ॥ ॥ ॥

यद्विकारीति त्रयमुक्त्वा यतश्च यदिति अग्रे वक्ष्यन् ततः प्राक् सच योयत्प्रभावश्चेति प्रतिज्ञातार्थद्वयं "ज्ञेयं यत्तदि"त्यादिना वक्तुं न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीति भावेन वक्ष्यामाणज्ञेयद्वयभूतभगवज्ज्ञानस्य साधनान्याह । अमानित्वमित्यादिपंचकेन । अमानित्वमात्मनः श्लाघनराहित्यं । आत्मालपत्वं ज्ञात्वापि महत्वप्रदर्शनं दंभः तद्राहित्यंमदंभित्वं । क्षांतिः-सहिष्णुत्वं । आर्जवं-सन्मार्गे मनोवाक्कायकर्मणामवैपरीत्यं । आचार्योपासनं-ज्ञानिनां सेवा । शौचं-बाह्यांतरशुद्धिः । "शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यंतरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथांतरमि"ति स्मृतेः । स्थैर्यं-भयादिना स्वधर्मादचलनं । आत्मविनिग्रहः-विशेषेण मनसोनियमनं ॥ ८ ॥ इंद्रियार्थेषु वैराग्यं-शब्दादिषु रागाभावः । अनहंकारः-अविद्यमानात्मगुणाभिमानमोहाभावः जन्मादिषु दुःखदोषयोरनुदर्शनमिति वा दुः

वः स्वरूपस्य दोषस्यानुदर्शनमिति वा । अनुक्षणमनुसंधानमित्यर्थः ॥ ९ ॥ पुत्रदारगृहादिषु असक्तिः-स्नेहाभावः । अनभिष्वंगः-अतिपक्कस्नेहाभावः । इष्टानिष्टोपपत्तिषु-उपपत्ति-प्राप्तिः तत्र नित्यं समचित्तत्वं-हर्षविषादयोरभावः ॥ १० ॥ अनन्ययोगेन-रमाब्रह्मादिस्वातंत्र्यासंबंधेन तद्विषयिणीति यावत् । अतएवाव्यभिचारिणी मयि भक्तिः । विविक्तदेशसेवित्वं-जनसंमर्दहीनशुद्धस्थानस्थितिः ॥ ॥ ११ ॥ अध्यात्मज्ञाननित्यत्वं-परमात्मानमधिकृत्य स्थिते ज्ञाने निरतत्वं । तत्वज्ञानार्थदर्शनं-अपरोक्षज्ञानार्थं शास्त्रपर्यालोचनं । एतदमानित्वमित्यादिनोक्तं विंशतिधर्मजातं ज्ञानमिति-ज्ञायतेनेनेति करणव्युत्पत्त्या ज्ञानसाधनं प्रोक्तं । अतोन्यथा यदस्ति तदज्ञानं ज्ञानसाधनं नेत्यर्थः । यद्वा ज्ञानशब्दः-भावव्युत्पत्त्या संवित्परश्च । तत्वज्ञानार्थस्य-तत्वज्ञानविषयस्य विष्णोर्दर्शनं-अपरोक्षज्ञानमित्यर्थः । एतद्भ-

**असक्तिरनभिष्वंगः पुत्रदारगृहादिषु । नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ १० ॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ११ ॥ अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनम् । एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ १२ ॥ ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३ ॥ ॥ ॥ ॥ ॥**

गवद्विषयापरोक्षज्ञानं ज्ञानमिति प्रोक्तं । अतोन्यथा यत तज्ज्ञानं न भवतीति इह ज्ञानशब्दोज्ञानतत्साधनोभयपरः । तत्वज्ञानार्थदर्शनमित्येतदप्युक्तदिशा शास्त्रपर्यालोचनरूपज्ञानसाधनपरः अपरोक्षज्ञानपरश्च । ततश्चैतच्छब्देनोभयं परामृश्य ज्ञानशब्देन भावकरणोभयव्युत्पत्त्या ज्ञानसाधनतत्वज्ञानत्वयोर्विधानं युक्तमिति ज्ञेयं ॥ १२ ॥ एवं ज्ञानं ज्ञानसाधनं चोक्त्वाऽधुना "सच योयत्प्रभावश्चेति" प्रतिज्ञातज्ञेयस्वरूपं तत्प्रभावं च प्रतिज्ञापूर्वमाह ॥ ॥ ज्ञेयमित्यादिना । आदरजननाय तज्ज्ञानस्य फलमाह ॥ ॥ यज्ज्ञात्वेति । सचय'इति प्रतिज्ञातज्ञेयस्वरूपोक्तिः परंब्रह्मेति । नामोक्त्या तत्स्वरूपस्यावगतेः अहमेवेति वक्तव्ये "अक्षरं ब्रह्मपरमम्" ति अष्टमो-



क्तदिशा ब्रह्म स्वयमेवेति सिद्धमिति भावः । सच यत्प्रभावइत्युक्तमाह ॥ ॥ अनादिमदित्यादिना । आदिरेषामस्तीत्यादिमंति देहेंद्रियादीनि । ततोबहुव्रीहिः । प्राकृतदेहेंद्रियगुणकर्मादिहीनमित्यर्थः । भगवान्क्षेत्रांतर्गतोभूत्वा क्षेत्रज्ञइत्युच्यते किमित्यतोनेत्याह ॥ ॥ नेति । तद्ब्रह्म सत्-व्यक्तशब्दितकार्यजातांतर्गतं नेत्युच्यते । असदव्यक्तशब्दितकारणांतर्गतं नेत्युच्यते । "व्यक्ताव्यक्तविलक्षण"इति स्मृतेः । यद्वा"मूर्तामूर्तव्यतीतत्वा"न सत्तन्नासदुच्यते"इति स्मृत्युक्तदिशा मूर्तंचामूर्तं च नेत्युच्यतइति "नेति नेती"त्यादिश्रुतावित्यर्थः ॥ ॥ १३ ॥ पुनस्तत्प्रभावमाह ॥ ॥ सर्वतइति । कथं जगद्वैलक्षण्यं हरेरित्यतोवाह ॥ ॥ सर्वतइति । तत्प्रागुक्तं परंब्रह्म सर्वतः-सर्वावयवेषु पाणिपादं द्वंद्वैकवद्भावः प्राण्यंगत्वात् । तेन तच्छक्तिर्लक्ष्यते । पाणिपादादिशक्तिमन्तःसर्वेप्यवयवाः स्वस्वेतरावयवशक्तिमंतइत्यर्थः । शुक्लकृष्णकेशावतारयोर्बलरामकृष्णयोः पाणिपादादिशक्तेर्दर्शनात् । एवं सर्वतः-सर्वावयवेषु चक्षुरादिशक्तिमदित्यर्थः । सर्वतः-सर्वावयवेषु

**सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४ ॥ सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् । असक्तं सर्वभृच्चैव ( भृच्चैव ) निर्गुणं गुणभोक्तृ च ॥ १५ ॥ बहिरंतश्च भूतानामचरं चरमेव च । सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ॥ १६ ॥ ॥ ॥ ॥**

श्रुतिमत्-श्रोत्रेंद्रियशक्तिमत् । सर्वेंद्रियाणां विषयान्कर्माणि च सर्वैरिंद्रियैः वेत्ति-करोतीति यावत् । लोके-जगति सर्वं वस्तु आवृत्य तिष्ठति व्याप्य वर्तते । यद्वा सर्वतः-सर्वत्र देशे स्थितं तद्ब्रह्म पाणिपादाक्षिशिरःप्रभृत्यवयवोपेतं सत् लोके सर्वं वस्तु व्याप्य तिष्ठति इति । अपौरुषेयैः पाणिपाद्यवयवोपेतैः अनंतरूपैः सर्वत्र स्थितं सत व्याप्तरूपेण च सर्वमपि व्याप्य वर्तते ब्रह्मेति भावः ॥ १४ ॥ किंच सर्वेंद्रियगुणाभासं-तद्ब्रह्म सर्वाणींद्रियाणि गुणान् शब्दादिविषयांश्चाभासयति-प्रत्याययति प्रत्येति वा सर्वेंद्रियगुणाभासं-"भासृदीप्तौ"इत्यतः पचाद्यच् । प्राकृतानां भिन्नानां चेंद्रियाणामभावात्सर्वेंद्रियविवर्जितं । असक्तं-निर्लेपं । सर्वं भुंक्तइति सर्वभुक् । सर्वसंहर्तृइति वा सर्वसारभोक्तृइति वार्थः । सर्वभृच्चेति पाठांतरं । गुणभोक्तृच-सर्वकल्याणगुणभोक्तृ चेत्यर्थः ॥ १५ ॥ किंच भूतानां-सर्वप्राणिनां बहिरंतश्च पं-

ब्रह्म तिष्ठतीत्यनुषज्जते । अन्यथाभावराहित्यादचरं । सर्वदेशेषु चरणाद्गमनाच्चरं । सूक्ष्मत्वादप्रतिघातत्वात्तद्ब्रह्माविज्ञेयं आग्राह्यमिंद्रिया-विषयः सर्वगतत्वाद्दूरे अंतिके-समीपे च स्थितं तत् ॥ १६ ॥ किंच भूतेषु नानाविधप्राणिष्वविभक्तमेव विभक्तमिव स्थितं । अज्ञानां तथा प्रतीतमिति यावत् । भूतभर्तृ-भूतानां भर्तृ धारणपोषणकर्तृ तद्ब्रह्म ज्ञेयं । ग्रसिष्णु-प्रलये सर्वभक्षकं । प्रभविष्णु-सृष्टिकाले सर्वोत्पादकं च ॥ १७ ॥ किंच तद्ब्रह्म ज्योतिषां-सूर्यादीनामपि ज्योतिः-प्रकाशशक्तिप्रदं । तमसः अव्यक्तान्मृत्योः अज्ञानाद्वा परमतिक्रांतं उच्यते । "तमसःपरस्तादि"ति श्रुत्यादावित्यर्थः । ज्ञानं-प्रकाशस्वरूपं । ज्ञेयं स्वेन ज्ञातव्यरूपं स्वप्रकाशमित्यर्थः । जीवानां स्वप्रकाश-

अविभक्तं विभक्तेषु विभक्तमिव च स्थितम् । भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१७॥ ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते । ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १८ ॥

त्वेपि तस्येशाधीनत्वात् । अस्य चान्यानपेक्षत्वात् । स्वकर्मकत्वस्य ( क्रियात्वकर्मत्वयोरेकत्र विरोधेन ) दुर्घटत्वाच्च तदुक्तिर्भगवतोमहिमेति यत्प्रभावइत्यस्योत्तरं भवतीति भावः । ज्ञानगम्यमपरोक्षज्ञानेन मुक्तौ प्राप्यं । सर्वस्य हृदि विष्ठितं-विशेषेण स्थितं । सर्वगतत्वेन दूरस्थमंतिके च तत्सर्वमावृत्य तिष्ठतीत्युक्तावपि हृद्यल्पदेशे स्थित्युक्तिर्युक्ता । ॐ[1] अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च ॐइति । ॐ[2] अन्यभावव्यावृत्तेश्च ॐ इत्यादिसूत्रेणाणुरूपेणावस्थितेरुक्तत्वात् । अतएव चरमित्युक्तिरप्युपपन्नेति भावः ॥१८॥

---

१–अ० १ पाद २–अ० १–सू० ७–अर्भकौकस्त्वात्-"सर्वेषु भूतेष्वि"ति ब्रह्मणः सर्वप्राणिगुहास्थत्वरूप अल्पस्थानत्वस्य, आदित्यश्रुत्या चक्षुर्मयत्वादिलिंगेनच जीवव्यपदेशाच्च, विष्णुःसर्वगतः न इतिचेन्न । निचाय्यत्वादेवं-"अल्पस्थानस्थत्वस्य, चक्षुर्मयत्वादिना"तस्यैव विष्णोः उपास्यत्वात्, "अर्भकौकस्त्वत्कोक्तिः न व्यर्था," व्योमवत् "सर्वगतत्वेपि अल्पौकस्त्वंव्योमवत्, युज्यते. २–अ० १ पाद ३–सू १२ ॥ अन्येषु-वस्तुषु, भावानां-स्थौल्याणुत्वादिधर्माणां, व्यावृत्तेः-"अस्थूलमनण्वित्यादिना"व्यावृत्त्युक्तेश्च अक्षरं ब्रह्मैवेत्यर्थः

उक्तमुपसंहृत्य तज्ज्ञानं स्तौति ॥ ॥ इतिक्षेत्रमिति । महाभूतानीत्यादिना क्षेत्रं । इच्छेत्यादिना तद्विकाराश्चेत्यपि ग्राह्यं । ज्ञानशब्दोऽत्र ज्ञप्तितत्साधनोभयपरः । अमानित्वमित्यादिना ज्ञानसाधनस्य तत्वज्ञानार्थदर्शनमित्यत्र भगवदपरोक्षज्ञप्तेश्चोक्तत्वात् । ज्ञेयं यत्तदित्यादिना ज्ञेयं चोक्तं समासतः-संक्षेपेण । मद्भावाय-मयि स्थितये उपपद्यते-योग्योभवति। यद्यप्यत्र ज्ञेये-ब्रह्मणि प्रतिपादिते केन साधनेनेदं बुद्ध्यारूढं भवेदित्याकांक्षायां ज्ञेयमित्यादिकं पूर्वमुक्त्वा अमानित्वमित्यादिकं तज्ज्ञानसाधनं पश्चाद्वाच्यं । तथापि साधनस्येच्छादिरूपक्षेत्रविकारेष्वंतर्भावज्ञापनार्थत्वात् * यत्प्रभावपदोक्तप्रेरकत्वस्यालौकिकप्रमेयस्य बुद्ध्यारोहे साधनानामप्युपयोगाच्च साधनानंतरमेव यत्प्रभावश्चेत्यस्य वाच्यत्वात् तत्प्रसंगेन ज्ञेयस्यापि पश्चादेवोक्तिः । नन्वथापि उद्देशक्रमानुसारेण "यतश्च यदि"त्येतत्प्रथममुक्त्वा "सच योयत्प्रभावश्चे"त्येतत्पश्चाद्वक्तव्यमित्येतदप्यनेनैव निरस्तम् । विकारांतर्भावज्ञापनायेच्छाद्युक्त्यनंतरममानित्वादेर्ज्ञानसाधनस्योपोद्घातप्रक्रियया

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः । मद्भक्तएतद्विज्ञाय मद्भावायोपपद्यते ॥ १९ ॥ प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ २० ॥ ॥ ॥

पूर्वमेव वाच्यत्वेन तदनंतरमेवोक्तदिशा "सच योयत्प्रभावश्चे"त्युक्तस्य वाच्यत्वात् । बहुत्वाच्च "सच योयत्प्रभावश्चे"त्येतदुक्त्यपेक्षया "यतश्च यदि"त्येतदुक्तेरल्पत्वात्तत्सर्वोक्त्यनंतरं पश्चा "यतश्चयदि"त्यस्योक्तिः ॥ १९ ॥ एवमुक्तदिशा यतश्च यदिति प्रतिज्ञातं प्रेरकस्वरूपस्य प्रभावोक्त्यनंतरं वाच्यत्वासिद्धौ प्रेरकज्ञानस्य प्रेर्यज्ञानसापेक्षत्वात्प्रेरणीयं सप्रकारं पुरुषादिरूपं क्षेत्रं तावदाह ॥ ॥ प्रकृतिमिति । नचैतत्क्षेत्रमिति श्लोकेन प्रतिज्ञातमिति शंक्यं । "यादृक्चे"त्यनेन प्रतिज्ञातत्वात् । तर्हि महाभूतानीत्याद्युक्त्यवसरे प्रागेव वाच्यमिति न शंक्यं । वक्ष्यमाणप्रेरकस्वरूपोक्त्युपयोगितयाऽपेक्षितप्रेर्यस्वरूपस्यात्रावश्यं वाच्यत्वात्प्राग्प्युक्तौ गौरवापत्तेरिति भावः । एवं च प्रकृतिपदेन महाभूतानीत्यादिना प्रागुक्तपंचविंशतितत्वानि गृह्यंते । विकारशब्देन च प्रागुक्तेच्छादयः सर्वे प्रकृतिविकाराः गुणत्रयस्या-

ल्पविवक्षया पृथगुपादानं । पुरुषोत्र-जीवः । प्रकृतिं-पंचविंशतितत्वानि पुरुषं-जीवं च उभावप्यनादी विद्धि । तथा प्रकृतिसंभवान्प्रधानोपादानकानिच्छादिविकारान्सत्वादिगुणांश्च विद्धीत्यर्थः । तथाचेश्वरातिरिक्तः सर्वोपि चेतनाचेतनवर्गः प्रेर्यप्रपंचोत्रोक्तोभवति । यद्वा प्रकृतिं-चिदचित्प्रकृती पुरुषं-जीवं परमात्मानं च उभौ-उभे चेत्यपि संगृह्यते अनादी विद्धीत्यर्थः । विकारानिच्छादीन्सत्वादिगुणांश्च प्रकृतिसंभवान् प्रकृत्युपादानकान्विद्धि।गुणानां विकारत्वेपीच्छाद्यपेक्षयाल्पविकारत्वादिच्छादीनामधिकारत्वविवक्षया पृथगुक्ताः ज्ञेयाः । तात्पर्ये तु प्रकृतिपदेन जीवेश्वरयोर्ग्रहणायोभावित्युक्तिरित्युक्तं ॥ २० ॥ प्रकृतिसंभवत्वं विकाराणां व्यनक्ति ॥ ॥ कार्येति । कार्यं-शरीरं । कारणानींद्रियाणि । जीवस्य यद्देहेंद्रियकर्तृत्वं तत्र कारणं चित्प्रकृतिरुच्यते । सुखदुःखानां भोक्तृत्वे जीवस्य प्रकृतिविकारसुखदुःखानां स्वीयतया साक्षात्काररूपे भोगे पुरुषो-भगवान् हेतुरुच्यते । अत्र हरेः सर्वहेतुत्वेन जीवगतदेहेंद्रियकर्तृत्वहेतुत्वसत्वेपि । तथा देव्याः जीवानां सुखदुःखभोग-

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१ ॥ पुरुषः प्रकृतिस्थोहि भुंक्ते प्रकृतिजान् गुणान् । कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥ २२ ॥ ॥ ॥**

दानहेतुत्वसत्वेपि । देव्याः सुखदुःखभोगदाने प्रवृत्तिरल्पा । कार्यकारणकर्तृत्वे भोगदानप्रवृत्त्यपेक्षयाधिका । अतः कार्यकारणकर्तृत्वे प्रकृतिर्हेतुरिति । पुरुषस्तु सुखदुःखभोगदानहेतुरिति विशिष्योक्तिर्युक्ता । अतएव पूर्वार्धपरार्धयोरुच्यतइति द्विवारमुक्तिः । यद्वा कार्यकारणकर्तृत्वे देहेंद्रियाणां परिणामक्रियायां प्रकृतिः- प्रधानं हेतुरुच्यते पुरुषो-जीवः सुखदुःखानां भोक्तृत्वे-अनुभवे हेतुः-कर्तोच्यते इत्यर्थः ॥ २१ ॥ ननु प्रकृतिकृतदेहेंद्रियसंबंधेन सुखदुःखादिभोक्ता जीवस्तन्नियामिके देवदेव्याविति यत्तदयुक्तं । देहादिसंबंधादेर्मिथ्यात्वादित्यतआह ॥ ॥ पुरुषइति । पुरुषो-जीवः प्रकृतिस्थः-प्रकृतिकार्यदेहादौ स्थितः प्रकृतिजान् गुणान् सुखादीन् भुङ्क्ते हीति निर्बाधानुभवसिद्धत्वं सूचयति । तेन तद्विरोधान्न मिथ्यात्वं सुखादेरित्युक्तं भवति । एतेन कार्यकारणकर्तृत्वइत्यत्र जीवदेहस्थत्वस्य



भोक्तृत्वे सुखदुःखानामित्यत्र सुखादिभोगस्योक्तेस्ताभ्यामस्य पौनरुक्त्यमिति निरस्तं । मिथ्यात्वनिरासाय साक्ष्यनुभवविरोधं मिथ्यावादिनां दर्शयितुं प्रागुक्तस्यैवात्र पुनरभिधानात् । शुद्धस्य जीवस्य प्रकृतिस्थत्वे किं कारणमित्यतआह ॥ ॥ कारणमिति । अस्य जीवस्य ॥ ॥ २२ ॥ साध्वसाध्वोयोन्युत्पत्तौ सत्वादिगुणसंगोनिमित्तमात्रकारणं । भगवानेव तु स्वतंत्रकारणमित्याह ॥ ॥ उपद्रष्टेति । अनुमंता-पुनः पुनः कर्तव्यस्य विशेषेणालोचकः । यद्वा अनु-स्वानुकूल्येन स्वमनोऽविक्षेपकतयेति यावत् । मंता-( मत्या )मतिपूर्वं इति यावत् । प्रेरयतीत्यनुमंता । तत्र हेतुरुपद्रष्टेति-सर्वेभ्यउपरि वर्तमानः-उत्तमःसाक्षिति यावत् । भोक्ता-सर्वकर्मफलसारभुक् । महाशक्तित्वान्महेश्वरः । परमात्मा-परमचेतनः । इति शब्दोहेत्वर्थः सन्सर्वत्रान्वीयमानः अनुमंतृत्वादित्यादिरूपेण हेत्वर्थकोध्येयः । उपद्रष्टृत्वादिहेतुभ्योनुमंता

**उपद्रष्टानुमंता च भर्ता भोक्ता महेश्वरः । परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २३ ॥ यएनं वेत्ति पुरुषं प्रकृतिं च गुणैः सह । सर्वथा वर्तमानोऽपि न सभूयोऽभिजायते ॥ २४ ॥ ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना । अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २५ ॥ ॥ ॥**

पुरुषउक्तइति । च शब्दोहेतुसमुच्चये । कोनुमंता पुरुषइत्यतः अस्मिन्देहेप्युक्तइति उक्तं । देहस्थत्वेनोक्तश्च भगवान्स्वयमेव "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषि"ति स्वस्य देहस्थत्वेन प्रागुक्तत्वादिति भावः । एतेन "यतश्च यदि"त्यनेन यादृग्धर्मविशिष्टाद्यत्क्षेत्रं प्रवर्तते एतन्मे शृणिवति प्राक् प्रतिज्ञातमप्युक्तं भवति । उपद्रष्टृत्वादिधर्मविशिष्टात्प्रवर्ततइति ॥ २३ ॥ "प्रकृतिं पुरुषं चैव विद्धी" त्युक्तार्थे बुभुत्सातिशयोत्पादनाय तज्ज्ञानफलमाह ॥ ॥ यएनमिति । योधिकारी एनं पुरुषं जीवपराख्यद्विविधपुरुषं जडाजडाख्यद्विविधप्रकृतिं च तत्तद्गुणैः सह वेत्ति परोक्षतोविदित्वा परोक्षतोजानाति सपुमान्सर्वथा वर्तमानोपि-प्रमादादन्यायप्रवृत्तिमानपि भूयः-पुनर्नाभिजायते मुक्तोभवतीत्यर्थः । तदुक्तं सूत्रे ॐ कामकारेण चैके ॐ इति ॥ २४ ॥ परमपुरुषादिदर्शने साधनमाह ॥ ॥ ध्यानेनेति । केचिच्छ्रे-

१–अ० ३ पाद ४ अ० ४–सू १५ ॥ एके-शाखिनःकामकारेणच-यथेष्टाचारेणापि, 'ज्ञानिनोमोक्षं''कामचाराःकामभक्षाः''इति श्रुतौ पठंति, यतोऽतोबाधकाभावात् अस्ति ज्ञानिनः सदसत्प्रवृत्तौ विशेषइतिभावः

वणमननोपेताः ध्यानेनात्मना-बुद्ध्यात्मानं-भगवंतं आत्मनि-देहे पश्यंति । अन्ये सांख्येन योगेन वेदोक्तभगवस्वरूपपरोक्षज्ञानेन ध्यानेन चेत्यनुषज्जते। आत्मानं पश्यंति । अपरे श्रवणादिहीनाः कर्मयोगेन च कर्मरूपोपायेन सख्येन-ध्यानेन चेत्यनुषज्यते । साधुकर्मानुष्ठानलब्धभगवत्प्रसादजन्यश्रवणमननध्यानैरात्मानं पश्यंति । ध्यानेऽशक्तानां सांख्यसंपादनद्वारा ध्यानसंपादनेन । तत्राप्यशक्तानां कर्मोपायेन श्रवणादिसंपादनेनात्मदर्शनमित्यवस्थाभेदमाश्रित्यायमर्थोभाष्योक्तः । तात्पर्ये तु केचिदृषयः स्वप्रतिभयान्यतः श्रवणेन च हरिं ज्ञात्वा आत्मना-मनसा आत्मनि-हृदये आत्मानं-परमात्मानं ध्यानेन पश्यंति "साक्षात्कुर्वंति केचिदि"त्युक्त्यान्ये नारदाद्याः ऋषयस्तु बहिरपि पश्यंति इति सूचितं । केचित्-ऋषयः "नारदाद्याबहिस्त्वपी"ति स्मृतेः । "ऋषयोंतःप्रकाशा"इति सूत्रभाष्योक्तश्रुतिस्तु नारदाद्यन्यविषयेति ज्ञातव्यं । अन्ये देवास्तु सांख्येन योगेन-स्वप्रतिभाख्यज्ञानरूपोपायेन ध्यानेन विनैव विष्णुप्रसादलब्धस्वप्रतिभाख्यज्ञानेन

अन्ये त्वेवमजानंतः श्रुत्वान्येभ्यउपासते । तेऽपि चातितरंत्येव मृत्युं श्रुतिपरायणाः ॥२६॥ यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २७ ॥ ॥ ॥

बहिरंतश्च विष्णुं पश्यंतीत्यर्थः । अपरे-क्षत्रियवराःराजानःकर्मयोगेनाश्वमेधादिकर्मरूपोपायेन श्रवणेन-स्वप्रतिभया च नित्यं भगवंतं स्मरंतोश्वमेधादियज्ञकर्मकाले यज्ञभागार्थमागतमात्मानं पश्यंतीत्यर्थः । श्रवणप्रतिभयोरल्पत्वादत्रानुक्तिः ॥ २५ ॥ अन्ये तु मनुष्यास्तु एवंस्वप्रतिभाबलेनात्मानमजानंतः अन्येभ्यः श्रुत्वा मत्वेत्यपि ग्राह्यं । उपासते-ध्यायंति । ततः पश्यंति च । तेपि च अल्पतरप्रतिभावंतोपिश्रुतिपरायणाः-बहुश्रवणवंतः संतः मृत्युसंसारं अतितरंत्येवेत्यर्थः ॥ २६ ॥ कार्योपादानत्वप्रकृत्युपादानकदेहयोगित्व सर्वत्र समत्वरूपधर्मयुक्ततया प्रकृतिपुरुषेश्वरस्वरूपं पुनरप्याह ॥ ॥ यावदिति । नचाप्रतिज्ञातोक्तिदोषः प्रकृतिपुरुषधर्मोक्तेः यादृक्चेत्यत्रेश्वरधर्मोक्तेश्च यत्प्रभावइत्यत्र प्रतिज्ञातेतर्भावात् । यावत्स्थावरजंगमात्मकं सत्वं-जीवजातं तत्क्षेत्रक्षेत्रज्ञसंयोगात्-चित्प्रकृतिपरमात्मनोः संयोगाज्जायते

प्रादुर्भवतीति विद्धि । यद्वा उपद्रष्टेत्यादिना सदसद्योनिजन्मसु भगवानेव स्वतंत्रकारणमिति यदुक्तं तत्प्रपंचयति ॥ ॥ यावदिति । उक्तए-वार्थः ॥२७॥ "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेष्वि"ति हरेः सर्वशरीरस्थत्वं यदुक्तं तदयुक्तं । तथात्वे अधिष्ठानतारतम्यात्तारतम्यं दुःखिसद्भाव-स्थानाद्दुःखं च स्यादित्यतआह॥ ॥ सममिति । सर्वेषु-तारतम्योपेतेषु प्राणिषु तिष्ठंतं परमेश्वरं आचिंत्यशक्तिकं हरिं समं-यून्याधिकहीनं सर्वत्राशे-षसद्गुणोपेतं । एवं यः पश्यति । विनश्यत्सु-सुखदुःखजनिमृत्यादिदोषवत्सु भूतेषु तिष्ठंतं अविनश्यंतं दुःखादिदोषहीनं यः पश्यति सप-श्यति । सएव यथार्थज्ञानवानित्यर्थः ॥२८॥ साम्यादिज्ञानस्य फलमाह ॥ ॥ सममिति । सर्वत्र समवस्थितं-निर्दोषाशेषसद्गुणतया-

**समं हि सर्वभूतेषु तिष्ठंतं परमेश्वरम् । विनश्यत्स्वविनश्यंतं यः पश्यति सपश्यति ॥ २८ ॥ समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् । न हिनस्त्यात्मनाऽत्मानं ततोयाति परां गतिम् ॥ २९ ॥ प्रकृत्यैव च क-र्माणि क्रियमाणानि सर्वशः । यः पश्यति तथात्मानमकर्तारं सपश्यति ॥ ३० ॥ ॥ ॥**

सम्यगवस्थितं ईश्वरं समं-सर्वत्र निर्दोषाशेषसद्गुणतयैकप्रकारं । ॐ न स्थानतोपि परस्योभयलिंगं सर्वत्र हि ॐ इति सूत्रोक्तदिशा पश्यन् आत्मना-बुद्ध्या आत्मानं-स्वात्मानं न हिनस्ति-नरके न पातयति । ततोज्ञानात्परां गतिं मुक्तिं च यातीत्यर्थः ॥ २९ ॥ नन्वीश्वरः कर्मानपेक्षयैवोपद्रष्टेत्यत्रोक्तदिशा यदि सदसद्योनिजन्मसु स्वतंत्रकारणं । तर्हि तस्य वैषम्यादिदोषः स्यात् । कर्मापेक्षितायां स्वातंत्र्यप्र-च्युतिस्तस्य स्यात् । तस्यापि कर्त्रंतरसत्वाच्च स्वातंत्र्यहानिरेवेत्यतआह ॥ ॥ प्रकृत्येति । लयबंतमेतत् । चशब्दात्पूर्वप्रकृतेश्वरोनुष-ज्यते । ईश्वरेणैव प्रकृत्य पूर्वतनं जीवकर्म उद्बोध्य तदनुसृत्य क्रियमाणानि सर्वकर्माणि यः पश्यति । तथात्मानं-परमात्मानं अकर्तारं-कर्तृ-

१—अ० ३ पाद २ अ० ८—सू ११ ॥ स्थानतोऽपि-सुरनरतिर्यगाद्यक्ष्यादिस्थानभेदेऽपि परस्य-विष्णोः, उभयलिंगं न-भिन्नं रूपं नास्ति, 'कुतः'हि-यस्मात्, सर्वत्र-सर्वस्थानेषु निर्दोषाशेषगुणःभेदरहितश्च "सर्वभूतेष्वेतमेव ब्रह्मेत्याचक्षते" इत्यादौ श्रूयते इत्यर्थः-

हीनं यः पश्यति परमेश्वरमित्यर्थः । यद्वा उपद्रष्टेत्यत्रोक्तभगवत्स्वातंत्र्यज्ञानस्य फलमाह ॥ ॥ प्रकृत्येति । तृतीयांतमिदं । च शब्दात्प्रकृतेश्वरेण कर्त्रा प्रकृत्या निमित्तभूतया क्रियमाणानि सर्वशःकर्माणि यः पश्यति । तथा स्वात्मानं चाकर्तारं अस्वतंत्रं च यः पश्यति सपश्यति हरिमित्यर्थः ॥ ॥ तथाच सूत्रं । ॐ पूर्वंतुबादरायणोहेतुव्यपदेशात् ॐ इति । कर्तृराहित्यात्स्वातंत्र्यं । स्वाधीनसत्ताकतत्तदीयपूर्वकर्मापेक्ष्य सर्वं करोतीति न वैषम्यादिदोषइति भावः । तदुक्तं ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्० ॐ इति॥३०॥न केवलं भगवतःसर्व-

यदा भूतपृथग्भावमेकस्थमनुपश्यति । ततएव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३१ ॥ अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः । शरीरस्थोऽपि कौंतेय न करोति न लिप्यते ॥ ३२ ॥ ॥ ॥

प्रेरकत्वादिज्ञानमात्रेणालं । किंतु तस्य ॐ अवस्थितेरिति काशकृत्स्नः ॐ इति सूत्रोक्तदिशा सर्वाधारत्वाद्यपि ज्ञातव्यमित्युच्यते ॥ ॥ यदेति । भूतपृथग्भावं भूतानां-जीवानां पृथक्त्वं-भेदं एकस्थमेकस्मिन्विष्णौ स्थितं । किमुक्तं भवति विष्णुनान्योन्यं च पृथग्भूतं भूतग्राममेकविष्ण्वाश्रितं यदानुपश्यतीत्युक्तं भवति । ततएव-विष्णुतएव विस्तारमुत्पत्तिं च भूतानामित्यन्वेति । अनु-तारतम्येन पश्यति । तदा ब्रह्म संपद्यते-प्राप्नोति ॥ ३१ ॥ ननु सर्वभूतेषु तिष्ठतोन विनाशइत्युक्तं । शरीरसंबंधे व्ययादेरावश्यकत्वादित्यतोहेतूक्तिपूर्वं व्ययलेपा-

१-अ० ३ पाद २ अ० २०-सू० ४२ पूर्वं-पूर्वोक्तः-विष्णुः धर्मश्च, फलहेतुरिति बादरायणोमन्यते 'कुतः' हेतुव्यपदेशात्-"पुण्येन पुण्यं लोकं नयति पापेन पापमि" ति विष्णोःकर्तृत्वेन धर्मस्य करणत्वेन न तु साम्येन हेतुत्वव्यपदेशादित्यर्थः-२-अ० २ पाद १ अ० १०-सू०३५॥ वैषम्य नैर्घृण्येतत्तत्कर्मानपेक्ष्य स्वातंत्र्येणनिर्निमित्तं प्राणिनांविभागेन सुखदुःखादिदानेन विष्णोःप्राप्ते ये वैषम्यनैर्घृण्ये ते,न-नस्तः, सापेक्षत्वात्,-सुखदुःखादिफलदाने कर्मसापेक्षत्वात् निर्निमित्तत्वाभावात्, तथाहि दर्शयति-"पुण्येनपुण्यंलोकंनयतिपापेन पापमि" तिश्रुतिः ३-अ० १ पाद ४ अ०५-सू० २३ ॥ अवस्थितेः-कर्मदेवतादिजगतःब्रह्मण्यवस्थितत्वात् "एषसेतुर्विधारण"इत्यादिना सर्वाधारत्वप्रकारकब्रह्मज्ञानोत्पत्यर्थं आधेयरूपकर्मादिजगद्वाचित्वमिति काशकृत्स्नोमन्यतेइत्यर्थः ॥





यभावमाह ॥ ॥ अनादित्वादिति । शरीरस्थोप्ययं परमात्मा अनादित्वान्निर्गुणत्वात्सत्वादिगुणहीनत्वाच्चाव्ययः । नाशादिव्ययहीनः । चिंतासंतापदुःखादिना न लिप्यते न संबध्यते । लौकिकक्रियाविलक्षणक्रियावत्त्वान्न करोति च । अनादित्वहेतोर्भावत्वे सतीति विशेषणान्न प्रागभावे व्यभिचारः शंक्यः । यद्वा"सर्वं खल्विदं ब्रह्म" "पुरुषएवेदं सर्वमि"त्यादिना विष्णोः सर्वचिदचिदात्मकत्वप्रतीतेर्वाध्यतैरस्तथोक्तेश्च कथं भूतानां विष्णोः पृथग्भावइत्यतः श्रुतितात्पर्यापरिज्ञानादिप्राप्तमद्वैतं सहेतुकं निराह ॥ ॥ अनादित्वादिति । अयं परमात्मा शरीरस्थोपि-शरीराभिमानितया तत्स्थसुखदुःखादिभोक्तृतया शरीरस्थोत्र जीवोभिमतः शरीरस्थोपि न भवति जीवात्मकोपि न भवति । किमु वाच्यं

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितोदेहे तथात्मा नोपलिप्यते ॥ ३३ ॥ यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३४ ॥ ॥

जडात्मकोन भवतीति अपेरर्थः । कुतः अनादित्वात् । देहयोगनिमित्तादिमत्त्वहीनत्वादिति यावत् । सत्वादिगुणहीनत्वाद्देहव्ययनिमित्तव्ययहीनत्वात् । करोति सर्वकर्तृत्वान्न लिप्यते सर्वकरणनिमित्तफलाभोक्तृत्वाच्च । जीवस्य चोक्तहेतुपंचकविपर्ययवत्त्वादिति भावः ॥ ईश्वरः करोति न लिप्यते । जीवस्तु ॐ परात्तुतच्छ्रुतेः ॐ इति सूत्रोक्तदिशा कर्तृशक्तेरपीशाधीनतया स्वातंत्र्याभावान्न करोति । पराधीनकर्तृतया लिप्यते चेति योजना ॥ ३२ ॥ परमात्मनोलेपाभावं दृष्टांतेनोपपादयति ॥ ॥ यथेति । पंकादिसर्वगतमप्याकाशं सौक्ष्म्यादप्रतिघत्वान्नोपलिप्यते यथा तथा सर्वत्र नीचोच्चादिदेहे स्थितोप्यात्मा-परमात्मा नोपलिप्यते ॥ ३३ ॥ यत्क्षेत्रज्ञत्वविशिष्टतया भगवज्ज्ञा-

१ अ० २-पा० ३ अ० १७ सू० ४१ परात्तु-ज्ञस्य कर्तृत्वशक्तिः परमेश्वरादेव, तच्छ्रुतेः-कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः ॥ यत्प्रसादादिमे संति न संति यदुपेक्षयेति पैंगी श्रुतेः

नार्थं क्षेत्रादिकमुक्तं तत्क्षेत्रज्ञत्वं दृष्टांतेन व्यनक्ति ॥ ॥ यथेति यथैकोरविः इमं लोकं कृत्स्नं प्रकाशयति । तथैकः क्षेत्री-क्षेत्रस्थः परमात्मा कृत्स्नं क्षेत्रं चेतनाचेतनरूपं प्रकाशयति ॥ ३४॥ फलोक्त्याऽध्यायार्थमुपसंहरति ॥ ॥ क्षेत्रेति । क्षेत्रक्षेत्रज्ञयोरेवमुक्तप्रकारेणांतरं भेदं ज्ञानचक्षुषा-विवेकदृष्ट्या ये विदुः । तथाभूतेभ्यः प्रकृतेश्च जीवानां मोक्षोयेनेति वा । भूतानां-जीवानां अचेतनप्रकृतेः सकाशान्मो-

क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषा । भूतप्रकृतिमोक्षं च ये विदुर्यांति ते परम् ॥३५॥ ॐतत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विकीर्णतयोक्त ज्ञानसाधनस्य जीवेश्वरस्वरूपस्यच भगवदावासस्थानरूपक्षेत्रशब्दस्यापि विस्तृततया वर्णनं (क्षेत्रक्षेत्रज्ञयोगो) नाम त्रयोदशोऽध्यायः॥ १३॥

क्षोयेनेति । तदमानित्वादिकं प्रागुक्तमोक्षसाधनं च ये विदुः ते ब्रह्म यांतीति ॥ ३५ ॥ इतिश्रीमद्गीतार्थसंग्रहे राघवेंद्रयतिकृते विकीर्णतयोक्तज्ञानसाधनस्य जीवेश्वरस्वरूपस्यच भगवदावासस्थानरूपक्षेत्रशब्दस्यापि विस्तृततया वर्णनं नाम त्रयोदशोध्यायः ॥ १३ ॥



ॐ ॥ "बुद्धियोंगे त्विमां शृण्वि"ति द्वितीये प्रतिज्ञाय आषष्ठसमाप्तेः कामादिवर्जनादितिकर्तव्यतासहितं कर्म ध्यानलक्षणं ज्ञानसाधनमुक्तं । तत्रेतिकर्तव्यतांशं उत्तराध्यायपंचकेन प्रपंचयतीति प्रघट्टार्थः । तत्र बंधप्रकारे ज्ञाते सत्येव तन्मोचनसाधनस्य तदिति-कर्तव्यस्यचानुष्ठानाय तत्प्रपंचनं युज्यते । बंधश्च"कारणं गुणसंगोस्ये" ति पूर्वाध्यायोक्तदिशा त्रिगुणात्मकः । अतो"यावत्संजायते" इत्यादिना पूर्वाध्यायोक्तक्षेत्रक्षेत्रज्ञसंयोगहेतुकप्राणिजननविवरणपूर्वकं त्रिगुणविकारास्थितिं तदत्ययोपायं च दर्शयत्यस्मिन्नध्याये । "कार्यते ह्यवशः कर्मेति"तृतीयाध्याये संक्षेपेण त्रैगुण्यस्योक्तत्वेपीह तस्य विविच्य कीर्तनमिति ज्ञेयं । श्रोतुरादरजननाय वक्ष्यमाणमर्थं प्रतिज्ञाय स्तौति। परमिति द्वयेन । परमन्यद्भूयः-पुनः प्रवक्ष्यामि । तत्किमित्यतउक्तं ॥ ॥ ज्ञानानामिति । कर्मणि ल्युट् । ज्ञातव्यानां मध्ये उत्तमं ज्ञानं ज्ञातव्यं ।

**श्रीभगवानुवाच । परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् । यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो-गताः ॥१॥ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायंते प्रलये न व्यथंति च ॥ २ ॥ मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । संभवः सर्वभूतानां ततोभवति भारत ॥ ३ ॥ ॥**

यज्ज्ञात्वा मुनयोमननशीलाः सर्वे इतः संसारात्परां सिद्धिं-मोक्षं गताः-प्राप्ताः ॥ १ ॥ इदं ज्ञानं वक्ष्यमाणार्थज्ञानमुपाश्रित्य संपाद्य मम साधर्म्य-सारूप्यं आगताः-प्राप्ताः । शिष्टं व्यक्तं ॥२॥ प्रतिज्ञातार्थमाह ॥ ॥ ममेति । महद्ब्रह्म-महती चित्प्रकृतिः मम योनिः-भार्या तस्मिन्ब्रह्माणि-चित्प्रकृतौ गर्भं दधामि । चतुर्विंशतितत्वांशयुतान् जीवान्स्वोदरस्थान् रेतोरूपेण निर्वास्य चित्प्रकृत्युदरे निक्षिपामीत्यर्थः ततस्तत्र निक्षेपाद्भूतानां प्राणिनां देहयोगरूपसंभवोजन्म भवति । "ॐ ज्ञोतएव" ॐ । ॐ युक्तेश्च ॐ इति सूत्रकृदुक्तेः ॥३॥ न केवल-मादिसर्गएवानयोः कारणत्वं किंतु सर्वदेत्याह॥ ॥सर्वेति । देवमनुष्यतिर्यगादियोनिषु याः मूर्तयः-कार्यव्यक्तयः संभवंति । तासां महद्ब्रह्म

---

१–अ० २- पाद ३-सू० १८–ज्ञः-जीवः, अतएव-परमेश्वरादुत्पद्यते. २–अ० २–पाद ३–अ० ११-सू० १९-नित्यस्यापि जीवस्योपाध्यपेक्षया उत्पत्तेर्युक्तत्वाच्चेत्यर्थः

महालक्ष्मीः योनिः-क्षेत्ररूपं कारणं। अहं बीजप्रदः-गर्भाधानकर्ता पिता ॥४॥ एवं "सत्वंरजस्तमइति" "यावत्संजायत" इत्युक्तं श्लोकद्वयेन विवृत्येदानीं योहि बद्धोस्मीति जानाति सएव तन्निवृत्तिसाधनं विजिज्ञास्य-ज्ञात्वानुतिष्ठति। अतोबंधोच्छेदसाधनाय तत्साधनज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतबंधप्रकारं तावदाह ॥ ॥ सत्वमिति । प्रकृतिसंभवाः-त्रिगुणात्मकजडप्रकृतितः संभवंतस्तदंशभूताः सत्वंरजस्तमइतिगुणाः तथा प्रकृतिसंभवाः-चित्प्रकृतितःसृष्टिकाले विभज्यमानाः सद्गुणत्वसृष्ट्यादिरंजनकर्तृत्वजीवग्लपनहेतुत्वनिमित्तैः क्रमात्सत्वरजस्तमश्शब्दिताः श्रीभूदुर्गाख्याः गुणाः क्रमाद्गुणत्रयाभिमानिन्यः तिस्रोदेव्यश्च देहे स्थितमव्ययं-स्वरूपतोऽव्ययहीनं जीवं । जात्येकवचनं । जीवजातं निबध्नंति । सर्वासां सर्वजीवबंधकत्वेपि सत्वमानिनी श्रीः देवबंधिका, रजोभिमानिनी भूर्मनुष्यबंधिका, तमोभिमानिनी दुर्गा दैत्यबंधिकेति विशेषोज्ञेयः। अत्र देहइत्युक्तिर्भूतपूर्वगत्या मुक्तानामपि देहित्वात्तद्व्यावृत्यर्था ॥ ५ ॥ श्रीभूदुर्गाभिः क्रियमाणं देवादित्रितयविषयबंधनप्रकारं विविच्याह ॥ ॥ तत्रेत्यादित्रयेण । तत्र तेषु गुणेषु तासु देवीषु च सत्वं सत्वाभिमानिश्रीतत्वं निर्मलत्वात् अनामयं-न विद्यते आमयो-व्याध्याद्युपद्रवोयस्मात्तत् तच्च प्रकाशकं तत्वज्ञानोत्पादकं सत् सुखसंगेन तत्वज्ञानसंगेन च देवान्बध्नाति ॥६॥ तृष्णानामेदं मे भूयादित्याशा संगोवस्तुष्वासक्तिः तयोः समुद्भवोयस्मात्तत् । रजोभिमानिनी भूदेवी भूतत्वं च-रागात्मकं सृष्ट्यादिरंजनस्वरूपं विद्धि । तद्द्विविधं रजः, कर्मयोगेन देहिनं मानुषं जीवं बध्नाति ॥७॥

सर्वयोनिषु कौंतेय मूर्तयः संभवंति याः । तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥ सत्वं रजस्तमइति गुणाः प्रकृतिसंभवाः । निबध्नंति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥ तत्र सत्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥ ६ ॥ रजोरागात्मकं विद्धि तृष्णासंगसमुद्भवम् । तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनम् ॥ ७ ॥ ॥ ॥ ॥



अज्ञानं जायते यतस्तदज्ञानजं तमस्तमोभिमानिनी दुर्गा तत्वं च सर्वदेहिनां मोहनं-मिथ्याज्ञानजनकं विद्धि । तद्द्विरूपं तमः प्रमादादिभिर्दैत्यजनं निबध्नाति ॥ ८ ॥ सत्वादीनां सुखादिसंपादनेनैव बंधकत्वमिति नियमं द्रढयति ॥ ॥ सत्वमिति । सत्वं-सत्वाभिमानिनी श्रीश्च सुखे-सुखविषये संजयति-प्रवर्तयतीत्यर्थः। रजः-रजोभिमानिनी भूदेवी च कर्मविषये संजयति । तमस्तु तमोभिमानिनी दुर्गा च ज्ञानमावृत्य मनसस्तत्वज्ञानशक्तिं प्रतिबध्य प्रमादे-अधर्मे-अधर्मबुद्ध्यादिरूपे संजयति । उतशब्दादालस्यादिग्रहः ॥ ९ ॥ ननु त्रयाणां सर्वबंधकत्वसाम्यात्कथं कस्यचिदेव गुणस्य कार्यं दृश्यते इत्यतः उत्कटत्वानुत्कटत्वाभ्यामिति भावेनाह ॥ ॥ रजइति । ईश्वरेच्छया सत्वमुत्कटं सद्रजस्तमश्चाभिभूय स्वकार्यदक्षं भवति । रजस्तयोत्कटं सत् तमः सत्वं चाभिभूय स्वकार्यदक्षं भवति । तमश्चोत्कटं सत् रजः सत्वं चाभिभूय स्वकार्यकारि भवति इत्यर्थः । आभिभवशब्दितकार्यशक्तिप्रतिबंधोगुणानामेव । देवीना त्वौदासीन्यमेवेति ज्ञातव्यं ॥ १० ॥ केन लिंगेन सत्वादिवृद्धिर्ज्ञेयेत्यतआह ॥ ॥ सर्वेत्यादित्रयेण । अस्मिन्देहे सर्वद्वारेषु-श्रोत्रादिषु ज्ञानं-शब्दादिज्ञानात्मकः प्रकाशः । उतशब्दात्सुखादिचोपजायते यदा तदा सत्वं विवृद्धमिति विद्याज्जानीयात् ॥ ११ ॥ लोभोधनादेरत्यागेच्छा । प्रवृत्तिर्व्यर्थोद्योगः । काम्यकर्मणामारंभः । अशमः-चित्तस्यानुपरतिः ।

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥८॥ सत्वं सुखे संजयति रजः कर्मणि भारत । ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥९॥ रजस्तमश्चाभिभूय सत्वं भवति भारत । रजःसत्वं तमश्चैव तमःसत्वं रजस्तथा ॥ १० ॥ सर्वद्वारेषु देहेऽस्मिन्प्रकाशउपजायते । ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत ॥ ११ ॥ लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा । रजस्येतानि जायंते विवृद्धे भरतर्षभ ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अप्राप्ताभिलाषः- स्पृहा । एतानि विवृद्धे रजसि जायंते । एतैरजोवृद्धिर्ज्ञेयेति भावः ॥ १२ ॥ अप्रकाशः-श्रोत्रादिषु शब्दादिज्ञानाभावः । अप्रवृत्तिरनुद्यमः । प्रमादोऽनवधानं । मोहोविपर्ययः । एतानि तमसि विवृद्धे जायंते । एतैर्लिंगैस्तमोविवृद्धिर्ज्ञेयेति भावः ॥ १३ ॥ सत्वादिगुणवृद्ध्यवस्थायां मृतानां गतिभेदमाह ॥ ॥ यदेतिद्वयेन । यदा सत्वे विवृद्धे देहभृत्प्रलयं याति-म्रियते तदोत्तमविदां-विष्णुज्ञानिनां अमलान्निर्दोषान्लोकान्देहान्प्रतिपद्यते-सात्विककुले जायतइत्यर्थः ॥ १४ ॥ रजसि प्रवृद्धे प्रलयं गत्वा-मृत्वा कर्मसंगिषु-काम्यकर्मिणां कुले जायते । तथा तमसि प्रवृद्धे प्रलीनोमृतः मूढयोनिषु-दैत्यानां कुलेषु जायते ॥ १५ ॥ सात्विकादिकर्मणां फल-

अप्रकाशोऽप्रवृत्तिश्च प्रमादोमोहएव च । तमस्येतानि जायंते विवृद्धे कुरुनंदन ॥ १३ ॥ यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत् । तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥ रजसि प्रलयं गत्वा कर्मसंगिषु जायते । तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥ कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् । रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥ सत्वात्संजायते ज्ञानं रजसोलोभएव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥ ऊर्ध्वं गच्छंति सत्वस्था मध्ये तिष्ठंति राजसाः । जघन्यगुणवृत्तिस्था अधोगच्छंति तामसाः ॥ १८ ॥ ॥ ॥ ॥ ॥

माह ॥ ॥ कर्मणइत्यादिद्वयेन । विद्वत्कुलप्रसूतेन सुष्ठु कृतस्य कर्मणः सात्विकं-निर्मलं-दुःखगंधहीनं फलमाहुः । रजसोराजसकर्मणस्तु दुःखं-दुःखमिश्रं सुखमाहुः । तमसस्तु-तामसकर्मणः अज्ञानं-अज्ञानकार्यंच फलमाहुः ॥ १६ ॥ निर्मलत्वादिफलं च क्रिमित्यतो-विविच्याह ॥ ॥ सत्वादित्यादिना । ज्ञानं-परापरतत्वविषयं । लोभः-स्वर्गादिविषयासक्तिः भवतएवेत्यन्वयः । अज्ञानं च भवतीत्यर्थः ॥ १७ ॥ ज्ञानलोभप्रमादादेः सत्वादिगुणेभ्यः साक्षाज्जन्यत्वेपि तस्य स्वरूपतोफलत्वात्तज्जन्यफलान्याह ॥ ॥ ऊर्ध्वमिति ।

सत्वस्थाः-सात्विकाः ज्ञानेनोर्ध्वं-जनआदिलोकं गच्छंति । राजसाः-काम्यकर्मिणः मध्ये-स्वर्गादौ तिष्ठंति । जघन्यगुणस्तमः तद्वृत्तिस्तत्प रिणामाज्ञानं तन्निष्ठास्तद्वंतःइत्यर्थः । अधोनिरयं गच्छंति ॥ १८॥ एवं त्रयोगुणाः विविच्योक्ताः तेषां जगद्बंधकत्वं तेभ्यः साक्षात्परंपरया च जन्यफलानि चोक्तानि । एवं त्रैगुण्यस्य''कार्यते ह्यवश''इत्यत्र संक्षेपेणोक्तस्येह विविच्य कीर्तने कृते सति तर्हि गुणाएव सर्वोत्तमाः न तु ततोन्यः सर्वोत्तमोस्तीति शंका स्यात्तां निराकरोति ॥ ॥ नान्यमिति । द्रष्टा-जीवः यदा गुणेभ्योन्यं-कर्तारं परिणामिकर्तारं नानुपश्यति । गुणेभ्यश्च परं स्वतंत्रं परमात्मानं वेत्ति सज्ञानी मद्भावं ज्ञानानंदात्मिकां मयि स्थितिं अधिगच्छति-प्राप्नोति । यद्वा एते भ्योगुणेभ्योन्यं कर्तारं ईशं यदानुपश्यति । तदा द्रष्टैव ना-'नृशब्दोयं' पुरुषः अन्यथा पशुः । न केवलं गुणेभ्योन्यत्वेन कर्तारं पश्यन्

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥ गुणा-नेतानतीत्य त्रीन्देही देहसमुद्भवान् । जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥ अर्जुनउवाच । कैर्लिं-गैस्त्रीन्गुणानेतानतीतोभवति प्रभो । किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥ श्रीभगवानुवाच । प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव । न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ २२ ॥ ॥

ना-पुरुषः किंतु गुणेभ्यः परमुत्तमं उत्तमत्वेनापि पश्यन्पुरुषः । कुतः सएवं पश्यन्यस्मान्मद्भावं अधिगच्छति अतइति ॥ १९ ॥ एवं सुखदुःखादिरूपबंधस्य गुणत्रयनिबंधनत्वात्तदत्यये सत्येव बंधहानिर्नान्यथेत्याह ॥ ॥ गुणानिति । तत्तद्गुणपरिणामिदेहेषु प्रकटी-भूतान् त्रीन् गुणानतीत्यैव जन्मादिभिर्विमुक्तोमृतमश्नुते-परंब्रह्म प्राप्नोति ॥ २० ॥ गुणानतीत्येत्युक्ते सति पृच्छति ॥ ॥ कैरिति । एतान्सर्वबंधकान्सत्वादिगुणानतीतोतिक्रांतः पुमान्कैर्लिंगैर्लक्षणैर्युक्तोभवति । हे प्रभो किमाचारः-कीदृशाचारवान् । कथं केनोपायेनैतान् त्रीन् गुणानतिवर्तते ॥ २१ ॥ इति पृष्टोभगवानुत्तरमाह ॥ ॥ प्रकाशंचेत्यादिना । सत्वादयोगुणाहि द्विविधाः स्थूलाः सूक्ष्माश्च ।

स्थूलेभ्योलौकिकाः प्रकाशप्रवृत्तिमोहा जायंते । सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः । तत्राद्येभ्यः-सत्वादिगुणेभ्यः क्रमाज्जातं प्रकाशं प्रवृत्ति-शब्दितमुद्योगं मोहशब्दितमज्ञानं चेत्येतानि संप्रवृत्तानि प्रायोन द्वेष्टि । निवृत्तानि च न कांक्षति । गुणातीतइत्यनुषज्जते । द्वितीये तु विष्णुविषयप्रकाशं प्रवृत्तिं चेच्छति मोहं च द्वेष्टीत्यर्थः । यद्वा पुरुषांतरे स्थितप्रकाशादिसाधुगुणजातानि संप्रवृत्तानि न द्वेष्टि । मोहाद्यसाधुधर्मजातं निवृत्तं न कांक्षतीत्यर्थः । परस्येष्टानिष्टहानिप्राप्ती नेच्छति गुणातीतइति भावः ॥ २२ ॥ एवं कैर्लिंगैरिति प्रश्नस्योत्तरमुक्त्वा किमाचारइत्यस्योत्तरमाह ॥ ॥ उदासीनवदिति । योगुणातीतः पुमानुदासीनवदासीनः नतूदासीनएव । एवं वैष्णवधर्मानुष्ठानात् गुणैः-सत्वादिभिर्न विचाल्यते-तत्कृतविकारं न प्राप्नोति । गुणा-सत्वादयः परमेश्वरेच्छया प्रवर्तंते न स्वतंत्राइत्येवं योवतिष्ठति-वेत्ति

उदासीनवदासीनो गुणैर्योन विचाल्यते । गुणावर्ततइत्येव योऽवतिष्ठति नेंगते ॥ २३ ॥ समदुःखसुखः स्वस्थः समलोष्ठाश्मकांचनः । तुल्यप्रियाप्रियोधीरस्तुल्यनिंदात्मसंस्तुतिः ॥ २४ ॥ ॥

सनेंगते गुणकृतावैष्णवकर्मकरणाय न चेष्टतइति । वैष्णवान्येव कर्माण्याचरति नान्यानीति तदाचारइति भावः ॥ २३ ॥ आचारांतरं चाह ॥ ॥ समेति । प्रायेण हेयतया दुःखसमं वैषयिकं सुखं यस्य ससमदुःखसुखः । गुणातीतइत्यनुषज्जते । स्वस्थः-प्रायेण निर्विकारः । हेयत्वेन लोष्ठाश्मसमं कांचनं यस्य समलोष्ठाश्मकांचनः । प्रायइति सर्वत्र योज्यं । हेयत्वेनाप्रियतुल्यं प्रियं यस्य सतुल्यप्रियाप्रियः । हेयत्वेन निंदया तुल्या आत्मनः संस्तुतिर्यस्य सतथा । समत्वादिकं केन स्यादित्यतउक्तं धीरइति-धैर्येणेत्यर्थः । यद्वा विष्णुभजनादिविषये समदुःखसुखइत्यादियोज्यं । किमुक्तं भवति । विष्णुभजनादौ दुःखसत्वे तत्त्यागे सुखसत्वेपि विष्णुभजनादिकं सममेकप्रकारमेव कार्यमित्युक्तं भवति । एवमग्रेपि अनुष्ठाने लोष्ठाश्माद्यनभिमतप्राप्तिः तत्त्यागे कांचनाद्यभिमतं प्रयच्छतीति विष्णुभजना-



दिकं न त्याज्यं । लौकिकपुमर्थप्राप्तिहानावपि विष्णुभजनादि न त्याज्यमित्यर्थः । अनुष्ठानेऽननुष्ठाने प्रियाप्रिययोः प्राप्तावपि विष्णुभजनादौ तुल्यएव -सदानुष्ठेयमेवेत्यर्थः । तथानुष्ठानाननुष्ठानयोः क्रमान्निंदात्मस्तुत्योः प्राप्तौ सत्यामपि विष्णुभक्त्यादौ तुल्यएव न त्याज्यं विष्णुभक्त्यादीत्यर्थः । तत्रहेतुर्धीरः । धीमान्विष्णुमाहात्म्यज्ञानवान्स्वस्थः-विष्णुधर्मादचलइति ॥ २४ ॥ तथा मानापमानयोः प्राप्तावपि विष्णुभक्त्यादौ तुल्यएव । न त्याज्यं तदित्यर्थः । कृताकृतौ चारिपक्षमित्रपक्षयोः सत्वेपि विष्णुभक्त्यादि कार्यमेवेत्यर्थः । पूर्वं नेंगतइति सामान्यतोऽवैष्णवकर्मारंभत्यागोक्तावपि प्रयोजनविशेषापेक्षयापि नावैष्णवकर्मारंभवानित्याह ॥ ॥ सर्वारंभपरित्यागीति । केनचित्प्रयोजनेनाप्यवैष्णवसर्वकर्मारंभमकुर्वन्नित्यर्थः यद्वा नेंगतइत्यल्पावैष्णवकर्मत्यागः अत्र तु अतिदीर्घावैष्णवकर्मत्यागइति न पुनरुक्तिः ।

मानापमानयोस्तुल्यस्तुल्योमित्रारिपक्षयोः । सर्वारंभपरित्यागी गुणातीतः सउच्यते ॥ २५ ॥ मां च योऽव्यभिचारेण भक्तियोगेन सेवते । सगुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥ ब्रह्मणोहि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च ॥ २७ ॥ ॥

॥ २५ ॥ एवं गुणातीतलक्षणं आचारं चोक्त्वा कथं "गुणानतिवर्तत"इति प्रश्नस्योत्तरमाह ॥ ॥ मांचेति । अव्यभिचारेण भक्तियोगेन-नित्यभक्त्याख्योपायेन मां च सेवते । गुणान्सत्वादिगुणैः तदभिमानिश्रीदेव्यादिभिः कृतबंधं समतीत्य ब्रह्मभूयाय । ब्रह्मशब्दोत्र चित्प्रकृतिपरः । चित्प्रकृतिवद्रूपं-भवनं-ब्रह्मभूयं । सा यथा विष्णुप्रिया तथा गुणातीतोपि विष्णुप्रियोभवतीत्यर्थः । यद्वा ब्रह्मणि चित्प्रकृतौ भूयाय-भावाय चित्प्रकृतिप्राप्तये कल्पते-शक्तोभवति ॥ २६ ॥ ननु गुणातीतस्य भगवत्प्राप्त्यादिकमेव वाच्यं । लक्ष्मीप्राप्तिः किमर्थमुच्यते इत्यतस्तत्प्राप्तौ मत्प्राप्तिरेव भवति । तस्याःमत्स्थत्वादिति भावेनाह ॥ ॥ ब्रह्मणइति । ब्रह्मणो-महालक्ष्म्याःअव्ययस्या-

मृतस्य च मुक्तवर्गस्य शाश्वतस्याक्षयफलस्य निष्कामधर्मस्य एकांतिकस्य-अस्मादिदमधिकमितिगणने एकमेवांते यस्य तदैकांतिकं तस्य दुःखासंभिन्नस्य सुखस्य-मोक्षस्येत्यर्थः । प्रतिष्ठा-आधारः । अतोमदवियोगिनीं लक्ष्मीं प्राप्तोमामेव प्राप्तो भवति । गुणातीतोलक्ष्मी-



ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे त्रिगुणविकारस्थितेर्वि-विच्यवर्णनं ( प्रकृतिगुणत्रयविभागयोगो ) नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ॥

समीपं प्राप्य तदनुगृहीतोहरिं पश्चादाप्नोतीति परंपराद्योतनायैव मुक्तिरिति ज्ञेयं ॥ २७ ॥ ॐ तत्सदिति श्रीमद्गीतार्थसंग्रहे श्रीमद्राघवेंद्रयतिकृते त्रिगुणविकारास्थितेः स्तदत्ययोपायस्यच विविच्य वर्णनं नाम चतुर्दशोध्यायः ॥ १४ ॥ ॥ ॥ ॥



ॐ ॥ त्रयोदशाध्याये संसारहेतुभूतं प्रकृतिमहदहंकारादितत्वजातरूपं क्षेत्रशब्दितं जगत्स्वरूपं उक्तं । "यएनं वेत्ति पुरुषमि" त्यादिना भगवदादिज्ञानरूपः तदत्ययोपायश्चोक्तः । तद्वयमत्र दर्शयति । ननु पूर्वाध्यायएव तद्वयं दर्शितमिति चेन्न । तत्र संसारहत्वेके- देशगुणानामेव प्रवृत्तिर्दर्शिता । अत्र पुनःसमग्रं संसारहेतुप्रकृत्यादिजगत्स्वरूपं प्रदर्श्य तदत्ययेच्छामुत्पाद्य तत्साधनजिज्ञासुं प्रति प्रागुक्त- तदत्ययसाधनं प्रपंचयति । अतएव पूर्वानंतर्यमस्य । तदत्ययसाधनप्रपंचनं प्रसंगादेव भगवन्महिमानं च दर्शयतीति-ज्ञेयं । जगत्स्वरूपं तावदाह । ऊर्ध्वमित्यादिसार्धश्लोकद्वयेन । ऊर्ध्वशब्दः-उन्नतवाची सन् विष्णुचिदचित्प्रकृतिपरोत्र ज्ञेयः । विष्णोः सर्वोत्तमत्वात् परतंत्रेषु चित्प्रकृतेः सर्वोत्तमत्वादचित्प्रकृतेरचेतनेषूत्तमत्वात् ऊर्ध्वाः-विष्णुचिदचित्प्रकृतयोवृक्षस्य मूलानीव मूलानि यस्य सविकाराव्यक्तादिप्रागुक्त- पंचविंशतितत्वात्मकस्य जगदाख्यवृक्षस्य तमूर्ध्वमूलं । श्वएकरूपेण न तिष्ठतीति व्युत्पत्त्या अश्ववच्चंचलत्वेन तिष्ठतीति वाऽश्वत्थनामकं ।

**श्रीभगवानुवाच । ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

सुपिस्थइति कः अतोलोपइटिचेत्याकारलोपः । तस्य तकारः । जगदाख्यं-चिदचिदात्मकं वृक्षं । तत्रायं विवेकः । प्रसिद्धवृक्षस्य धरादे- वीवत् विष्णुर्जगद्वृक्षस्य पृथङ्मूलं । अचित्प्रकृतिः सत्वादित्रिगुणात्मिका वृक्षस्य मृद्वत्परिणामितया मूलं । त्रिमूलोहि जगद्वृक्षोजडप्रकृ- तिरपि त्रिगुणात्मकत्वान्मूलत्रयात्मना त्रिभिर्गुणैःपरिणमते । चित्प्रकृतिस्तु तदधिष्ठातृत्वान्मूलभागवज्ज्ञातव्येति । अधःशब्दोनीचवाची । विष्ण्वादिप्रागुक्तत्रितयापेक्षयाधः-नीचाः पंचभूतसहिताः महदहंकारबुद्ध्योष्टौ पदार्थाः साभिमानिनः शाखाइव शाखाः यस्य तथा तं । अव्ययं-सर्वथानुच्छिद्यमानं । पूर्वकल्पे यथास्थितं तथैव कल्पांतरेपि स्थितं तथैव प्रवाहतोनादिनित्यमिति यावत् । प्राहुः-प्राज्ञाइत्यर्थः । लोके पर्णोत्पत्तावेव फलोदयदर्शनात् । छंदसां काममोक्षरूपफलहेतुत्वात् । यस्य जगदाख्यवृक्षस्य छंदांसि वेदशाकयजातानि अभिमानि- सहितानि पर्णानि आहुः । एतेन जगद्वृक्षः काममोक्षरूपद्विफलइत्युक्तंभवति । यस्तं-जगद्वृक्षं वेद सवेदवित्-वेदार्थज्ञइत्यर्थः ॥ १ ॥

तस्य जगदाख्यवृक्षस्य शाखाः-शाखास्थानीयाः महदाद्याः अष्टौ पदार्थाः चिदाचिद्रूपाः अधः-स्वापेक्षयापकृष्टकार्यभूतशरीरादौ स्वापेक्षयोत्कृष्टोर्ध्वशब्दोक्ते कारणभूताव्यक्ते च सूक्ष्मरूपेण प्रसृताः-व्याप्ताः । किंरूपाः शाखाइत्यतउक्तं गुणप्रवृद्धाइत्यादि । गुणैः-सत्वादिभिः प्रवृद्धाः गुणानामर्वाचीनमूलत्वात्तादृशमूलैरेव प्रवृद्धे वृक्षे शाखानां प्रवृद्धिर्दृष्टेति भावः। विषयप्रवालाः-तात्कालिकसुखहेतुत्वसाम्यात् शब्दाद्याः विषयाएव प्रवालाः पल्लवायासां ताः विषयप्रवालाः । मूलानि ऊर्ध्वपदेन प्रकृतानि विष्णोरूपाणि जडाजडप्रकृती सत्वरजस्तमांसि च अधः जगदाख्यवृक्षस्य अधोभागेषु च शाखास्वपीति यावत् । अनुसंततानि-व्याप्तानि । कीदृशानि मूलानीत्यतउक्तं कर्मानुबंधीनीति । मनुष्यलोके कर्माणि अपेक्ष्य फलदातृत्वात्कर्मानुबंधीनि'इति । तथाचोक्तं । ब्रह्मास्य पृथङ्मूलं, प्रकृतिः समूलं, सत्वादयोर्वाचीनमूलं, भूतानि शाखाः,छंदांसि

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धाविषयप्रवालाः । अधश्च मूलान्यनुसंततानि कर्मानुबंधीनि मनुष्यलोके ॥ २ ॥ न रूपमस्येह तथोपलभ्यते नांतोनचादिर्नच संप्रविष्टः । अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण धृढेन छित्वा ॥३॥ ततः परं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तंति भूयः । तमेवचाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥ ॥ ॥ ॥ ॥

पत्राणि, देवनृतिर्यंचश्च शाखाः, पत्रेभ्योहि फलं जायते । "मात्राशिफाः मुक्तिः फलममुक्तिः फलं। मोक्षोरसोमोक्षोरस"इत्यादिश्रुतेः ॥ २॥ अस्य जगद्वृक्षस्य रूपं यथास्थितं तथेह लोके नोपलभ्यते विकारित्वादिति भावः । जगतोजन्मसंहारकर्तृत्वहेतुनाद्यंतपदोक्तोविष्णुः संप्रविष्टश्च जगद्वृक्षमनुप्रविष्टोपि नोपलभ्यते । "नांतोनचादिः न च संप्रविष्टः-"उपलभ्यतइति वाक्यत्रयेणानुपलंभोक्तिरादरार्था। अस्त्वेवं जगद्वृक्षस्वरूपं-ततः किमित्यतआह॥ ॥ अश्वत्थमिति । सुविरूढमूलं-प्रबलविष्ण्वादिबहुमूलकं एनं-प्रागुक्तं अश्वत्थनामकं जगद्वृक्षमसंगशस्त्रेण-संगराहित्यमहितेनज्ञानासिना छित्वा मूलभूतोविष्णुः प्रकृत्यादिजगतोविलक्षणः जगच्चावांतरभेदयुक्तं परतंत्रं प्रवाहतोव्ययमित्यादिरूपेण विविच्य ज्ञात्वेत्यर्थः । उक्तज्ञानरूपछेदनं तस्य कार्यमिति भावः ॥ ३ ॥ ततः परं-परापरतत्वविषयविमर्शादनंतरं तत्-ऊर्ध्वादिपदेन प्रकृतं ब्रह्म परिमार्गितव्यम्-अन्वेषणीयं-श्रवणादिना विषयीकर्तव्यं । जगद्वैलक्षण्यज्ञाने सत्येव तत्स्वरूपमन्वेष्टुं शक्यतइति भावः । यस्मिन्गताः भूयः पुनर्न निवर्तंते-न गर्भयातनां प्राप्नुवंति । तदिति पूर्वेणान्वयः । जगद्वृक्षच्छेदनोपायमाह ॥ ॥ तमेवचेति । येयं पुराणी-चिरंतनी । संसारप्रवृत्तिः-यतः प्रसृता-विस्तृता तमेव चाद्यं-प्राथमिकं पुरुषं-विष्णुं प्रपद्ये-प्रपद्येत व्यत्ययात । "तमेवाद्यं प्रपद्येत यदंशाभासकोह्ययं । जीवराशिरि"ति वचनात् । जगद्वृक्षच्छेदनार्थमिति योज्यं ॥ ४ ॥ भगवत्प्रतिपत्तौ साधनांतराण्याह ॥ ॥ निर्मानेति । मानमोहाभ्यां-अहंकारमिथ्याज्ञानाभ्यां निर्गतास्ताभ्यां हीनाइति यावत् । जितविषयसंगदोषाः अध्यात्मनित्याः-अध्यात्मज्ञाने भगवच्छ्रवणादौ निरताः विशेषतोनिवृत्तविषयतृष्णाः सुखदुःखसंज्ञैः द्वंद्वैः-लाभालाभजयाजयादिरूपैर्विमुक्ताः अमूढाः-रजस्तमस्स्वभावशून्याः अव्ययं तत्पदं भगवत्स्वरूपं

निर्मानमोहा जितसंगदोषा अध्यात्मनित्याविनिवृत्तकामाः । द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छंत्यमूढाः पदमव्ययं तत् ॥५॥ न तद्भासयते सूर्यो न शशांकोन पावकः । यद्गत्वा न निवर्तंते तद्धाम परमं मम ॥६॥ ममैवांशोजीवलोके जीवभूतः सनातनः । मनः षष्ठानींद्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥ ॥ ॥

गच्छंति ॥ ५ ॥ कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थइत्यतआह ॥ ॥ नतदिति । तत्पदं सूर्यादिर्न प्रकाशयति । यद्गत्वा-यत्स्वरूपं प्राप्य न निवर्तंते-संसारं न यांति परमं तन्मम धाम-रूपमित्यर्थः ॥ ६ ॥ जगद्वृक्षच्छेदार्थं ब्रह्मादिप्रतिपत्त्यैवालं किं भगवत्प्रतिपत्त्येत्यतआह ॥ ॥ ममैवेति । जीवलोके-ब्रह्मादिजीवशरीरे सनातनोऽनादिनित्यः जीवभूतः-जीवरूपोममैव भिन्नांशः न तु मत्स्यादिवत्स्वरूपांशः भिन्नोपि सूर्यस्य खद्योतइव किंचित्सादृश्यमात्रेणांशइत्युच्यते । अतोब्रह्मादीनां मदंशाभासत्वेन तेषां ब्रह्मादीनां अशक्तत्वात्तेषां प्रतिपात्तिं विना भगवत्प्रतिपत्तिरेव कार्येति भावः । जीवानामंशाभासत्वे क्वचिदपि कार्ये शक्तिर्न स्यादित्यतोस्तीत्याह ॥ ॥ मनइति । प्रकृतिस्थानि-प्रकृतिकार्यशरीरस्थानि मनःषष्ठानि-श्रोत्रादिपंचेंद्रियाणि ममांशोजिवभूतः-विषयान्प्रति कर्षति-प्रवर्तयति स्थितिदशायां । देहा-

वासिवेलायां तु मूलकारणात्। उत्क्रांतौ तु शरीरात्कर्षति ७ श्रीपांगरीआचार्याणां व्याख्या। अस्याद्वैतमतेनार्थः-कृष्णाख्यं ब्रह्म अर्जुनाख्यमधिकारिणमुपदिशति ॥ ॥ ममैवेति । ममैव नान्यस्य अंशः-स्वरूपांशः जीवलोके-पृथ्वीतले, जीवभूतः-जीवाख्यः पदार्थः सोपि नाधुनिकः किंतु सनातनः-अनादिसिद्धः । मनः षष्ठं येषु तानि इंद्रियाणि-ज्ञानेन्द्रियाणि, प्रकृतिस्थानि-देहस्थानि कर्षति-नाटयतीति । अत्र विचारः । कृष्णाख्यः किं ब्रह्मणोभिन्नः अभिन्नोवा । नाद्यः । "अहोभाग्यमहोभाग्यं नंदगोपव्रजौकसां । यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनमि"ति भागवतवाक्यविरोधात् । न द्वितीयः । तस्य निर्धर्मकत्वेन वचनायोगात् । नोभयथापि कृष्णस्य उपदेशकत्वं सिध्यति । तथा । अद्वैतमते कृष्णादर्जुनोभिन्नोऽभिन्नोवा । नाद्यः अपसिद्धांतात् । औपाधिकभेदांगीकारेण नापसिद्धांतइति चेन्न । उपाधेः निर्धर्मकब्रह्मणि संयोगेन जीवसिद्धिर्वा, जीवे संयोगेन वा, उभयसंयोगेन वा, उभयसंयोगं विनैव वा । नाद्यः असंगश्रुतिविरोधात्, नचोपाधेर्मिथ्यात्वानंगीकारेण विरोधाभावः । उपाधौ वर्तमानं यन्मिथ्यात्वं तत्सत्यं मिथ्या वा । नाद्यः । अद्वैतमते एकस्य ब्रह्मणएव सत्यत्वांगीकारेण उपाधिगतमिथ्यात्वस्य सत्यत्वांगीकारेण अपसिद्धांतात् । न द्वितीयः । मिथ्यात्वस्य मिथ्यात्वे उपाधेः सत्यत्वसिद्धेः, तस्मात् श्रुतिविरोधोऽपरिहार्यः । न द्वितीयः । उपाधिं विना जीवत्वायोगात् जीवं विना उपाधिसंगासिध्या अन्योन्याश्रयात् । न तृतीयः । उभयशब्देनैव भेदसिद्धेः अंततः आत्माश्रयाच्च । न चतुर्थः । भेदस्यौपाधिकत्वे अकारणकार्योत्पत्तिप्रसंगात् । तस्मान्नापसिद्धांतसंभवात् अर्जुनस्योपदेश्यत्वसिद्धिः । श्लोकार्थेपि विचारः सद्भिर्द्रष्टव्यः । ममैवेत्यस्मच्छब्दप्रयोक्ता कृष्णः जीवो वा ब्रह्म वा आद्ये जीवस्य जीवांशत्वांगीकारे अस्माकं का हानिः, तव च कोलाभः । द्वितीये ब्रह्मणोनिर्धर्मकत्वेन वक्तृत्वानुपपत्तेः । कृष्णाख्यं सगुणं ब्रह्म, निर्धर्मकं तु तदन्यत् । इतिचेन्न "रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् । सत्तामात्रं निर्विशेषं निरीहं सत्वं साक्षाद्विष्णुरध्यात्मदीपम्"इति भागवतविरोधात् । तस्मादुभयथाप्यनुपपत्तिः । तथा एवशब्दस्य अन्ययोगव्यवच्छेदार्थकत्वे अन्यः किं ब्रह्मोत जीवोऽथ जडः । नाद्यः तवानभिमतसिद्धेः । न द्वितीयः । देवयोग्यातिरिक्तानां जीवानां अंशाभावेन भागासिद्धेः । न तृतीयः । जडस्य जीवरूपांशाभावेन प्राप्त्यभावात् निषेधानुपपत्तेः । निषेधस्य प्राप्तिपूर्वत्वात् । तस्मान्नैव शब्दस्योपयोगः । ब्रह्मणोंशोप्ययुक्तः अखंडत्वात् । विशेषाद्युज्यतइति

चेन्न । निर्विशेषत्वांगीकारात् । किंच जीवलोकशब्देन किं भूलोकोगृह्यते उत जीवसमुदायोऽथवा देहः । नाद्यः । यवादिस्थानां कृष्णांशत्वा-
नुपपत्तेः । न द्वितीयः । सप्तम्यनुपपत्तेः । न तृतीयः । मृतस्य अंशत्वानुपपत्तेः । देहशब्देन लिंगदेहोगृह्यते इति हेतोर्मृतस्यापि तद्वत्त्व-
मितिचेत् । लिंगदेहस्थितोंशः किं स्वरूपभूतः उत प्रतिबिंबरूपः । नाद्यः । "रूपंरूपंप्रतिरूपोबभूवे"ति श्रुतिव्याकोपात् । न द्वितीयः ।
ऐक्यानुपपत्तेः । नहि प्रतिबिंबं बिंबे निविशतीति केनचिद्दृष्टं । तस्मान्न जीवलोकपदोपादानं युज्यते । जीवभूतइत्यपि अंशविशेषणं
न युज्यते । न जीवः अजीवः अजीवः जीवइव स्थितइति जीवभूतइति विग्रहेण साम्यसिध्या तादात्म्यासिद्धेः । किंच साधनपूर्तिमतो-
जीवस्य ब्रह्मैक्यरूपसायुज्यमुक्तौ सिद्धायां पुनः कल्पांतरे "यथापूर्वमकल्पयदि"ति श्रुत्या पुनर्ब्रह्मणः संसरणप्राप्तौ मुक्तांशं विहाय
ब्रह्मविद्यया संसरति मुक्तांशेन सहैव वा । आद्ये ऐक्यानुपपत्तिः ब्रह्मणोऽखंडत्वहानिश्च । न द्वितीयः । "नचपुनरावर्तते यद्गत्वा न
निवर्तते"इति श्रुतिस्मृतिविरोधात् । तस्मादैक्यानुपपत्तिः । सनातनशब्देनानादित्वमुच्यते । अनाद्यंशस्य अंतेप्यंशत्वानपगमात् । अंशिना
ब्रह्मणा साकमैक्यं कथं घटेत् । पूर्वसिद्धस्योत्तरत्राप्यसिद्धेः । अस्तु ज्ञानवदिति चेन्न ज्ञानस्य अज्ञानावरणेन प्रतिबंधे जातेपि श्रुतादिना
तन्निवृत्तौ जीवस्य चिद्रूपतया पूर्वसिद्धस्यैवाभ्युदयात् । नासिद्धसिद्धिः । अपिच जीवस्य अनादित्वमेव दुर्घटं त्वन्मते । अनादेर्भावस्य
सांतत्वायोगात् । तदनादित्वं षण्मध्येऽस्मदीयैरंगीकृतमितिचेत् न । 'वासुदेवोवा इदमग्रआसीन्न ब्रह्मा न च शंकरः" । "नान्यद्यत्स-
दसत्परमि"ति श्रुतिस्मृतिव्याकोपात् । अद्वैतमते मनसः इंद्रियाणां प्रकृतेः कर्षणक्रियायाश्च मिथ्यात्वेन उत्तरार्धस्य कथनायोगः । नहि
मिथ्यापदार्थः आकृष्टुं शक्यते । तथात्वेन शुक्तिरजतस्याप्याकर्षणप्रसंगात् । नापि हि भ्रमज्ञानविषयस्य क्रियाविषयत्वं । शुक्तिर-
जतस्यापि तापनताडनसहत्वापातात् । तस्मात्त्वन्मते श्लोकार्थानुपपत्तिः । तर्हि कोर्थस्तस्येतिचेदुच्यते ॥ ॥ पूर्वश्लोके कृष्णेन स्वस्व-
रूपस्य सूर्याद्यप्रकाश्यत्वं गंतुरपुनरावृत्तिकारकत्वं चोक्तं । तत्र कोसौ सूर्यादिकस्य च प्रकाशे इत्यतआह पूर्वार्धेन । ममैवेति । प्रथम-
प्रश्नस्योत्तरं ममैवांशइति । द्वितीयस्योत्तरं जीवलोकइति । जीवस्य लोके-प्रकाशे "लुकप्रकाश"इति धातोः ईष्टे इति शेषः । उत्तरार्धोक्त
गंतुरपुनरावृत्तिकारकत्वं भगवतः कथमित्यतआह त्रिभिः पादैः । जीवभूतइति । सनातनः पुराणपुरुषोभगवान् प्रकृतिस्थानि जडश-

रीरस्थानि मनःषष्ठानींद्रियाणि-मनसा सह षड्ज्ञानेंद्रियाणि जीवभूतः-जीवस्य भूः-चिच्छरीरं तस्मात् कर्षति-आकृष्य वियोजयतीति यावत् । जडेंद्रियवियोगे एव मुक्तानामपुनरावृत्तिकारकभगवत्स्वरूपप्राप्तिर्भवतीति भावः । यद्वा-यस्य सूर्याद्यप्रकाशत्वादिकमुक्तं सक-इत्यतआह ॥ ॥ ममैवेति । ममैवांशः-स्वरूपभूतः ना-पुरुषरूपः अतनः-"अतसातत्यगमने"इति धातोः व्याप्तोनित्यज्ञानी वा जीवभूतः-जीवे भूतः 'भूसत्तायामि'ति धातोः स्थितइति यावत् तथा सत् प्रकृतिस्थानि-स्वभावस्थितानि-स्वभावतोविषयासक्तानीति यावत् । मनःषष्ठानि इंद्रियाणि जीवलोके-जीवप्रकाशके भगवति विषये कर्षति-आकर्षति-भगवद्विषयकाणि करोतीति यावत् । अपुनरावृ-त्तिधाम च अनेन सत्कृत्यैव प्राप्यमिति सूचितम् । अथवा अपुनरावृत्तिधामगंता कइत्यत आह ॥ ॥ ममैवेति । जीवलोके-जीवानां-प्र-काश्यानां जडानां च समाहारः जीवलोकं तस्मिन् जीवजडमध्ये इत्यर्थः । जीवभूतः-जीवरूपएव न जडरूपः ममांशः-प्रतिबिम्बरूपांशः

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गंधानिवाशयात् ॥ ८ ॥ ॥

सनातनः-नादनेन-विधिनिषेधात्मकशब्दरूपेण वेदेन सहितः सनादनः सनादनएव सनातनः । "वर्णागमोवर्णविपर्ययश्च तथा परौ वर्णवि कारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तम्"इति ऋग्भाष्ये । वेदोक्तविधिनिषेधपात्रभूतइत्यर्थः । तदुक्तम् निषेधविधिपात्रत्वात् सनातनइतीरित"इति महाविष्णुपुराणे । मनआदिषडिंद्रियाणि प्रकृतिस्थानि-प्रकृष्टा-सर्वोत्कृष्टा कृतिर्यस्य सप्रकृतिर्भ-गवान् तत्स्थानि-तदाश्रितानि तदधीनानीति यावत् कर्षति-प्रवर्तयति । सएव तद्धाम गन्तेति भावः ॥७॥ किं स्वसामर्थ्येन नेत्याह ॥ ॥ शरीरमिति । ईश्वरःशरीरं-जीवशरीरं यदाप्नोति तदैव जीवस्तत्प्रेरितः सन्कर्षतीत्यर्थः । स्वातंत्र्येण तु ईश्वरएव सर्वाणींद्रियाणि विषयान्प्रति प्रयुङ्क्ते । तदाह सूत्रे । ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ इत्यादि । तथा यच्च यदाप्युत्क्रामतीश्वरः जीवमादायेति योज्यं । तदैतानि

१-अ० २ पा० ४ अ० १० सू० १५-"योग्नौ तिष्ठन् यत्तेजसि तिष्ठन्"इति अग्न्यादिरूपज्योतिराद्यधिष्ठानं ब्रह्म, तत्तु-तदेवब्रह्म, ज्योतिराद्यधिष्ठानं-ज्योतीरूपचक्षुरादि नियामकम् ॥ तत्कारणमितियावत् तदामननात्-यश्चक्षुषि तिष्ठन्नित्यादिश्रुतेः, ॥



इंद्रियाणि सूक्ष्मेंद्रियांशान् आशयात्पुष्पादिस्थानात् गंधानिव गंधवतः-पुष्पाद्यवयवानिव भागशोगृहीत्वा संयाति लोकांतरमित्यर्थः । "नचअग्निं वागप्येती"त्यादिविरोधः । तस्य भागविषयत्वात् । ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ इति सूत्रात् । अतएव गंधानिवेति दृष्टांतोक्तिः । अन्यथा वायुनानेकेष्वाकृष्यमाणेषु गंधान्-गंधवतः पुष्पाद्यवयवानित्युक्तिर्न स्यात् । सर्वेंद्रियप्रेरणस्यापीशाधीनत्वान्न तेषां प्रतिपातिर्जग-द्वृक्षच्छेदनशक्तेति भावः । यद्वा यद्यदा जीवः शरीरमाप्नोति तदेश्वरः एतानि गृहीत्वा शरीरं संयाति जीवः यदोत्क्रामति च तदेश्वरः एतानि गृहीत्वा लोकांतरं संयातीति योजना ॥ ८ ॥ इंद्रियेषु प्रवर्तकत्वेन स्थितस्य हरेरिंद्रियद्वारा विषयभोगमाह ॥ ॥ श्रोत्रमिति ।

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥ उत्क्रामंतं स्थितं वापि भुंजानं वा गुणान्वितम् । विमूढानानुपश्यंति पश्यंति ज्ञानचक्षुषः ॥ १० ॥ यतंतोयोगिनश्चैनं-पश्यंत्यात्मन्यवस्थितम् । यतंतोप्यकृतात्मानो नैनं पश्यंत्यचेतसः ॥ ११ ॥ यदादित्यगतं तेजोजगद्भा-सयतेऽखिलम् । यच्चंद्रमसि यच्चाग्नौ तत्तेजोविद्धि मामकम् ॥ १२ ॥ ॥ ॥

अधिष्ठायैवेत्यन्वयः । प्रवर्तकः सन्नेवेत्यर्थः विषयान्-शब्दादीन् ॥ ९ ॥ जीववदशुभभोगोप्यस्ति किमित्यतः शुभानेव भुङ्क्तइति वद-न्कुतोनोपलभ्यतइति शंकां निराह ॥ ॥ उत्क्रामंतमिति । गुणान्वितं शुभयुक्तमेवेत्यर्थः । विमूढाइत्यनुपलंभे हेतुक्तिः ॥१०॥ यत्ने कृतेप्यनुपलंभः कथमित्यतआह ॥ ॥ यतंतइति । योगिनोज्ञानोपायानुष्ठातारोयतंतोयतमानाः ज्ञानं प्राप्यैनं पश्यंति । अशुद्धबुद्धयो-यतमानाअपि अचेतसो-अविवेकिनोनैनं पश्यंतीत्यर्थः ॥ ११ ॥ अधश्च मूलान्यनुसंततानीति यत्सर्वांतर्यामित्वरूपं विज्ञानमुक्तं । यच्चो-

१ अ० ३१ पा० १ अ० सू० ४-अग्न्यादिगतिश्रुतेरितिचेन्न-"अग्निंवागप्येति, वातंप्राणः"इति प्राणानामग्न्यादीन्प्रति श्रुतेर्न प्राणगतिः जीवेन सहेतिचेन्न, । भाक्तत्वात्-भागविषयत्वात् "पुरुषस्य मृतौ ब्रह्मन् प्राणाभागतएवतु ॥ अधिदैवं प्राप्नुवंति भागतोनुव्रजंति तम् ॥ इतिस्मृतेः ॥

ध्वशब्देन सर्वोत्तमत्वमुक्तं तद्द्वयमध्यायशेषेण प्रपंचयाति ॥ . ॥ यदादित्येत्यादिना । तेजः-जगत्प्रकाशनशक्तिः । मामकं-मदीयं मदधीनमित्यर्थः । "तमेव भांतमनुभाति सर्वमि"त्यादेः । ॐ अनुकृतेस्तस्यच ॐ इति सूत्रात् ॥ १२ ॥ अहं गां-भूमिमाविश्य ओजसा-स्वशक्त्या भूतानि धारयामि । अमृतरसात्मकः सौम्यत्वात्सोमनामा सोमगः सन्सर्वाओषधीः सस्यादीनि पुष्णामि-वर्धयामि च ॥ १३ ॥ किंचाहं विश्वनरसंबंधितया वैश्वानरनामा-जाठरवैश्वानराग्निस्थः सन् प्राणिनां देहमाश्रितः प्राणापानाभ्यां-मुख्यप्राणरूपाभ्यां सम्यग्युक्तः भक्ष्यभोज्यलेह्यपेयभेदेन चतुर्विधं अन्नं पचामि-जीर्णं करोमि ॥ १४ ॥ किंच सर्वस्य हृदि सन्निविष्टोहं । मत्तएव च स्मृतिः अनुभवरूपं

गामाविश्य च भूतानि धारयाम्यहमोजसा । पुष्णामि चौषधीः सर्वाः सोमोभूत्वा रसात्मकः ॥ १३ ॥
अहं वैश्वानरोभूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥ सर्वस्य
चाहं हृदि सन्निविष्टो मत्तःस्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेववेद्यो वेदांतकृद्वेदविदेव चाहम् ॥१५॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षरएव च । क्षरः सर्वाणि भूतानि कूटस्थोक्षरउच्यते ॥ १६ ॥ ॥

ज्ञानं अपोहनं विपर्ययश्च भवति । अहमेव परममुख्यवृत्त्या सर्वैश्च वेदैः वेद्यः । वेदांतकृत् वेदानामंतोनिर्णयोयस्मात्सवेदांतोब्रह्मसूत्रसंदर्भः । तस्य व्यासरूपेण कर्ता वेदवित् तत्वतोवेदार्थज्ञानवानहमेवेत्यर्थः । "मां विधत्ते मामि"त्यादेः ॥ १५ ॥ एवं सर्वांतर्यामित्वं प्रपंच्याधुना सर्वोत्तमत्वं प्रपंचयाति ॥ . ॥ द्वाविति । इमौ-प्रमाणप्रमितौ पुरुषो-चेतनौ लोके-ईशितव्यवर्गे । द्वावेतौ काविस्यतआह ॥ ॥ ॥ क्षरश्चेति । सर्वाणि भूतानि ब्रह्मादिजीवराशिः शरीरक्षरणहेतुनाक्षरउच्यते । कूटस्थः-कूटमाकाशं तद्वत् स्थितः पुरुषः, अक्षरके-

१ अ० १-पा० ३ अ० ६ सू० २२-" तमेव भांतमनुभातिसर्वं"मिति सर्वादेस्तदधीनभानश्रवणात् "तस्य भासा सेर्वमिदं विभाति"इति सर्वस्यतत्प्रकाश्यत्वोक्तेश्च परमात्मैवानिर्देश्यसुखरूपः । नहि ज्ञानिसुखंमनुभाति सर्वं न च तद्भासा, "अहंतत्तेजोरश्मीन्"इति नारायणभासाहिसर्वंभाति, ॥

हत्वात् श्रीरक्षरउच्यते । "पुल्लिंगेनोच्यते स्त्री च पुंवच्छक्तिमती काचिदि"ति छांदोग्यभाष्योक्तेः ॥ १६ ॥ यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह ॥ ॥ उत्तमइति । क्षराक्षराभ्यामिति विपरिणाम्यअनुषज्यते । "उत्तमः पुरुषस्तु ताभ्यामन्यः । नत्वनयोरेकः पुरुषोत्तमइत्यर्थः । उक्तार्थे श्रुत्यादिसंमतिमाह ॥ ॥ परमेति । आत्मात्र चेतनः क्षराक्षरौ चेतनमात्रं उत्तमपुरुषस्तु परमचेतनइति । "चेतनश्चेतनानां" । "ब्रह्माणि जीवाः सर्वेपी"त्यादिश्रुतिषूदाहृतइत्यर्थः । अतस्ताभ्यामन्यः पुरुषोत्तमइतिभावः । उक्तार्थे युक्तिमप्याह ॥ ॥ यइति । यः भूर्भुवःस्वरिति लोकत्रयमाविश्य बिभर्ति-धत्ते । योयस्य धारणपोषणकर्ता सतस्मादुत्तमोन्यश्च दुष्टइति

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । योलोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः ॥ १७॥ यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥ योमामेवमसंमूढो जानाति पुरुषोत्तमम् । ससर्वविद्भजाति मां सर्वभावेन भारत ॥ १९ ॥ ॥ ॥ ॥

भावः । किं लोकनाशे प्रविष्टस्यापि नाशोस्तीत्यतउक्तं ॥ ॥ अव्ययइति । तत्कथमित्यतोचिंत्यशक्तित्वादित्याह ॥ ॥ ईश्वरइति । एतेन क्षराक्षराभ्यामुत्तमोन्यः किं नामकइत्यपि शंका परास्ता ॥ १७ ॥ सार्कि त्वत्तोन्यइत्यतोहमेवेति सप्रमाणकमाह ॥ ॥ यस्मादिति । यस्मात्क्षरं चातीतः अक्षरादुत्तमोतः कारणात् । लोके-पौरुषेयग्रंथे च प्रथितः-प्रसिद्धः पुरुषोत्तमोहमेवेत्यर्थः ॥ १८ ॥ तात्पर्यद्योतनायोक्तार्थे ज्ञानिनः फलमाह ॥ ॥ योमामिति । योधिकारी मामेवं क्षराक्षरोत्तमत्वेन वेदादिषु प्रथितत्वप्रकारेणासंमूढः सर्वोत्तमत्वं मिथ्याभूतमुच्यतइति मोहरहितः सन्पुरुषोत्तमं-क्षराक्षरपुरुषाभ्यामुत्तमं जानाति ससर्ववित्-सर्वशास्त्रार्थज्ञानी सर्वभावेन-सर्वप्रकारेण मां

भजति ॥ १९ ॥ एतच्च न यस्मै कस्मै चिद्वाच्यमिति भावेनाह ॥ इतीति । इति अधश्च मूलान्यनुसंततानीत्यादिनोक्तप्रकारेणेदं सर्वांतर्यामित्वादिकं । यद्वा उर्ध्वमूलमित्यादिनोक्तप्रकारेणेदं जगद्वृक्षमूलत्वादिकं शास्त्रं शिक्षणीयं गुह्यतमं-अतिगोप्यं मयोक्तं । ततः

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रशब्दितजगत्स्वरूपस्य तदत्ययोपायभूतभगवदादिज्ञानवर्णनं ( पुराणपुरुषोत्तमयोगो ) नाम पंचदशोऽध्यायः ॥ १५ ॥ ॥

किमित्यतआह ॥ ॥ एतदिति । एतत्प्रागुक्तं सर्वं बुद्ध्वा बुद्धिमानपरोक्षज्ञानी स्यात् । कृतकृत्योमुक्तश्च स्यादिति ॥ २० ॥ ॐइति श्रीमद्भगवद्गीतार्थसंग्रहे श्रीराघवेंद्रयतिकृते क्षेत्रशब्दितजगत्स्वरूपस्य तदत्ययोपायभूत भगवदादिज्ञानवर्णनं नाम पंचदशोऽध्यायः ॥१५॥





ॐ ॥ पूर्वाध्याये ''निर्मानमोहा'' इत्यादिना संक्षेपेणोक्तस्य पुमर्थयोर्ज्ञानमोक्षयोः साधनस्य ''यतंतोप्यकृतात्मानइत्यादिना'' चोक्तस्य पुमर्थविरोधिनश्च देवासुरलक्षणरूपत्वात्तत्प्रपंचनमस्मिन्नध्याये क्रियतइति पूर्वसंगतिरध्यायभेदश्च ज्ञेयः । विरोध्युक्तिश्च साधनमनुतिष्ठता तत्त्यागोवश्यं कार्यइति भावेनेति बोध्यं । तत्रादावभ्यर्हितत्वाद्देवलक्षणं तावदाह ॥ ॥ अभयमित्यादिश्लोकत्रयेण । अभयं स्वतोन्यस्यान्यस्माच्च स्वस्य भयाभावः । ''यस्मान्नोद्विजते लोकोलोकान्नोद्विजते च य''इत्युक्तेः । सत्वसंशुद्धिः-चित्तप्रसादः । ज्ञानयोगव्यवस्थितिः-ज्ञानोपायनिष्ठता । दानं-पात्रे द्रव्यादित्यागः । दमइंद्रियनिग्रहः । यज्ञोज्योतिष्टोमादिः । देवयज्ञपितृयज्ञादिर्वा । स्वाध्यायोवेदाध्ययनं । तपोब्रह्मचर्यादि । आर्जवं-मनोवाक्कर्मस्वैकरूप्यं ॥ १ ॥ अहिंसा-परप्राणावियोजनं । सत्यं-यथार्थवचनं । अक्रोधः-परपीडा-

श्रीभगवानुवाच । अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तपआर्जवम् ॥ ॥ १ ॥ अहिंसा सत्यमक्रोधस्त्यागः शांतिरपैशुनम् । दयाभूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ॥२॥ तेजः क्षमा धृतिः शौचमद्रोहोनातिमानिता । भवंति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥ ॥ ॥

करचित्तविकाराभावः । त्यागः-औदार्यं । शांतिः-भगवन्निष्ठता । अपैशुनं-परोपद्रवनिमित्तदोषाणां राजादेरकीर्तनं । भूतेषु प्राणिषु दयापरहितकरश्चित्तगतोधर्मविशेषः परदुःखासहिष्णुत्वं वा । अलोलुत्वं-विषयेषु रागाभावः । आत्महिंसकेष्वप्यविरोधोमार्दवं-अक्रौर्यं वा । ह्रीरकार्यकरणे लज्जा । अचापलं-स्थैर्यं ॥२॥ तेजः-परैरनभिभवः । क्षमा-क्रोधाभावेन सह अपकर्तुरनपकृतिः । धृतिः-अनातंकः । शौचं मृत्तिकादिभिर्बाह्यशौचं, भगवत्स्मृत्यादिनांतरशौचंच । अद्रोहः-परवृत्त्यननुरोधः । नातिमानिता-अहंकाराराहित्यं । एते गुणाः दैवीं देवसंबंधिनीं संपदमभिजातस्य-प्राप्तस्य भवंति । अभिरयं लक्षणेत्थंभूताख्यानेत्युक्तलक्षणार्थकप्रत्यर्थे कप्रत्यर्थे वर्तते इति तस्य कर्मप्रवचनीयसंज्ञायां कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीयोपपत्तिः । तथाचैतएव गुणाः मुमुक्षुणावश्यमुपादेयाइति भावः ॥ ३ ॥

त्यागायासुरलक्षणमाह ॥ ॥ दंभइति । आत्माल्पत्वं ज्ञात्वापि महत्त्वप्रदर्शनं दंभः । दर्पः-सत्यपि भयकारणे मदात्तदभावदर्शनं । अभि-
मानः-प्रमाणातिक्रमः । क्रोधः-परपीडाकरचित्तविकारः । पारुष्यं-निष्ठुरत्वं । आसुरीं संपदमभिजातस्येत्यस्य प्रागिवार्थः । तेन जातस्ये-
त्यकर्मकत्वात्संपदमिति न द्वितीयानुपपत्तिदोषः ॥४॥ दैवसंपदादेः फलं संदर्शयन्नर्जुनस्यासुरस्वभावशंकां वारयति ॥ ॥ दैवीति । अभि-
जातोसि प्रागिवार्थः । जातस्य तव दैवीसंपल्लक्षणमित्यर्थः । वृक्षं प्रति विद्योततइत्यत्र वृक्षइव प्रद्योतस्येति । अतोमा शुचः-शोकं
मा कार्षीः निबंधनं नीचस्थाने तमसि निवासः विमोक्षाय विविधमोक्षायेत्युक्त्या मोक्षस्य नानात्वमुच्यते ॥ ५ ॥ ननु सर्गाणामतिबहु-

दंभोदर्पोभिमानश्च क्रोधः पारुष्यमेव च । अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥ दैवी संपद्वि
मोक्षाय निबंधायासुरी मता । मा शुचः संपदं दैवीमभिजातोसि पांडव ॥ ५ ॥ द्वौ भूतसर्गौ लोकेऽस्मिन्
दैवआसुर एव च । दैवोविस्तरशः प्रोक्तः आसुरं पार्थ मे श्रुणु ॥६॥ प्रवृत्तिं च निवृत्तिं च जना न विदु-
रासुराः । न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥ असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

त्वाद्देवासुरयोरित्युक्तिः कथमित्यतः शुभाशुभफलाधिक्यादिभाक्त्वरूपपूर्वश्लोकोक्तोपाधिद्वयविवक्षया द्वयोरेवोक्तिरिति भावेनाह ॥ ॥ द्वाविति ।
दैवआसुरश्चेति द्वावेव प्राणिनां सर्गौ-सृष्टिभूतसर्गौ प्राणिस्वभावाविति वा । तदुभयजिज्ञासायामाह ॥ ॥ दैवइति । श्रृणिति विस्तरशः
इत्यनुषंगः ॥ ६ ॥ तदाह प्रवृत्तिमित्यादिद्वादशश्लोकैः । आसुराजनाः विहिते प्रवृत्तिं निषिद्धे निवृत्तिं च न विदुः । तेषु शौचाचार-
सत्यानि न विद्यंते तात्पर्यद्योतनाय नञ्त्रयोक्तिः ॥ ७ ॥ किंच जगदसत्यं अत्र सत्यप्रतिष्ठेश्वरशब्दाविष्णुपराः । नञ्बहुव्रीहिः । जग-
द्विशरणकर्तृतया सत्यपदवाच्यविष्णुहीनमाहुः । अनीश्वरं-स्वामिहीनमाहुः । जगत्सृष्ट्यादिकर्तारं ये न जानंति तइति चाहुरासुरजनाइत्यनु-

षंगः । "अपरस्परसंभूतम्" "अन्नाद्भवंति भूतानी" ति तृतीयोक्तदिशा परस्परसंभूतं न भवतीत्यर्थः । यद्वा जगदसत्यं-सत्यं न-मिथ्ये-त्यर्थः । अतएव शुक्तिरूप्यवन्न प्रतितिष्ठतीत्यप्रतिष्ठं-ज्ञानबाध्यं । अनीश्वरं-नियंतृहीनं । अपरस्परसंभूतं-परेभ्यः संभवहीनं एकस्मादे-कस्य जनिर्नेति यावत् । किं तर्हीति प्रश्नस्योत्तरं ॥ ॥ अन्यदिति । सदसद्भ्यामिति शेषः-सदसद्विलक्षणमित्यर्थः । केन जायतइ-त्यतउक्तं । कामहैतुकं कामहेत्वविद्यापरिणामरूपं ॥ ८ ॥ एतां दृष्टिमाश्रित्य नष्टात्मानः-दुष्टचित्ताः अल्पज्ञानाः घोरकर्मनिरताः जगतः अहिताः-शत्रवःक्षयायानिष्टप्राप्तये कलियुगादौ प्रभवंति ॥ ९ ॥ दुष्पूरं-दुःखेन पूरणीयं काममिच्छामाश्रित्य दंभमानमदैर्युक्ताः

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥ काममाश्रित्य दुष्पूरं दंभमानमदान्विताः । मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्ततेऽशुचिव्रताः ॥१०॥ चिंतामपरिमेयां च प्रल-यांतामुपाश्रिताः । कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥ आशापाशशतैर्बद्धाः कामक्रोधप-रायणाः । ईहंते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥ इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् । इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥ ॥ ॥ ॥ ॥



संतः मोहात्-मिथ्याज्ञानस्वभावात् कुशास्त्राभ्यासजन्यविपरीतनिश्चयात् गृहीत्वा-आदायासदर्थान् ज्ञात्वेतिवा । अशुचिव्रताः क्षुद्रभोगाय प्रव-र्तंते ॥ १० ॥ किंच प्रलयांतां-मरणांतां अपरिमेयां-परिमातुमशक्यां चिंतामुपाश्रिताः कामोपभोगपरमाः काम्यमानवस्त्वनुभवएव पर-मोयेषांते विषयभोगैकरताः एतावदैहिकमेव फलं नान्यदामुष्मिकमस्तीति निश्चयवंतः ॥ ११ ॥ आशाएव पाशास्तेषां शतैर्बद्धाः काम-क्रोधावेव परं अयनमेषांते कामक्रोधपरायणाः । कामभोगार्थं काम्यविषयानुभवार्थं अन्यायेन-चौर्यादिनार्थसंचयान्द्रव्यसमूहानीहंते-वांछंति ॥ १२ ॥ चिंताप्रकारं दर्शयति ॥ ॥ इदमित्यादिना त्रयेण । इदं धनं अद्य मया लब्धं इदं मनोरथं प्राप्स्ये-प्राप्स्यामि ।

इदं धनं अस्ति इदमपि धनं मे पुनर्भविष्यति ॥ १३ ॥ असौ शत्रुर्मया हतः अपरानन्यानपि शत्रून् हनिष्ये च । अहमीश्वरः-परमेश्वरः भोगी-ऐहिकामुष्मिकभोगसंपन्नः सिद्धः-कृतकृत्यः बलवान्समर्थः ॥ १४ ॥ आढ्यः-धनादिसंपन्नः अभिजनवान्-कुलीनोस्मि । मया सदृशोन्यः कोस्ति न कोपि । यक्ष्ये-यागादिधर्माननुष्ठास्यामि । भूरिदक्षिणान्नादि दास्यामि । मोदिष्ये-संतोषं प्राप्स्यामि इत्येवं रूपेणाज्ञानविमोहिताः ॥ १५ ॥ एवं चिंताप्रकारमुक्त्वा तेषां फलमाह ॥ ॥ अनेकेति । अनेकचिंतायुक्तमनसा विशेषभ्रांतिमंतः पुत्रमित्रादिविषयमोहाख्यजालेन समावृताः विषयभोगेष्वतितरामासक्ताः संतः अशुचौ नरके पतंति ॥ १६ ॥ यागादिकुर्वतां कथं नरके पात-

असौ मया हतः शत्रुर्हनिष्ये चापरानपि । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥१४॥ आढ्योऽभिजनवानस्मि कोन्योऽस्ति सदृशो मया । यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥ अनेकचित्तविभ्रांता मोहजालसमावृताः । प्रसक्ताः कामभोगेषु पतंति नरकेऽशुचौ ॥ १६ ॥ आत्मसंभाविताः स्तब्धा धनमानमदान्विताः । यजंते नामयज्ञैस्ते दंभेनाविधिपूर्वकम् ॥ १७ ॥ अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः । मामात्मपरदेहेषु प्रद्विषंतोऽभ्यसूयकाः ॥ १८ ॥ ॥ ॥

इत्यतआह ॥ ॥ आत्मेति । आत्मनैव-स्वेनैव संभाविताः-बहुमताः वयं पूज्याइति मन्यमानाइति यावत् । अतएव स्तब्धाः-अनम्राः धननिमित्तगर्वदर्पाभ्यां उपेतास्ते अविधिपूर्वकं दंभेन स्वमहित्वप्रदर्शननिमित्तेन यज्ञैर्ज्योतिष्टोमादिभिर्यजंते नाम । न कृतार्थबुद्ध्या अतो नरकप्राप्तिस्तेषां इति भावः ॥ १७ ॥ सर्वकर्मकारयितारं सर्वांतर्यामिणं त्वां कुतोन यजंतइत्यत आह ॥ ॥ अहंकारमिति । अहंकारादिसंश्रिताः संतः आत्मदेहे परदेहेषु च नियामकतया स्थितं मां प्रद्विषंतः । यदि ईश्वरः कारयिताऽस्ति तर्हीदानीमकुर्वाणं मां



कारयतु कुर्वाणं च विघातयतु इत्येवं भगवदपलापरूपप्रद्वेषं कुर्वंतः । अभ्यसूयकाः-निर्दोषे दोषान्वदंतः गुणपूर्णे गुणहीनतां वदंतः यजंतइत्यनुषज्यते ॥ १८ ॥ नरके पतंतीत्येतावदेव न तेषां फलं । किंतु किंचित्कालं संसारमनुभूय पश्चान्नित्यनरकमपि मय्येव प्राप्नुवंतीत्याह ॥ ॥ तानिति द्वाभ्यां । तान्प्रवृत्तिं चेत्यादिनोक्तान्द्विषतः क्रूरान् अतएवाशुभान्नराधमान्संसारेषु तत्राप्यासुरयोनिषु अजस्रं पुनः पुनः क्षिपामि-स्थापयामि ॥ १९ ॥ ततोमूढाः-तामसस्वभावाः जन्मनि जन्मनि-अनेकजन्मसु आसुरीं योनिमापन्नाः मामप्राप्यैवाधमां-नित्यनरकलक्षणां गतिं यांति ॥ २० ॥ उक्तेषु पुमर्थविरोधिषु प्रधानदोषत्रयमवश्यं त्याज्यमित्याह ॥ ॥ त्रिविधमिति ।

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिम् ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥ एतैर्विमुक्तः कौंतेय तमोद्वारैस्त्रिभिर्नरः । आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥ यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥ ॥ ॥

कामः क्रोधः लोभइति इदं त्रिविधं नरकसाधनं । अतएव आत्मनोनाशनं-अनर्थप्रापकं । तस्मादेतत्त्रयं त्यजेत् । ततश्च कारणाभावान्नरकाणामप्राप्तिरिति भावः ॥ २१ ॥ न केवलं कामादित्यागे नरकाप्राप्तिः परमपुमर्थप्राप्तिश्चास्तीत्याह ॥ ॥ एतैरिति । तमोद्वारैर्नरकहेतुभिस्त्रिभिरेतैः कामक्रोधलोभैर्विमुक्तोनरः आत्मनः श्रेयः पुमर्थसाधनमाचरति । ततः परां गतिं-मोक्षं याति ॥ २२ ॥ श्रेयःसाधनानुष्ठाने अंगातरं विधातुं तदकरणे बाधकं तावदाह ॥ ॥ यइति । यः शास्त्रोक्तविधानमुत्सृज्य कामकारतः स्वेच्छामात्रेण यत्र

क्वचित्प्रवर्तते सिद्धिं-पुमर्थोपायं नावाप्नोति । सुखमैहिकं परां गतिं-मोक्षं वा नाप्नोति ॥ २३ ॥ कुतः शास्त्रविध्यतिक्रमे संसिद्धि-सुखाद्यभावइति शंकां निरस्यन्नंगांतरं विधत्ते ॥ ॥ तस्मादिति । यस्मादिदं कार्यमिदमकार्यमिति व्यवस्थायां ते-तव विवेकिनः शास्त्रं

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥
ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ( देवासुरसंपद्वि भागो ) ज्ञानमोक्षयोः साधन, विरोधरूप, देवासुरलक्षणप्रपंचनं नाम षोडशोऽध्यायः ॥ १६ ॥ ॥

प्रमाणं । तद्व्यतिक्रमे च दोषः तस्मादिह-लोके शास्त्रविधानोक्तं कर्म कर्तुमर्हसि इति ॥ २४ ॥ इति श्रीमद्भगवद्गीतार्थसंग्रहे राघवेंद्रयतिकृते श्रीकृष्णार्जुनसंवादे ज्ञानमोक्षयोः साधन, विरोधरूप, देवासुर लक्षणप्रपंचनं नाम षोडशोऽध्यायः ॥ १६ ॥ ॥



ॐ ॥ चतुर्दशाध्याये "नान्यं गुणेभ्यः कर्तारमि"त्यादिना सर्वोपि परिणामोगुणकृतइति सामान्यतउक्तस्यात्र सत्वादिगुणकृतानां श्रद्धानामाहारस्य यज्ञतपःप्रभृतिकर्मणां च सदसद्रूपाणां भेदोक्त्या प्रपंचनं क्रियते। पूर्वत्र शास्त्रविधानोक्तं ज्ञात्वा कर्म कार्यमित्युक्ते लब्धावसरोर्जुनः शास्त्रविध्यज्ञानिनां का स्थितिरिति पृच्छति ॥ ॥ यइति । ये जनाः शास्त्रविधिमुत्सृज्य अज्ञात्वा श्रद्धयान्विताः-श्रद्धामात्रेण यजंते । तेषां निष्ठा तु-स्थितिस्तु का-कीदृशी । तामेव विविच्याह । सत्वमित्यादिना । किं सात्विकी राजसी तामसी वा स्थितिरित्यर्थः । ते किं सात्विकाः राजसास्तामसावेति यावत् ॥ १ ॥ ते त्रिविधाअपि संतीति भावेन प्राक् यागांगतया यष्टृविशेषणत्वेनोक्तश्रद्धां सात्विकत्वादिना विभज्य तदाश्रयेण तेषां सात्विकत्वादिस्वरूपमाह ॥ ॥ त्रिविधेति द्वाभ्यां । श्रद्धा-आस्तिक्यनिष्ठा

अर्जुनउवाच । ये शास्त्रविधिमुत्सृज्य यजंते श्रद्धयान्विताः । तेषां निष्ठा तु का कृष्ण सत्वमाहो रजस्तमः ॥ १ ॥ श्रीभगवानुवाच । त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्विकी राजसी चैव तामसी चेति तां श्रुणु ॥ २ ॥ सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत । श्रद्धामयोयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥

स्वभावजैवेत्यन्वयः । मनोवृत्तिश्रद्धाव्यावृत्तये स्वभावजैवेत्युक्तं । तां त्रिविधां शृणु-श्रुत्वा तत्र निष्ठां कुर्वित्यर्थः । तदन्वितैः क्रियमाणयजनप्रकारं शृण्वित्यर्थः ॥ २ ॥ अस्तु श्रद्धा त्रिविधा । तेषां का निष्ठेति प्रश्नस्य किमुत्तरमित्यतआह । योयच्छ्रद्धः सएव सइति । योयजमानः सात्विकश्रद्धः ससात्विकः । योराजसश्रद्धः सराजसः । यस्तामसश्रद्धः सतामसइत्यर्थः । कुतएवमित्यतस्तदुपपादनायोक्तं ॥ ॥ ॥ सत्वेति । सर्वस्य जंतोः श्रद्धा सत्वानुरूपा-जीवस्वरूपानुरूपा भवति । "सत्वं जीवः क्वचित्प्रोक्तः" इत्यादिवचनात् । श्रद्धया जीवस्वरूपानुरूपत्वात्तया तत्स्वरूपं ज्ञेयमित्यर्थः । श्रद्धायाः जीवानुरूपत्वमेव कुतइत्यतउक्तं ॥ ॥ श्रद्धेति । अयं पुरुषोजीवः श्रद्धा-

मयः तादात्म्यार्थे मयट् । श्रद्धास्वरूपइत्यर्थः ॥ ३ ॥ योयच्छ्रद्धइत्यत्र सात्विकादिश्रद्धः सात्त्विकादिरित्युक्तं । तत्र सात्विकश्रद्धादिः किं कर्मवानिति जिज्ञासायां तां श्रुण्विति प्रतिज्ञातमाह ॥ ॥ यजंतइति । सात्विकाः सात्विकश्रद्धावंतः शास्त्रविधानमजानंतोपि सात्विकश्रद्धामात्रान्विताजनाइति यावत् । देवान् यजंते । राजसाः राजसश्रद्धावंतःशास्त्रविधानमजानंतइति सर्वत्र ज्ञेयं । यक्षरक्षांसि यजंते । तामसास्तामसश्रद्धावंतः प्रेतादीन् यजंते । यद्यपि यागविधिषु‘‘ऐंद्रं दधी’’त्यादिषु इंद्रादिदेवताएवोद्देशतया श्रुताः इति राजसादिरपि तत्र श्रुतदेवतोद्देशेनैव यजनं करोति । तथापि तैरिष्टं यक्षराक्षसाः । ‘‘दीनत्त्वाद्देवनामानोब्रह्मेंद्रादिसनामकाः । गृण्हंती’’ति स्मृत्या तत्तन्नामकयक्षादीनामेव तत्तद्यज्ञभोक्तृत्वाद्यक्षरक्षांसि यजंतइत्याद्युक्तमिति ज्ञेयं । अत्र देवयाजिनां विष्णुभक्त्यादिमत्त्वान्मोक्षएव फलं । राजसानां

यजंते सात्विका देवान्यक्षरक्षांसि राजसाः । भूतान्प्रेतगणांश्चान्ये यजंते तामसा जनाः ॥ ४ ॥ अशास्त्रविहितं घोरं तप्यंते ये तपो जनाः । दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥५॥ कर्षयतः शरीरस्थं भूतग्राममचेतसः । मां चैवांतश्शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥ आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं श्रुणु ॥ ७ ॥ ॥ ॥

तु स्वर्गप्रतिनिधित्वेन कल्पितः सांकल्पिकः स्वर्गः । तामसानां तु शिवपरिवारभूतादित्वप्राप्तिः फलं ज्ञेयं । ‘‘मोक्षः सांकल्पिकः स्वर्गो भूतादित्वं फलं क्रमात्’’इति स्मृतेः ॥ ४ ॥ न केवलं तामसानां भूतादित्वं तमः प्राप्तिरपीत्याह ॥ ॥ अशास्त्रेत्यादिद्वाभ्यां । ये जनाः शास्त्रादन्येन-दुरागमादिना विहितं घोरं-महाकष्टरूपं तपः दंभाहंकारसंयुक्ताः कामरागबलान्विताः-इच्छासक्त्याग्रहयुक्ताः संतस्तप्यंते-कुर्वंति ॥५॥ किंच शरीरस्थं भूतग्रामं लक्ष्म्यादिदेवतासमुदायं मां चांतर्नियामकत्वेन शरीरस्थं कर्शयंतो ( कृशत्वेना ) ल्पगुणत्वेन पश्यंतोऽचेतसोऽविवेकिनः । तानसुरनिश्चयानसुरसंबंधिनिश्चयान्विद्धि जानीहि । ते दैत्यरक्षःपिशाचाइत्यर्थः । तमःप्राप्तियोग्याइति भावः ॥ ६ ॥ श्रद्धाभेदात्सात्विकादिभेदः तत्तदीयसदसत्कर्मविवेकेन सात्विकादिस्वरूपविवेकयुक्तः । आहारादिभेदेनापि तेषां

।१२९।

विवेकं प्रतिज्ञापूर्वमाह ॥ ॥ आहारस्त्वित्यादिसप्तभिः । सर्वस्येति सात्विकादिजनस्येत्यर्थः । यज्ञस्तपोदानं तथा त्रिविधमित्यर्थः ॥ ॥ ॥ तेषामिति । आहारादीनामित्यर्थः ॥ ७ ॥ आहारभेदं तावत् त्रिभिराह ॥ ॥ आयुरित्यादिना । आयुर्जीवनं । सत्वं-साधुत्वं । सात्विकवस्तुसेवनेन चित्तशुद्धेः । बलं-शक्तिः आरोग्यं-रोगराहित्यं । सुखं-सकृदुपभोगेपि बहुकालीनं । प्रीतिः-उपभोगकालीनं सुखं । एतेषामायुरादीनां विवर्धनाः-विशेषेण वृद्धिहेतवः । रस्याः-रसयुक्ताः । स्निग्धाः-स्नेहवंतः । स्थिराः-सेवनेन बहुकालगुणप्रदाःआज्यादयः । अनुभवे सति पश्चादपि भूयादिति मनोहारिणाः-हृद्याः । एते आहाराः ‘‘कर्मणि घञ्’’ भक्ष्यपदार्थाः । सात्विकानां सत्वगुणयुक्तानां प्रियाः । आयुरादिविवर्धनाइति विशेषणोक्त्या तद्विपरीतत्वे रस्यादीनामपि राजसत्वमेवेति ज्ञेयं ॥ ८ ॥ कटु-मरीचि-

आयुस्सत्वबलारोग्यसुखप्रीतिविवर्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः ॥ ८ ॥ कट्वाम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥ यातयामं गतरसं पूति पर्युषितं च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥ अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्विकः ॥ ११ ॥ ॥ ॥

कादिः । आम्लोजंबीररसादिः । लवणं प्रसिद्धं । अत्युष्णं । अतिशब्दः सर्वत्र संबध्यते । उष्णं-तीक्ष्णं सर्षपादि । रूक्षं-स्वतोनीरसं । विदाहि-विशेषेण दग्धं संतापकरं वा । एते आहाराः राजसस्येष्टाः प्रियाः । दुःखं-शोकोदौर्मनस्यं आमयोरोगः एतत्त्रयप्रदाः । दुःखादिदत्वविशेषणोक्त्या तदभावे कट्वादीनां सात्विकत्वमेवेति ज्ञेयं ॥९॥ यातयामं-यामांतरितपाकं । पूर्वं स्वादु पश्चादन्यथाजातं रसं, गतरसं । पूति-दुर्गंधं । पर्युषितं-दिनांतरितपक्वं । अन्यभुक्तावशिष्टं-उच्छिष्टं । अमेध्यमपवित्रं भोजनं । कर्मणि ल्युट् । भोज्यं-यातयामादि भोज्यं वस्तु यत्तत्तामसप्रियं । तादृशं वस्तु भोजनविषयतया तामसप्रियमित्यर्थः । स्वादुत्वादेः पुरुषभेदेन व्यवस्थितत्वेपि शुद्धभागवतस्वभावापेक्षया स्वादुत्वादिकं ध्येयं ॥ १० ॥ यज्ञभेदेन सात्विकादिभेदमाह ॥ ॥ अफलेति । फलाकांक्षारहितैर्योयज्ञोविधिदृष्टोविधि-

ज्ञानपूर्वकः यष्टव्यमेवेति मनः समाधाय ईज्यते-अनुष्ठीयते ससात्विकइत्यर्थः ॥ ११ ॥ फलमभिसंधाय मे भूयादिति कामयमानएव अपि दंभार्थमेव-आत्ममहत्वप्रदर्शनार्थमेव यदिज्यते तं यज्ञं राजसं विद्धि ॥ १२ ॥ असृष्टान्नं-अन्नदानहीनं । शिष्टं व्यक्तं ॥ १३ ॥ प्राक् प्रतिज्ञातं तपोभेदेन सात्विकादिभेदं दर्शयितुं शारीरादिभेदेन तत्त्रैविध्यं तावदाह ॥ ॥ देवेति । देवादिपूजनं यथायोग्यं ध्येयं । शौचं-बाह्याभ्यंतररूपं । ब्रह्मचर्यमूर्ध्वरेतस्त्वं । शारीरं शरीरसंबंधि ॥ १४ ॥ अनुद्वेगकरं परस्यातंकोयथा न भवति तादृशं वाक्यं ।

अभिसंधाय तु फलं दंभार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥ विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥ देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् । ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् । स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥ मनःप्रसादःसौम्यत्वं मौनमात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥ श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । अफलाकांक्षिभियुक्तैः सात्विकं परिचक्षते ॥ १७ ॥ ॥ ॥ ॥ ॥

सत्यं-यथार्थवाक्यमिति सर्वत्रान्वेति । प्रियं श्रवणसमये पुनःपुनः श्रवणेच्छाकरं । हितं कालांतरे-सुखकरंच । स्वाध्यायाभ्यसनं च यत्तदितिशेषः । वाङ्मयं वागात्मकं तपः ॥१५॥ मनःप्रसादः-विषयेष्वप्रयासेनाप्रवृत्तिः । सौम्यत्वं-अक्रौर्यं । मौनं-मननशीलत्वं । आत्मविनिग्रहः-आत्मनि-परमात्मनि मनसोविशिष्यावस्थानं । भावे-आशये संशुद्धिः-नानाकामराहित्यं । इत्येतन्मानसं तपः उच्यते ॥ १६ ॥ इदानीं सात्विकादितपोभेदेन सात्विकादिजीवभेदं प्रतिज्ञापूर्वमाह । श्रद्धयेत्यादिभिस्त्रिभिः । नरैस्तप्तं कृतं तपः यत् तत्त्रिविधमित्यर्थः ।

तत्कथमित्यतआह ॥ ॥ अफलेति । युक्तैर्भगवदर्पणादियोगयुक्तैः तप्तं तपइत्यनुषज्यते ॥ १७ ॥ सत्कारो-मनसा आदरः । मानः-वाचा प्रशंसा । पूजा-अर्चनं । एतदर्थं दंभेनच आत्मनोमहत्त्वप्रदर्शनार्थं वा यत्तपः क्रियते तत्तपः इह लोके राजसं प्रोक्तं । चलं पातभयेन चलनहेतुः । अध्रुवं-क्षयिष्णु ॥ १८ ॥ मूढग्राहेणाविवेकदुराग्रहेण आत्मनः पीडया परस्य शत्रोरुत्सादनार्थं वा यत्तपः क्रियते तत्तामसं ॥ १९ ॥ प्राक् प्रतिज्ञातदानभेदेन सात्विकादिभेदमाह । दातव्यमित्यादित्रिभिः । दातव्यमित्यास्तिक्यबुध्द्या दानं । कर्मणि ल्युट् । दातव्यं वस्तु पुण्यदेशे पुण्यकालेऽनुपकारिणे उपकारमनपेक्ष्य सत्पात्रे च पात्राय दीयते इति यत् तद्दानं सात्विकं ॥ २० ॥

सत्कारमानपूजार्थं तपो दंभेन चैव यत् । क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥ मूढग्राहेणात्मनो यत्पीडया क्रियते तपः । परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम् ॥ २० ॥ यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः । दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥ अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥ ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥ ॥ ॥ ॥

परिक्लिष्टं-अन्यायार्जितं द्रव्यं ॥ २१ ॥ अदेशकालइति द्वंद्वैकवद्भावः । अशुचिदेशकालयोः असत्कृतं नमस्कारादिसत्काररहितं । अवज्ञातं अवज्ञाकरणयुक्तं यथा तथा । अपात्रेभ्यः यद्दीयते तत्तामसमित्यर्थः ॥ २२ ॥ अफलाकांक्षिभिरित्यादिना पूर्वं यज्ञतपोदानानां सात्विकत्वादिहेतवोऽसाधारणधर्माः उक्ताः साधारणांस्तु वक्तुमनेककर्तृकचरितानुष्ठानापुण्यत्वार्थमादमाह ॥ ॥ ॐ मित्यादिना । निर्दिश्यते अनेनेति निर्देशोनाम ब्रह्मणः त्रिविधः स्मृतः । ओतं-प्रविष्टमाश्रितं इति यावत् । जगद्यत्रपरे इति वा । ईश्वरोवा

जगति प्रोतः प्रविष्टइति वा व्युत्पत्त्याऽमिति नाम हरेः । "अवरक्षणकांतिगतिप्रवेशे"त्याद्यर्थस्वावतेष्टिलोपश्चेति सूत्रेण मन्प्रत्ययः । तस्य टिलोपे ज्वरत्वरेत्यूठि आद्गुणं तु कइति गुणे च ओमिति रूपसिद्धेः गुणैस्ततत्वाद्वा तमित्यस्य परोक्षवाचित्वाद्ब्रह्मणश्च वेदैकवेद्यतया परोक्षत्वात्तदिति नाम । निर्दोषसर्वशुभगुणपूर्णत्वात्सदिति नामेति ज्ञेयं । तेन ब्रह्मण-ब्राह्मणादयः पुरा-सृष्टिकाले विहिताः-सृष्टाः । वेदानां विधानं नाम अभिव्यक्तिर्ज्ञेया ॥ २३ ॥ तस्मादोमित्यस्य भगवन्नामत्वात् ओमित्युदाहृत्य-ओंकारमुच्चार्य ब्रह्मवादिनां सततं यज्ञादिक्रियाः विधानोक्ताः-विध्युक्ताः प्रवर्तंते । एतेनोक्तोंकारार्थधीपूर्वकंओमित्युच्चार्य ब्राह्मणैः सह विध्युक्तदिशानुष्ठानं यज्ञादेः सात्विकत्वे हेतुरुक्तो-भवति ॥ २४ ॥ किंच तत्परोक्षं फलं स्वर्गाद्यनभिसंधाय मम स्यादित्यनिच्छन् । तथा तत्-वेदैकगम्यतया परोक्षभूतं ब्रह्म अभिसंधाय

तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः । प्रवर्तंते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४॥ तदित्यन-भिसंधाय फलं यज्ञतपःक्रियाः । दानक्रियाश्च विविधाः क्रियंते मोक्षकांक्षिभिः ॥ २५ ॥ सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते । प्रशस्ते कर्माणि तथा सच्छब्दः पार्थ युज्यते ॥२६॥ यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते । कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥ ॥ ॥

ममास्पदं स्यादितीच्छन्यज्ञोग्निहोत्रादितपःक्रियाः प्रागुक्तशारीरादितपोरूपाक्रियाः दानक्रियाश्च विविधाः मोक्षकांक्षिभिः क्रियंतइत्युक्त्या वेदैकवेद्यतया तत्पदोक्तब्रह्मोद्देशेनेतरफलानुद्देशेनच क्रियमाणत्वरूपधर्मांतरमपि यज्ञादेः सात्विकत्वादिहेतुरुक्तोभवति । तदिति ब्रह्मोद्दिश्य यज्ञादेःकरणाच्च ब्रह्मणस्तदिति नामेति चोक्तं भवति ॥ २५ ॥ किंच साधुगुणोपेततया सच्छब्दार्थभगवज्ज्ञानपूर्वकतयानुष्ठानमपि सात्विकत्वहेतुधर्मांतरं यज्ञादेरिति भावेन सच्छब्दार्थमाह ॥ ॥ सद्भावइति । सद्भावे-असतः सत्तारूपप्रजननार्थे साधुभावे-साधुत्वे । प्रशस्ते कर्मणि-शुभकर्मणि चेत्यर्थः ॥ २६ ॥ भगवन्निष्ठापूर्वकत्वमपि कर्मणः सात्विकत्वहेतुभूतं धर्मांतरमिति भावेन निष्ठापि सच्छब्दा-

र्थइत्याह ॥ यज्ञइति । स्थितिर्निष्ठा । भगवानेभिरवश्यं फलं प्रयच्छतीति बुद्धिरिति यावत् । किंच भगवद्विषयतयानुष्ठानमपि धर्मांतर-मिति भावेनाह ॥ ॥ कर्मेति । तदर्थीयं सच्छब्दार्थभगवदर्थीयं ॥२७॥ यज्ञादेः सात्विकत्वहेतुभूतधर्मानुक्त्वा तदन्यथात्वेपि हेतुभूतधर्मा-नाह ॥ ॥ अश्रद्धयेति । भगवच्छ्रद्धाभावेनेत्यर्थः । हुतमित्यादौ शास्त्रानुसारेणेति योज्यं । भगवच्छ्रद्धां विना शास्त्रानुसारेणानुष्ठि-तमपि यद्धोमादिकं तदसदेवोच्यते । तत्प्रेत्य नच-इहच नो-ऐहिकामुष्मिकपुमर्थप्रदं नेत्यर्थः । अतोभगवच्छ्रद्धाभक्त्यादिपूर्वकमेवानुष्ठि-

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥ ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ( श्रद्धात्रयविभागो ) सत्वादि गुणकृतानां श्रद्धानां, आहारस्य, यज्ञतपः प्रभृतिकर्मणां, च, सदसद्रूपभेदेन प्रपंचनं नाम सप्तदशोऽध्यायः ॥ ॥ ॥ ॥ ॥

तद्धोमादीनि इहामुत्रफलप्रदानीति श्रद्धैव प्रयोजिकेति सैव"त्रिविधा भवति श्रद्धे"त्यादिना प्राधान्येनोक्तेति भावः । वस्तुतस्तु श्रद्धाभावे शास्त्रानुसारित्वमेव नेति ज्ञेयं ॥ २७ ॥ इति श्रीगीतार्थसंग्रहे राघवेंद्रयतिकृते सत्वादि गुणकृतानां-श्रद्धानां, आहारस्य, यज्ञतपः प्रभृ-तिकर्मणां, च, सदसद्रूपभेदेन प्रपंचनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ ॥



पूर्वाध्यायेषु सर्वेषु"त्रैगुण्यविषयावेदा" इत्यादिना यत्पुमर्थहेतुज्ञानसाधनं विप्रकीर्णतयोक्तं तदिह मंदानां बुद्ध्यारोहाय संक्षिप्य निरूप्यते । तथा चतुर्दशाध्यायोक्तं त्रिगुणकार्यं चोच्यते । "संन्यासश्चैव योगश्च" त्यादिना पंचमादौ संन्यासस्य "त्यागाच्छांतिरनंतरमि "ति द्वादशे त्यागस्य पुमर्थहेतुत्वमुक्तं । तयोः स्वरूपनिर्णयाय पृच्छति ॥ ॥ संन्यासस्येति । हे हृषीकेश-सर्वेंद्रियस्वामिन् । केशिनामकासुरमर्दन । संन्यासस्य त्यागस्य च पृथक्तत्वं-स्वरूपं वेदितुं-ज्ञातुमिच्छामि । द्वयोरपि शब्दयोरापाततोऽर्थैक्यप्रतीतेरिति भावः ॥ १ ॥ अथाप्यस्ति विवक्षाभेदेन भेदइति भावेनोत्तरमाह ॥ ॥ काम्यानामिति । वैकल्पिककाम्यानां ज्योतिष्टोमादीनां स्वर्गादिफलानिच्छया विशेषणत्यागेन काम्यानां कर्मणां त्यागं नियतकाम्यानां कारीर्यादीनां स्वरूपाकरणेन त्यागं-संन्यासं ज्ञानिनोविदुः-जानंति ।

अर्जुनउवाच । संन्यासस्य महाबाहो तत्वमिच्छामि वेदितुम् । त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥१॥ श्रीभगवानुवाच । काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः । सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥२॥ त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥ निश्चयं शृणु मे तत्र त्यागे भरतसत्तम । त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥ ॥

विचक्षणाः-कुशलाःसर्वकर्मणां भगवत्प्रीत्यन्यफलत्यागं त्यागशब्दार्थमाहुः इत्यर्थः ॥ २ ॥ सर्वकर्मफलत्यागमिति स्वोक्तत्यागस्वरूपावधारणाय प्रातीतिकीं विद्वन्मतविप्रतिपत्तिमुद्भावयति ॥ ॥ त्याज्यमिति । एके मनीषिणोज्ञानिनः दोषवत् बंधकत्वदोषयुक्तं काम्यकर्म त्याज्यं अकार्यमाहुः । अपरे च मनीषिणः । यज्ञादि न त्याज्यमिति प्राहुः । तपः-कृच्छ्रचांद्रायणादिकर्म यज्ञांगानि । यद्वा नित्यनैमित्तिकानि । मनीषिणइति विशेषणात्प्राचीनपक्षेपि फलत्यागएवाभिमतोन स्वरूपत्यागः । अतोन मतयोर्विरोधः ॥ ३ ॥ अविरोधप्रकारं प्रतिज्ञापूर्वमुपपादयति ॥ ॥ निश्चयमिति । तत्र विप्रतिपन्ने त्यागे विषये निश्चितं मतं मे सकाशात् शृणु-श्रुत्वा निष्ठां कुरु । त्यागो-

हि फलत्यागः । कर्मणि ममतात्यागः । भगवति कर्तृत्वानुसंधानपूर्वं स्वस्य कर्तृत्वाभिमानत्यागइति त्रिविधः संप्रकीर्तितइत्येके । वक्ष्यमाणसात्त्विकादिभेदेनेत्यन्ये ॥ ४ ॥ निश्चयं शृण्विति प्रतिज्ञातमाह ॥ ॥ यज्ञेति । द्वंद्वैकवद्भावः । कुतः कार्यमित्यतआह ॥ ॥ यज्ञइति । पावनानि-पावित्र्यकरणानि । अबंधकानीति यावत् । यद्वा मनीषिणां ज्ञानिनां मुक्तावानंदातिशयकराणि । अतः सर्वैरपि वर्णाश्रमोचितकर्माणि कार्याण्येवेति । यतीनामपि ज्ञानाध्ययनयज्ञविद्याभयदानब्रह्मचर्यादितपांसि च संत्येव । स्त्रीशूद्रादीनामपि विष्णुनामाध्ययनरूपोयज्ञः सत्यवचनमुपवासादितपश्चास्त्येवेति भावः॥५॥ यज्ञादि न त्याज्यं कार्यमेव तादित्युक्तमयुक्तं ।'त्याज्यं कर्मे'त्युक्तमनीषिमतविरोधादित्यतः संगादित्यागरूपविशेषणत्यागएव तेषामभिमतः न स्वरूपत्यागइति भावेन यज्ञादेः करणप्रकारमाह ॥ ॥ एता-

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥ एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥ नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥ दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् । स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥ ॥ ॥



नीति । प्रागुक्तयज्ञादिरूपकर्माणि ममताभिमानरूपस्नेहाख्यसंगं त्यक्त्वा स्वर्गादिफलानि च त्यक्त्वा कर्तव्यानि इति निश्चितं मे उत्तमं मतं ॥ ६ ॥ स्वरूपत्यागोनेत्येतदुपपादयन् त्यागोहि त्रिविधइत्युक्तं प्रपंचयति ॥ ॥ नियतस्यत्विति । वर्णाश्रमोचितस्य तु कर्मणः संन्यासत्यागोनोपपद्यते युक्तोन भवति । "स्वयज्ञादीन्परित्यज्य निरयं यात्यसंशयमि"ति पाद्मे प्रत्यवायस्मरणात् । स्वरूपत्यागएव त्यागशब्दार्थोन संगफलयोस्त्यागइति मिथ्याज्ञानाख्यमोहात्तस्य यज्ञादिकर्मणः परित्यागः तामसः परिकीर्तितः ॥७॥ दुःखं प्रतिकूलवेदनीयरूपदुःखकारणमित्येव कायक्लेशभयाच्च कर्म त्यजेदिति यत्सराजसत्यागः । तं राजसत्यागं कृत्वा त्यागफलं भगवत्प्रीतिरूपं नैव लभेत् ॥८॥

कार्यमवश्यं कर्तव्यं अन्यथा प्रत्यवायादिति बुद्ध्या संगं-मदीयमिति स्नेहं स्वर्गादिफलं च त्यक्त्वैव नियतं वर्णाश्रमोचितं कर्म यत् क्रियते सत्यागः कर्मानुष्ठानसहितः सात्विकोमतः ॥ ९ ॥ सात्विकत्यागिनोविशेषणान्याह ॥ ॥ न द्वेष्टीति । अकुशलं-तात्कालिकसुखदं न । किंतु कायक्लेशदुःखदं कर्म न द्वेष्टि । कुशले पूर्वार्जितपुण्यफले नानुषज्जते-नेच्छति । सत्वसमाविष्टः-सम्यक् सत्वगुणेन व्याप्तः मेधावी-भगवत्तत्वज्ञानी छिन्नसंशयः-परापरतत्वविषये भगवद्धर्मानुष्ठाने वा संदेहहीनः त्यागी-भगवति सर्वकर्मसमर्पणवान्ससात्विकत्यागीत्यर्थः ॥ १० ॥ पूर्वं "कर्तव्यानीति मे पार्थ" त्यत्र संगफलत्यागएव त्यागशब्दार्थइति स्वसिद्धांतोनिर्णीतः । अधुना त्याज्यं दोषवदिति पक्षस्य बीजखंडनाय सर्वकर्मपरित्यागोवा विहितकर्मत्यागोवा न त्यागशब्दार्थः । येन "त्याज्यं दोषवदि" त्यस्य

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । संगं त्यक्त्वा फलं चैव सत्यागः सात्विको मतः ॥९॥ न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते । त्यागी सत्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥ नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । यस्तु कर्मफलत्यागी सत्यागीत्यभिधीयते ॥ ११ ॥ अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलं । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥ ॥ ॥

सर्वकर्मत्यागोर्थइत्युच्यतइति भावेनाह ॥॥ नहीति । अशेषतः कर्माणि त्यक्तुं न शक्यं "नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदि" त्युक्तेः । नापि विहिताशेषत्यागः । "स्वयज्ञादीन्परित्यज्य निरयं यांति" इति प्रत्यवायस्मरणादिति भावः । हि यस्मादशक्यं तस्माद्यस्तुकर्मफलत्यागी सएव त्यागीत्यभिधीयते । अतस्त्याज्यमिति पक्षस्यापि फलत्यागएवार्थइति भावः ॥ ११ ॥ अत्यागिनिंदापूर्वं त्यागिनं स्तौति ॥ ॥ अनिष्टमिति । अनिष्टं-नरकादि । इष्टं-काम्यकर्मिणामिच्छाविषयीभूतं स्वर्गादि । मिश्रं-इष्टानिष्टमेलनरूपं मानुषादि । कर्मणास्त्रिविधं फलं अत्यागिनां-कर्मफलमत्यजतां प्रेत्य-मृत्वा देहान्निर्गत्य स्थितानां भवति । संन्यासिनां तु अनियतकाम्यानां फलत्यागिनां । नियतानां-स्वरूपत्यागिनां । क्वचिदपि-इह वा परत्र वा नास्ति । इष्टानिष्टादिरूपं कर्मणः फलमित्यनुषंगः । अत्र त्यागिनामिति वक्तव्ये संन्यासिनामित्युक्तिः त्यागिनोहि परार्थं कारीर्यादिनियतकाम्यं कुर्वंति । संन्यासिनस्तु तदपि नेत्येतावंतं त्यागिभ्योविशेषं सूचयितुं । फलेच्छाभावेन तेषु त्यागित्वस्यापि सत्वात् । नत्विति तु शब्देन त्यागिनां ज्ञानभक्त्यादिद्वारा अपरोक्षतो मुक्तावानंदातिशयफलं भवतीति सूच्यते । उपपादितमेतत् "त्यागाच्छांतिरनंतरमि" त्यत्र द्वादशेऽध्याये भाष्यादौ ॥ १२ ॥ काम्यानामित्यत्रोक्तदिशा वैकल्पिककाम्यानां फलत्यागः । नियतकाम्यानां स्वरूपत्यागः । नतु संन्यासिनामित्यत्रोक्तदिशा परार्थमपि नियतकाम्यानां अननुष्ठानमित्येतावन्मात्रं न संन्यासशब्दार्थः । किंतु कर्मणि कर्तृत्वाभिमानत्यागोपीति वक्तुं कर्मकारणानि प्रतिज्ञापूर्वमाह ॥ ॥ पंचे-

पंचैतानि महाबाहो कारणानि निबोध मे । सांख्ये कृतांते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥ अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पंचमम् ॥१४॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः ॥ १५ ॥ ॥ ॥

त्यादित्रिभिः । एतानि-वक्ष्यमाणानि कारणानि-कर्मकारणानि मे सकाशात् निबोध-बुध्यस्व । सांख्ये कृतांते-सिद्धांते कपिलाख्यविष्णुकृतसांख्यनामकशास्त्रे सर्वकर्मसिद्ध्यर्थं प्रोक्तानि । श्रोतृविश्वासायैतदुक्तिः ॥ १३ ॥ प्रतिज्ञातमाह । अधिष्ठानमिति । अधिष्ठानं-देहभूम्यादिः । कर्ता-विष्णुः । पृथग्विधं करणं इंद्रियसुकस्रुगादि । विविधा-नानाप्रकारा पृथक्-परस्परभिन्ना । चेष्टा-हस्तादिक्रिया ध्यानरूपमानसक्रियाच प्रधानहोमादिक्रियाहेतुभूता कारकाश्रितावांतरक्रिया चेत्यर्थः । दैवं-अदृष्टं । अत्र-कर्मविषये । पंचमं कारणं । यद्वा कर्तृपदेन पराधीनकर्ता जीवः । दैवपदेन विष्णुः । कर्मणां कर्त्रादिकारकषट्कसाध्यत्वेपि इह कर्मापादानादेः अनुक्तिः असार्वत्रिकत्वात्तस्येति ज्ञेयं ॥ १४ ॥ तर्हि कारणकारकं कुतोनोक्तमित्यतोवा कस्यैतानि करणानीत्यतोवाह ॥ ॥ शरीरेति । अत्र शरीरमनोवाचामेव करणकारकत्वेनोक्त्या कर्मा-

पादानादीनि न सार्वत्रिकाणीति सूचितं ॥ १५ ॥ ततश्च किमित्यतआह ॥ ॥ तत्रैवं सतीति । तत्र कर्मणीश्वरादिपंचकस्यैव करणत्वे- सति जीवस्य स्वातंत्र्याभावेन केवलं परप्रेरणां विना स्वतः क्रियाहीनमात्मानं कर्तारं स्वातंत्र्येण कर्मकर्तारं यस्तु पश्यति मन्यते सोऽकृ- तबुद्धित्वात् श्रवणाद्यसंस्कृतबुद्धित्वाद्दुर्मतिः-दुष्टबुद्धिः सन्न पश्यति-तत्वविन्न भवतीत्यर्थः ॥ १६ ॥ एवं कर्तृत्वाभिमानिनं विनिंद्य स्वस्य कर्तृत्वानभिमानिनं स्तौति ॥ ॥ यस्येति । यस्य-पुंसः अहंकृतः मयायमर्थः कृतइति भावः-स्वातंत्र्याभिमानं नास्ति । यस्य- बुद्धिर्न लिप्यते-फलरागादिलिप्तोन भवति सः स्वातंत्र्यज्ञानहीनः-इमान्लोकान्हत्वापि न लिप्यते हननदोषयुक्तोन भवति । कुतः न हंति स्वातंत्र्येण हन्मीति बुद्धिं न करोतीति वा । न निबध्यते-तत्फलं नाप्नोतीत्यर्थः । एतच्चेश्वरसार्वज्ञस्वातंत्र्यज्ञानी सन्नपि विश्वहननार्थं

तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न सपश्यति दुर्मतिः ॥ १६ ॥ यस्य नाहं- कृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि सइमान् लोकान्न हंति न निबध्यते ॥ १७ ॥ ज्ञानं ज्ञेयं परि- ज्ञाता त्रिविधा कर्मचोदना । करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥ ॥ ॥

जातोरुद्रोयमोवा तद्विषयमितिबोध्यं । अन्यस्य त्वपरोक्षिणोपि दोषकृदेवेति । वृत्रहत्यादिनेंद्रादेरपि ईषद्बंधोपीषदहंकारकृतएवेत्याकर- एव व्यक्तं । एवं कर्तृत्वाभिमान्यनभिमानिनोः सहेतुकं निंदास्तुत्योरुक्त्या कर्माणि कर्तृत्वाभिमानत्यागोपि संन्यासशब्दार्थइत्युक्तं भवति ॥ १७ ॥ ननु जीवस्य स्वतः कर्तृत्वाभावे यजेतेत्यादिविधीनां वैयर्थ्यं स्यात् । जडेश्वरमुक्तानां तदविषयत्वादित्यतआह ॥ ॥ ज्ञानमिति । विधिश्चोदना प्रेरणेति पर्यायः । कर्मचोदना-यजेतेत्यादिकर्मसु प्रेरणा । "ज्ञानं ज्ञेयं परिज्ञातेतीति" शब्दोयोज्यः । त्रिविधा ज्ञाना- दिरूपेण त्रिविधा । ज्ञानं-विधिविषयकं-ज्ञेयं-चेच्छा प्रयत्नरूपप्रवृत्तिलक्षणं पुरुषार्थलक्षणं च । परिज्ञाता तु-अधिष्ठानलक्षणं सर्वज्ञसर्वप्रेरके- श्वरसन्निहितो जीवराशिः । तत्त्रितयानिमित्तं कर्मचोदना प्रवर्ततइति । "दाधित्रपुसंप्रत्यक्षोज्वर" इत्यादाविव निमित्तनिमित्तिनोरभेदोप-

चारेण निमित्तत्रैविध्येन नैमित्तिकचोदनापि त्रिविधेत्युपचर्यते यजेतेत्यादिश्रौतस्मार्तविधौ सति स्वप्रवृत्तिविषयप्रेरणाज्ञानं भवति । ततश्चेच्छाप्रयत्नरूपप्रवृत्तिरात्मसन्निहितेश्वरप्रेरणया पुमर्थमुद्दिश्य कर्मणि जीवस्य भवति।विधिज्ञानादेः कर्मचोदनायाश्च निमित्तनिमित्तिभावो-ध्येयः । नच स्वतः कर्तृत्वाभावात्पराधीनकर्तृजीवस्य विविधज्ञानद्वारा कथं प्रवृत्त्याद्यर्थं विधिविषयत्वमिति शंक्यं । अपराधीनकर्तृत्वस्य विधिविषयतायां प्रयोजकत्वेन क्वाप्यनुपलंभेनान्वयव्यतिरेकाभ्यां पराधीनकर्तृशक्तिकस्यैव विधिविषयत्वावश्यंभावात् । जडेश्वरमुक्तानां विध्यविषयत्वेन प्रमाणभूतविधेर्वैयर्थ्यायोगाच्च । पराधीनकर्तुरेव परिशेषप्रमाणेनापि विधिविषयत्वस्यावश्यकत्वाच्च । तस्माज्जीवे विध्यवि-षयेभ्योजडेश्वरमुक्तेभ्योऽव्यावृत्तस्य स्वसंबंधितया विधिज्ञानस्य तज्जन्यायाः फलतत्साधनेच्छायाः साधनविषयकृतेश्चानुभवसिद्धत्वात् । तस्य च ज्ञानाज्ञादेः "न ऋते त्वदि " त्यादिश्रुतिभिरीश्वराधीनत्वेप्यस्वतंत्रकर्तृत्वमात्रेण विधिविषयत्वं कर्मफलभाक्त्वं च युक्तं । तदुक्तं

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः । प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥ ॥

गीताभाष्ये । "अकर्तृत्वेपि विधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थोभवतीति न प्रवृत्तिविधिवैयर्थ्यमि"ति । यद्वा दैवं चैवेति पूर्वत्र दैवपदेनेश्वरस्य कर्मसु प्रेरकत्वमुक्तं । तत्प्रेरणास्वरूपमुच्यते ॥ ॥ ज्ञानमिति । कर्मचोदना-कर्मसु जीवानां ईश्वरप्रे-रणा । ज्ञानं ज्ञेयं परिज्ञातेति त्रिविधा । ज्ञानज्ञेयपरिज्ञातृरूपत्रिविधभगवत्स्वरूपेत्यर्थः । विशेषबलाद्धर्मधर्मिभावः तस्येयं प्रेरणेत्याद्युक्तिश्च युक्तेति भावः । पूर्वोक्तपंच कर्मकारणानि संक्षिप्याह ॥ ॥ करणमिति । करणं-इंद्रियस्रुक्स्रुवादि । अधिष्ठानपदोक्तदेहादिकमदृष्टं च । कर्म-हस्तादिचेष्टा कर्तृपदेन जीवेश्वरावुभावपि ग्राह्याविति त्रिविधः कर्मसंग्रहः-कर्मकरणसंग्रहः । पंचकारणानां संक्षेपइति ॥ १८ ॥ सात्वि-कज्ञानकर्मादेः मुक्तिहेतुत्वात्तदनुष्ठानाय सत्वादिगुणनिमित्तान्ज्ञानादिभेदान्प्रतिज्ञापूर्वमाह ॥ ॥ ज्ञानमिति । सत्वादिगुणभेदतः ज्ञाना-दिकं त्रिविधं । गुणसंख्याने-गुणाः संख्यायंते यत्र तस्मिन्वैदिकसांख्यशास्त्रे प्रोच्यते । तान्यपि यथावद्यथास्थितं श्रुणु ॥ १९ ॥

प्रतिज्ञातं ज्ञानत्रैविध्यं तावदाह । सर्वेत्यादित्रयेण । विभक्तेषु परस्परं भिन्नेषु तारतम्योपेतेषु च सर्वभूतेषु भवंति विद्यंतइति भूतानि जीवाः प्रकृत्यादिजडानि च । सर्वेषु जीवेषु जडेषु च तदाधारकत्वेन तेभ्योभिन्नत्वेनेति सप्तम्यभिप्रायः । भावं-सदाविद्यमानं विष्णुं एकं-प्रधानं । सर्वोत्तममिति यावत् । विष्णुं अविभक्तं सर्वत्र स्थितावपि अधिष्ठानभेदनिमित्तभेदहीनं । ॐ नस्थानतोपि परस्योभयलिंगं सर्वत्रही " ॐ इति सूत्रोक्तदिशा सर्वत्र निर्दोषाशेषसद्गुणतया ऐक्येन स्थितमिति यावत् । अव्ययं स्वतोऽधिष्ठानव्ययेन च व्ययहीनं । येन ज्ञानेनेक्षते-विषयीकरोति तज्ज्ञानं सात्विकं विद्धि-जानीहीति ॥ २० ॥ यज्ज्ञानं सर्वभूतेषु पृथक्त्वेन वेत्ति सर्वजीवजडानि अंतर्भेदयुतत्वेन विषयीकरोति इत्यस्यैव व्याख्या ॥ ॥ नानेत्यादि । नानाभावान्नानाप्रकारभूतजीवजडरूपपदार्थान्पृथग्विधान्परस्परं भिन्नान्नीचोच्चतया स्थितांश्च

सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ॥ २० ॥ पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥ यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् । अतत्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥ ॥ ॥

वेत्ति-विषयीकरोति । विष्णोरन्यत्र यथार्थमिति यावत् । उपलक्षणमेतत् । संदिग्धतया भगवत्स्वरूपविषयकं च तज्ज्ञानं राजसमित्यर्थः । तु शब्देन वाऽयमर्थोग्राह्यः । तेनेश्वरादन्यत्र यथार्थज्ञानस्य सात्विकत्वात्कथं राजसत्वमिति निरस्तं बोध्यं । ईश्वरविषये संशयरूपत्वस्याधिकस्यापि भावात् ॥२१॥ यत्त्विति । कार्यशब्दोत्र संसारिणं मुक्तत्वेन क्रियमाणत्वहेतुना जीवपरः । कृत्स्नशब्दोब्रह्मपरोजगत्परश्च । अयमर्थः । एकस्मिन्कार्ये जीवे कृत्स्नवद्ब्रह्मवत् यज्ज्ञानं सक्तं । कोर्थः ब्रह्म यथा स्वात्मानं विषयीकरोति ब्रह्मेति तथा जीवं ब्रह्मेति यज्ज्ञानं विषयीकरोतीत्यर्थः । जीवे ब्रह्माभेदविषयकं यज्ज्ञानं तत्तामसमिति यावत् । तथा एकस्मिन्कार्ये जीवे कृत्स्नवज्जगद्वद्यज्ज्ञानं सक्तं । प्रपंचं यथाविषयीकरोति प्रपंचोयमिति । तथा जीवं यज्ज्ञानं विषयीकरोति जीवं जगदात्मकत्वेन विषयीकुर्वद्यज्ज्ञानं तत्तामस-

१-१३ त्रयोदशाऽध्याये २९ एकोनत्रिंशत् श्लोके, टिप्पण्यांद्रष्टव्यम्-

मिति यावत् । तथा एकस्मिन्कार्ये जीवे कृत्स्नवद्यज्ज्ञानं सक्तं । एकमेव जीवं कृत्स्नजगदात्मकत्वेन यद्विषयीकरोति । एकजीवकल्पितं जगदिति यज्ज्ञानं विषयीकरोतीति त्रेधार्थः । किंच यज्ज्ञानमहैतुकं युक्तिशून्यं अतत्वार्थवदसत्यविषयकं सदसद्विलक्षणाद्यविद्यमानाकारकल्पनायुक्तमिति यावत् अल्पं बहुलाज्ञानयुतत्वेन धर्मेणाल्पज्ञानसदृशं च यत्तत्तामसं । अत्र ब्रह्मवदिति जीवइति च वाच्ये कृत्स्नवदित्युक्तिः जगतोपि ग्रहणाय । तेनाकार्यत्वादिकृत्स्नगुणपरिपूर्णत्वेन कृत्स्नपदोक्तब्रह्मणा कार्यत्वादिना तदधीनस्य जीवस्याभेदज्ञानं मिथ्याज्ञानत्वात्कथं न तामसमिति तामसत्वोपपादनायेति । कार्यइत्येव वाच्ये एकस्मिन्नित्युक्तिःएकजीवमतस्य संग्रहायेति । अत्र यद्यप्येकस्मिन्कार्यशब्दिते जीवे कृत्स्नवदकार्यत्वादिगुणपरिपूर्णब्रह्मवज्जगद्वच्च यज्ज्ञानं सक्तमित्यस्य चैवं जीवं ब्रह्मात्मकत्वेन जगदात्मकत्वेन च विषयीकारि यज्ज्ञानमित्यर्थः तादृशं ज्ञानमहैतुकं अतत्वार्थमल्पं च भवत्येवेति पुनरहैतुकमित्याद्युक्तिः पुनरुक्तिरेव । तथाप्यहैतुकज्ञाना-

नियतं संगरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत्सात्विकमुच्यते ॥ ॥ २३ ॥ ॥

दित्रितयं प्रत्येकं एकैकं तामसं । पूर्वार्धोक्तमिथ्याज्ञानरूपविशेषणसहितमतितामसमिति वक्तुं इति ज्ञेयं । यद्वा सामानाधिकरण्येन पदानां विशेषणविशेष्यभावः । एवं च कार्ये जीवे कृत्स्नवज्जगद्वद्यत्सक्तं, एकस्मिन्कार्ये जीवे कृत्स्नवद्ब्रह्मवद्यत्सक्तं, यदहैतुकं, यच्चातत्वार्थवदसत्यार्थकल्पनायुक्तं । यच्चाल्पं । तानि सर्वाण्यपि षड्विधज्ञानानि प्रत्येकं तामसानीति योजना । अतोन पुनरुक्तिशंकावकाशइति ॥ २२॥ प्राक्प्रतिज्ञातं गुणकृतकर्मत्रैविध्यं आह ॥ ॥ नियतमित्यादित्रिभिः । हरेः सर्वोत्तमत्वज्ञानभक्तिपूर्वकं तदर्पणबुद्ध्या क्रियमाणस्ववर्णाश्रमोचितं हि-नियतमित्युच्यते । मयिसर्वाणीत्यादौ भगवत्सर्वोत्तमत्वज्ञानतद्भक्तिपूर्वकं तदर्पणबुद्ध्या कर्मकरणस्य विधानात् । "येमेमत"इत्यादौ तस्यैव मुक्तिहेतुत्वोक्तेः यत्करणे फलप्राप्तिः यदकरणे च प्रत्यवायः तस्यैव नियतत्वात् संगरहितं-मदीयतास्नेहहीनं । कीर्त्यादौ रागादिहानतः अकीर्त्यादौ द्वेषत्यागतः कृतं फलप्राप्तीच्छाहीनेन कृतं यत्तत्कर्म सात्विकमुच्यतइत्यर्थः ॥२३॥

यत्तु कामेप्सुना-फलप्राप्तीच्छावता कर्तृत्वाभिमानसहितेन च । पुनःशब्दः समुच्चये । बह्वायासयुक्तं च क्रियते तत्कर्म राजसं उदाहृतं ॥ ॥ २४ ॥ अनुबंधं कर्मांतरमेवानुबध्यमानं क्षयं नाशं हिंसां परपीडां च अनवेक्ष्य पौरुषमात्मनः कर्मसामर्थ्यं चानवेक्ष्य-अविमृश्य मोहा-दहंकर्तेति मिथ्याज्ञानाद्यत्कर्मारभ्यते तत्तामसमुच्यतइत्यर्थः ॥२५॥ प्राक्प्रतिज्ञातं गुणकृतकर्तृत्रैविध्यं आह ॥ ॥ मुक्तेत्यादित्रिभिः । मुक्तसंगः-फलस्नेहहीनः सर्वस्य भगवदधीनत्वनिश्चयादेवाहं कर्तेति न वदतीत्यनहंवादी । आत्मकर्तृत्वाभिमानहीनइति यावत् । धृतिः-क-र्मण्यवर्जनीयदुःखसहनं । उत्साहः-कर्मकातरता । ताभ्यां समन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः-फलस्य सिद्धावसिद्धौ वा हर्षविषादहीनः

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥ अनुबंधं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥ मुक्तसंगोऽनहंवादी धृत्युत्सा-हसमान्वितः । सिद्धसिध्योर्निर्विकारः कर्ता सात्विक उच्यते ॥२६॥ रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽ-शुचिः । हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥ अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽ-लसः । विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥ ॥ ॥ ॥ ॥

सकर्ता सात्विकउच्यतइत्यर्थः ॥ २६ ॥ रागी कीर्त्यादिकामः-कर्मफलप्राप्तीच्छावान् । लुब्धः-कर्मण्यपेक्षितद्रव्यव्ययहीनः । हिंसात्मकः-हिंसास्वभावः । अशुचिः-द्रव्यादिषु शुद्धिहीनः । कार्यसिद्ध्यसिद्ध्योः हर्षशोकान्वितः सकर्ता राजसः ॥ २७ ॥ अयुक्तः भगवदर्पणादि-योगरहितः । प्रकृष्टोऽकृतः प्राकृतः । "भगवद्भक्तिसामर्थ्यात्प्रकृष्टेन कृतोहि यः । सप्राकृत"इति स्मृतेः । स्तब्धः-आत्मसंभावनया-कःप्यनम्रः । शठः-गूढद्वेषेण कर्मकारी नैष्कृतिकः-नीचकर्मकृत् । प्राप्तकालेपि कर्मण्युदासीनोऽलसः । विषादी-सर्वव्यापारोपरतिहेतुमनो-दौर्बल्यवान् । प्राप्तेपि कर्मकाले पश्चात्कुर्यामिति ध्यायन्वा । परकृतदोषं दीर्घकालकृतमप्यनुचितं सूचयन्वा दीर्घसूत्री । सतामसः कर्ते-

त्यर्थः ॥ २८ ॥ एवं ज्ञानकर्मकर्तृणां गुणकृतं त्रैविध्यं निरूप्याधुना बुद्धेः धृतेश्च गुणतः त्रैविध्यं प्रतिज्ञापूर्वकमाह ॥ ॥ बुद्धेरित्यादिभिः सप्तभिः । गुणतः-सत्वादिगुणभेदतोनिमित्तात्त्रिविधमेव । बुद्धेर्भेदं धृतेश्च भेदं पृथक्त्वेन मया प्रोच्यमानमशेषेण शृणु । श्रुत्वा निष्ठां कुरु ॥ २९ ॥ बुद्धेर्भेदमाह । प्रवृत्तिमित्यादित्रिभिः । प्रवृत्तिं-संसारहेतुप्रवृत्तिहेतुं निवृत्तिं-निवृतिहेतुधर्मंच धर्मं च । कार्याकार्ये कर्तव्यमकर्तव्यं च । तन्निमित्तभयाभये बंधमोक्षप्रकारं च या बुद्धिर्वेत्ति सा सात्विकीत्यर्थः । कर्तृत्वोपचाराद्या वेत्तीत्युक्तं । यया वेत्ति पुमानित्यर्थः ॥३०॥ ययेति । धर्मादिकं यया बुद्ध्या अयथावत्प्रजानाति नियमेन यथावन्न जानाति । किंचिद्यथावत्किंचिदयथावज्जानातीति

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु । प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥२९॥ प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बंधं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्विकी ॥३०॥ यया धर्ममधर्मं च कार्यं चाकार्यमेव च । अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१॥ अधर्मं धर्ममिति या मन्यते तमसा वृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥ धृत्या यया धारयते मनः प्राणेंद्रियक्रियाः । योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥ ३३ ॥ यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन । प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥ ॥ ॥ ॥

यावत् । याथार्थ्यनियमहीना या बुद्धिः सा राजसीत्यर्थः ॥३१॥ या च बुद्धिरधर्मं धर्ममिति मन्यते । नैतावन्मात्रं किंतु तमसावृताःअज्ञानेनावृतासति सर्वार्थान्विपरीतान् । यैराकारैरर्थाः वर्तते ततोविपरीतैरसत्यत्वानीश्वरत्वापराधीनत्वक्षणिकत्वादिप्रकारैश्च मन्यते सा बुद्धिः तामसीत्यर्थः ॥३२॥ प्रतिज्ञातं धृतेस्त्रैविध्यमाह ॥ ॥ धृत्येत्यादित्रिभिः। अव्यभिचारिण्या-विहितविषयया । योगेन-भगवद्भक्तियोगेन युक्तयेति शेषः । यया धृत्या मनसः प्राणस्येंद्रियाणां च क्रिया धारयते । सा धृतिः सात्विकीत्यर्थः ॥३३॥ यया धृत्या धर्मकामार्थान्धारयते

प्रसंगेन-प्रकृष्टेन कर्मणि मदीयतास्नेहेन फलाकांक्षी धृतिः सा राजसीत्यर्थः ॥३४॥ योदुर्मेधाः दुष्टबुद्धिः पुरुषः यया धृत्या स्वप्नमतीव निद्रां भयं शोकं दुःखं विषादं मनोदौर्बल्यं मदं च । स्वप्नाद्युपलक्षितं सर्वं निषिद्धं भगवद्द्वेषादि न विमुंचति सा तामसीत्यर्थः ॥३५॥ प्रतिज्ञापूर्वं गुणतः सुखस्य त्रैविध्यमाह ॥ ॥ सुखंत्विति । यत्र-यस्मिन्सुखे चिरकालमभ्यासात्पुनः पुनः रमते । दुःखांतं-दुःखनाशं च नितरां गच्छति-प्राप्नोति तत्सुखं त्रिविधमित्यर्थः । यद्वा पूर्वार्धमेव प्रतिज्ञापरं । उत्तरार्धं यत्तदिति श्लोकश्च सात्विकसुखोक्तिपरः । यत्प्रसिद्धं सुखं अग्रे पूर्वं विषमिव आयाससाध्यत्वात् । परिणामे-विपाके अमृतसदृशं आत्मबुद्धिप्रसादजं आत्मनोविष्णोः प्रसादादनुग्र-

यया स्वप्नं भयं शोकं विषादं मदमेव च । न विमुंचति दुर्मेधाः धृतिः सा पार्थ तामसी ॥ ३५ ॥ सुखं त्विदानीं त्रिविधं श्रुणु मे भरतर्षभ । अभ्यासाद्रमते यत्र दुःखांतं च निगच्छति ॥३६॥ यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७॥ विषयेंद्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् । परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥ यदग्रे चानुबंधे च सुखं मोहनमात्मनः । निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥ न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्वं प्रकृतिजैर्मुक्तं यदेभिःस्यात्त्रिभिर्गुणैः ॥ ४० ॥ ॥ ॥ ॥ ॥

हाज्जातं बुद्धेः प्रसादाच्च । बुद्धेःप्रसादोनाम-स्वतोविषयेष्वप्रवृत्तिः ततोजातं च यत्तत्सुखं सात्विकमित्यर्थः ॥ ३६ ॥ ३७ ॥ विषयेंद्रियसंयोगाच्छब्दादिविषयाणांच श्रोत्रादींद्रियाणां संयोगेनोत्पन्नविषयानुभवेन जायमानं यत्तत्प्रसिद्धं सुखं अग्रे-प्रथममममृतसदृशं विपाके विषमिव दुःखावहत्वात् । तत्सुखं राजसमित्यर्थः ॥ ३८ ॥ यत्सुखमग्रे चानुबंधेच पश्चात् विपाककालइति यावत् । आत्मनः स्वस्य मोहनं-मोहकरं पारवश्यकृत् । निद्रालस्यप्रमादैरुत्थितं-उत्पन्नं । आलस्यं-शरीरमांद्यं । प्रमादः-अधर्मे बुद्धिः तत्सुखं तामसमित्यर्थः ॥ ॥ ३९ ॥ सर्वजीवानां गुणत्रयबद्धत्वेन त्रैविध्यमाह ॥ ॥ नतदस्तीति । यत्सत्वं जीवजातं प्रकृतिजैरेभिस्त्रिभिः सत्वादिगुणैः मुक्तं स्यात् ।



तत्सत्वं पृथिव्यां दिवि देवेषु वा । पुनःशब्दः समुच्चये नास्ति । मुक्तव्यावृत्त्यर्थं पृथिव्यामित्याद्युक्तिः । तत्रायं विवेकः । सात्विकराजसतामसभेदेन जीवास्त्रिविधाः । सात्विकादयोपि प्रत्येकं त्रिविधाः । पितृगंधर्वपूर्वकाः सात्विकतामसाः । मुनयः-सात्विकराजसाः । देवाः सात्विक सात्विकाः । सात्विकसात्विकेष्वपि बृहस्पत्यादयः सात्विकसात्विकतामसाः । इंद्रः सात्विकसात्विकराजसः । ब्रह्मादिरुद्रावसानाः सात्विकसात्विकसात्विकाः । तेष्वपि रुद्रः सात्विकसात्विकसात्विकतामसः । ब्रह्माणीभारत्यौ तादृग्राजस्यौ । ब्रह्मवायू तु सात्विक सात्विकसात्विकसात्विकावेवेति । मध्यमोत्तमनराः राजसाः तेपि प्रत्येकं त्रिविधाः । तेषु विप्रादिपुल्कसांताः ये भागवताः ते राजससात्विकाः । राजससात्विकेष्वपि विप्राराजससात्विकसात्विकाः । क्षत्रियास्तु स्वल्परजोयुक्ततया राजसराजससात्विकाः । वैश्यास्तु समसत्वरजोयुक्ततया राजसराजससात्विकाः । शूद्रास्तु तमसोल्पत्वेन रजोधिकेन युक्ततया तामसराजससात्विकाः । राजससात्विकसात्विकविप्रेष्वपि ये शुद्धस-

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप । कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥ शमो दमस्तपः शौचं क्षांतिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥ ४२ ॥ ॥ ॥

त्वात्मकाः ते परमहंसशब्दिताः शिखायज्ञोपवीतहीनाः एकदंडिनः किंचिद्रजोयुक्तसत्ववंतोहंसशब्दिताः यज्ञोपवीतवंतः एकदंडिनः शिखाहीनाः । ततोधिकरजोयुक्तसत्ववंतः त्रिदंडिनः शिखायज्ञोपवीतवंतोग्रामैकरात्रिचरा बहूदकसंज्ञकाः । ततोप्यधिकरजोयुक्तसत्ववंतस्त्रिदंडिनः शिखायज्ञोपवीतवंतोयावज्जीवं पुत्रदत्ताशनाः कुटीचकाः । तामसाअपि सात्विकादिभेदेन त्रिविधाः । तत्र नराधमाः सात्विकतामसाः । दैत्यभृत्याराजसतामसाः । महादैत्यास्तामसतामसाइति ॥ ४० ॥ इदानीं ब्राह्मणाद्यधिकारिगुणकृतकर्माणि भिन्नानि संतीत्याह ॥ ॥ ब्राह्मणेति । त्रैवर्णिकानामिव द्विजन्मत्वं नेति द्योतनाय शूद्राणामिति पृथङ्निर्देशः । स्वाभावप्रभवैः ब्राह्मणादितत्तत्स्वभावानुबंधिभिः सत्वादिगुणैः कर्माणि प्रविभक्तानि तानि मे श्रुण्विति भावः ॥ ४१ ॥ तत्र चतुर्वर्णकर्माणि क्रमात्त्रिभिराह ॥ ॥ शम-

इत्यादिभिः। शमः-भगवन्निष्ठा बुद्धिः। दमः-इंद्रियनिग्रहः। तपो-ब्रह्मचर्यादि। शौचं-बाह्याभ्यंतरशुद्धिः क्षांतिः-क्रोधानुत्पत्तिः। आर्जवं-मनोवाक्कायकर्मणामवैपरीत्यं। ज्ञानं-सामान्यतः विज्ञानं-विशेषतः। आस्तिक्यं-धर्मादावस्त्यनेन प्रयोजनमिति भावना। एतत्सर्वं स्वभावजं सहजं ब्राह्मं ब्राह्मणसंबंधि कर्मेति ॥ ४२ ॥ शौर्यमभीरुत्वं। तेजः-शरीरगतवर्चोविशेषः। धृतिर्धैर्यं। दाक्ष्यं-पाटवं। युद्धे चाप्यपलायनं-भीत्या युद्धादनिवर्तनं। दानं-गोभूतिलहिरण्यादेः पात्रे प्रतिपादनं। ईश्वरभावोदंडनादिकर्तृत्वं। "प्रसह्य वित्ताहरणं शारीरोदंडएव च। अशिष्टानां शासनं च तथैवार्थविनाशनं। एषईश्वरभावः स्यान्न कार्यः क्षत्रियेतरैरि"ति स्मृतेः। एतत्सर्वं स्वभावजं क्षत्रियसंबंधि कर्मेत्यर्थः। अत्र ब्राह्मणधर्माः शमादयोपि तेभ्यः किंचिदूनाः क्षात्रधर्मेष्वपि ग्राह्याः। शमादेर्ब्राह्मणधर्मतोक्तिस्तु क्षत्रियधर्मा-

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥ कृषिगोरक्षवाणिज्यं वैश्यं कर्म स्वभावजम्। परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥ स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विंदति तच्छृणु ॥४५॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ॥ ४६ ॥ ॥ ॥

द्यपेक्षयाधिक्यविवक्षयैव। येषु चक्रवर्तिषु विप्रेभ्योधिकशमादयः तेऽत्र न विवक्षिताः। किंतु तदन्यएवेति ज्ञेयं। क्षत्रधर्माअपि विप्रादिषु क्रमादूनाज्ञेयाः ॥ ४३ ॥ कृषिः-कर्षणेन जीवनं गवां पालनं वाणिज्यं-वार्तया जीवनं। अत्रापि क्षत्रियादूनाः शमादयोपि वैश्यकर्ममध्ये ग्राह्याः। परिचर्यात्मकं-त्रैवर्णिकसेवारूपं। अत्रापि वैश्यादूनशमादिकं च ग्राह्यं ॥ ४४ ॥ अस्त्वेवं ब्राह्मणादिकं प्रविभक्तं। ततः किमित्यतआह ॥ ॥ स्वेस्वइति। प्रागुक्तब्राह्मणादिस्वकीये कर्मण्यभिरतः स्वस्वकर्मणा भगवदाराधनं कुर्वन्नरः संसिद्धिं-मुक्तिं ज्ञानद्वारा लभते-प्राप्नोति। एतदेव सम्यग्विशदयितुं प्रतिजानीते ॥ ॥ स्वकर्मेति। विंदति-लभते। तत्तं प्रकारं शृणिवति ॥ ४५ ॥ यतोयस्माद्भगवतो भूतानां-प्राणिनां प्रवृत्तिः-चेष्टा भवति। येन च भगवता इदं सर्वं चराचरात्मकं जगत्ततं-व्याप्तं भगवंतं स्वकर्मणा

समभ्यर्च्य-शमदमादिपूर्वकं पूजयित्वा सिद्धिं-मोक्षं विंदति-लभते मानवः-मनुष्योब्राह्मणादिरित्यर्थः ॥ ४६ ॥ स्वधर्मनिरतत्वमावश्यक-मित्येतदुपपादयति ॥ ॥ श्रेयानिति । विगुणोंगहीनोपि स्वधर्मः सम्यगनुष्ठितात्परधर्माच्छ्रेयान्पुमर्थसाधनं । विगुणः कथं श्रेयानित्य-तआह ॥ ॥ स्वभावेति । किल्बिषं-वैगुण्यकृतदोषं नाप्नोति वैगुण्यशंकया स्वधर्मत्यागोन कार्यः ॥ ४७ ॥ वैगुण्यदोषस्य सर्वत्राव-र्जनीयत्वादित्याह ॥ ॥ सहजमिति । हि यस्मात्सर्वारंभाः-सर्वकर्माणि धूमेनाग्निरावृतइव दोषेणावृताएव ततः सदोषमपि सहजं कर्म न त्यजेदिति ॥ ४८ ॥ स्वकर्मनिरतः सिद्धिं विंदतीत्यत्रापेक्षितधर्मांतराण्याह ॥ असक्तइति । सर्वत्र-शब्दादिविषयेषु । असक्तबु-

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥ सहजं कर्म कौंतेय सदोषमपि न त्यजेत् । सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥ असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः । नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥ सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे । समासेनैव कौंतेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥ बुद्ध्या विशुद्धया युक्तो धृत्या-त्मानं नियम्य च । शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥ ॥ ॥

द्धित्वे हेतुर्जितात्मेति-वशीकृतमनस्कः वैषयिकसुखे क्षुद्रामुष्मिकसुखे चापगतेच्छः । परमां-संपूर्णां नैष्कर्म्यसिद्धिं-नैष्कर्म्याय-मोक्षाय सिद्धि-उपायसिद्धिं प्रारब्धान्यसर्वानिष्टकर्मनाशाख्यां सिद्धिं वा । संन्यासेन काम्यकर्मत्यागेन सर्वकर्मणां भगवति समर्पणेन वाधिग-च्छति-प्राप्नोति ॥ ४९ ॥ प्रतिज्ञापूर्वं नैष्कर्म्यसिद्धिसाधनं विवृण्वन्तदनंतरफलमाह ॥ ॥ सिद्धिमिति । या नैष्कर्म्याय सिद्धिः ज्ञानस्य परिनिष्ठा तां नैष्कर्म्यसिद्धिं येन प्रकारेण प्रवर्तमानः प्राप्तो भूत्वा अरं ब्रह्म-लक्ष्मीमाप्नोति तं प्रकारं संक्षेपतोमे निबोध-बुध्यस्व ॥५०॥ प्रतिज्ञातमाह ॥ ॥ बुद्ध्येति । विशुद्धया-विषयेष्वसक्तया बुद्ध्या युक्तः । धृत्या-धैर्येण स्तंभनशक्त्या आत्मानं-मनो नियम्य-वि-

षयेभ्योनिवर्त्य च शब्दादीन् विषयान्-त्यक्त्वा तदनुभवेच्छां विहायेति यावत् । यस्य यद्रागद्वेषौ-यौ रागद्वेषौ तौ च त्यक्त्वा । व्युदस्येति पाठे न तु क्लेशः ॥५१॥ विविक्तसेवी-जनसंमर्दहीनदेशवासी लघ्वाशीः-लघ्वाहारवान् । यतवाक्कायमानसः-सद्विषयएव नियमितवागादिः । नित्यं ध्यानरूपोपायपरः । वैराग्यं समुपाश्रितः ॥५२॥ अहंकारं-स्वकर्तृत्वाभिमानं । बलं-स्वसमर्थताभिमानं । दर्पं-भीतिहेतोरदृष्टिं । कामं-विषयाभिलाषं । क्रोधं-परिग्रहं च विमुच्य । निर्ममः-कर्मणि मदीयताबुद्धिहीनः । शांतः-हेतुभिरप्यनुत्थितकोपः । ब्रह्मभूयाय-ब्रह्मणि-स्थितिर्ब्रह्मभूयं तस्मै सर्वदा ब्रह्ममनस्कत्वायेत्यर्थः कल्पते-समर्थोभवति ॥५३॥ ततःकिमित्यतआह ॥ ॥ ब्रह्मभूतइति । ब्रह्मणि स्थित-

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥ अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते ॥५३॥ ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्वतः । ततो मां तत्वतो ज्ञात्वा विशते तदनंतरम् ॥५५॥ सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥ ॥ ॥ ॥

मनस्कः लक्ष्मीं प्राप्तः प्रसन्नात्मा स्वतएव विषयेष्वप्रवृत्तमनाः । न शोचति-न कांक्षति । सर्वेषु भूतेषु समः परां भक्तिं लभते ॥५४॥ ततश्च किमित्यतआह ॥ ॥ भक्त्येति । अहं यावान्-देशकालगुणैर्यावान्व्याप्तोस्मि । यश्च-यन्नामा यद्रूपश्चास्मि तादृशं मां प्रागुक्तया परमभक्त्या तत्वतः । अभि-स्वयोग्यतानुसारेण जानाति । तेनापि किमित्यतआह ॥ ॥ ततइति । भक्तिबलात्तत्वतोमां ज्ञात्वा तदनंतरं मां विशते-मदनुप्रविष्टोभवति-मुक्तोभवतीत्यर्थः ॥ ५५ ॥ पुनरंतरंगसाधनान्युक्त्वा शास्त्रार्थमुपसंहरति ॥ ॥ सर्वेति । यद्वा"यतः प्रवृत्तिर्भूतानामि"त्यत्र"स्वकर्मणा तमभ्यर्च्ये"त्युक्तं । तत्र कर्मकरणं विशिष्य फलं व्यनक्ति ॥ ॥ सर्वेति । मद्व्यपा-

श्रयः-मय्येव समर्पयन्नेव सर्वाणि विहितानि कर्माणि सदा कुर्वाणः मत्प्रसादाच्छाश्वतं पदं अव्ययं मत्स्वरूपमवाप्नोति शाश्वतमव्ययमिति कूटस्थतयात्यंतहीनमित्यर्थः । अत्र अपिशब्दोनैकमपि कर्म अतदाश्रयेण कार्यमित्यर्थसूचनाय ॥५६॥ यदि भगवदाश्रयेण विहितकर्मकुर्वतो मुक्तिस्तर्हि त्रैविद्यस्यापि सा स्यात् । तस्यापि विहितकर्मकरणभगवदर्पणयोः सत्वेन भगवदाश्रयत्वादित्यत आह ॥ ॥ चेतसेति । चेतसा-सर्वाणि कर्माणि मयि संन्यस्य-समर्प्य मत्परः-अहमेव परः सर्वोत्तमइति भावो यस्य समत्परः भव । किंच बुद्धियोगं-बुद्धेर्योगं-बुद्धेः प्रत्याहारादिरूपं उपायमाश्रित्य मच्चित्तः-मय्येव निरुद्धचित्तः सततं भवेत्युक्त्या त्रैविद्यस्यैवंरूपत्वाभावान्न तस्य मुक्तिशंकेति भावः ॥ ५७ ॥ भगवच्चित्तस्य फलमाह ॥ ॥ मच्चित्तइति । मच्चित्तोमय्येव निरुद्धमनस्कः । सर्वाणि दुर्गाणि-दुस्तराणि दुःखेन

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः । बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥ मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि । अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥ ५८ ॥ यदहंकारमाश्रित्य न योत्स्य इति मन्यसे । मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥ स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा । कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोपि तत् ॥ ६० ॥ ॥ ॥

तर्तव्यानि कष्टानि मत्प्रसादात्तरिष्यसि एवं स्वविहितवृत्त्या भगवदाराधनस्य परमधर्मत्वात्युद्धाख्यस्वविहितकर्म भगवत्प्रीत्यर्थमेवावश्यं कार्यमित्येतावता प्रबंधेन प्रतिपादितं । तदकरणेऽनिष्टमाह ॥ ॥ अथचेदिति । अर्थांतरे अथ शब्दः । अहं न योत्स्यामीत्यहंकारात् युध्यस्वेति मदीयवचनं त्वं न श्रोष्यसि चेत्-श्रुत्वा न करोषि चेत् । विनंक्ष्यसि-पुरुषार्थहीनोभविष्यसि मद्वचनाकरणे विनाशइत्यभ्युपेत्योक्तं ॥५८॥ मदुक्ताकरणमशक्यं च तवेत्याह ॥ ॥ यदिति । मिथ्यैव-वृथैव ते व्यवसायः-निश्चयः । कुतः प्रकृतिरीश्वरेच्छा । त्वां नियोक्ष्यति-प्रेरयति ॥ ५९ ॥ ईश्वरेच्छाया जीवनियमे निमित्तत्वादिकं दर्शयन्नुक्तं विवृणोति ॥ ॥ स्वभावजेनेति । स्वभावः

संस्कारस्तज्जातेन स्वेन कर्मणा निबद्धः । हे कौंतेय यत्कर्म मोहाद्बंधुस्नेहमोहात्कर्तुं नेच्छसि । तत्कर्मावशोपि-स्वानधीनोपि भगव-दिच्छाधीनोपि सन्करिष्यसि ॥६०॥ नन्वीश्वरेच्छायाः प्रवर्तकत्वे ईश्वरः प्रवर्तकोनेति शंकामीश्वरस्वरूपं दर्शयन्परिहरति ॥ ॥ ईश्वरः इति ईश्वरः-यंत्रारूढानि-यंत्राणि-शरीराणि तदारूढानि-तत्रस्थानि भूतानि-प्राणिनः मायया-स्वरूपभूतेच्छया भ्रामयन्नानाकर्मसु प्रवर्तयन्सर्वभूतानां हृद्देशे तिष्ठति ॥ ६१ ॥ यस्मादेवमीश्वरएव स्वतंत्रः जीवास्तदधीनास्तस्मादहंकारमुत्सृज्य तमेवेश्वरं सर्वभावेन सर्वप्रकारेण शरणं गच्छ-याहि । मां शरणं याहीति वक्तव्ये ईश्वरस्तिष्ठति तं शरणं याहीति परोक्षनिर्देशः कृष्णस्येश्वरत्वानिश्चयार्थत्वाभिप्रायेण । "निश्चयार्थः सतु ज्ञेयोयत्रात्मैव परोक्षतः । उच्यते"इति स्मृतेः । तत्प्रसादादीश्वरप्रसादात्परां शांतिं-बुद्धेर्भगवन्निष्ठतां । शाश्वतं

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया ॥ ६१ ॥ तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥ इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया । विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥ सर्वगुह्यतमं भूयः श्रुणु मे परमं वचः । इष्टोसि मे धृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥ ॥ ॥ ॥

स्थानं-वैकुंठादिलोकं प्राप्स्यसीति । वैकुंठादिस्थानस्य शाश्वतत्वं च चित्प्रकृत्यात्मकत्वात् । "श्रीरेव लोकरूपेण विष्णोस्तिष्ठती"त्यादेः॥ ६२॥ एवं भगवानर्जुनस्यातिगोप्यं तत्वं उपदिश्य तदनुवादपूर्वं तूष्णीं स्थितं अर्जुनमाक्षिपति ॥ ॥ इतीति । गुह्याद्गुह्यतरं अतिगोप्यं इति प्रागुक्तप्रकारेण ज्ञानं ज्ञेयं ते-तुभ्यं मया आख्यातं एतदशेषेण विमृश्य विचार्य यथेच्छसि तथाकुर्वित्याक्षेपः ॥ ६३ ॥ तत्वसारमुपसंहृत्य साधनसारकथनमुपसंहर्तुं प्रतिजानीते ॥ ॥ सर्वेति । चतुर्दशादौ साधनसारस्योक्तत्वाद्भूयइत्युक्तं । पुनरित्यर्थः । सर्वसाधनेषु गोप्यतमं मे परमं वचः श्रुणु मे इष्टोसि । दृढमिति निश्चयः । ततस्ते हितं वक्ष्यामि । उपसंहाररूपेण कथयिष्यामीत्यर्थः ॥ ६४ ॥

तदाह ॥ ॥ मन्मनाइति । यतोमे प्रियोसि । अतोमन्मनस्त्वादिसाधनसारचतुष्टयेन मामेवैष्यसि-प्राप्स्यसि । ते सत्यं प्रतिजाने । अवश्यं मत्प्राप्तिर्भवतीति प्रतिज्ञां करोमि नात्र संदेहः कार्यइति भावः ॥ ६५ ॥ कथं मन्मनस्त्वादिकमित्यतउक्तं ॥ ॥ सर्वधर्मानिति । अन्यसर्वधर्मान्परित्यज्य मन्मनाः मद्भक्तोमद्याजीत्येवं । पूर्वशेषोयं । मन्मनाभवेत्यादिना किमुक्तं भवतीत्यतस्तस्योपसंहाररूपेण व्याख्या क्रियते मामेकं शरणं व्रजेति । मन्मनस्त्वादेरेव शरणागतिरूपत्वात् । उक्तं हि । "सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा । सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणं । अखंडा त्रिविधा पूजा तद्वत्यैव स्वभावतः । रक्षतीत्येव विश्वासस्तदीयोहमिति स्मृतिः" । शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदे" ति । यद्वा सर्वधर्मान्परित्यज्येति-सर्वधर्मफलानि परित्यज्येत्यर्थः । अन्यथा युद्धविधिविरोधः स्यात् । यद्वा अवैष्णवसर्व-

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ॥ ६५ ॥ सर्व-धर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥ इदं ते नातपस्काय नाभक्ताय कदाचन । न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥ ॥

धर्मान्परित्यज्येत्यर्थः । अनादिजन्मकृतप्रतिबंधकस्यसत्वात्कथं मामेव एष्यसीत्युक्तिरित्यतआह । अहं त्वेति । त्वा-त्वामनादिजन्मकृतपापेभ्यः मोक्षयिष्यामि-तन्निर्मुक्तं करिष्यामि । मा शुचः-संसारभयाच्छोकं मा कार्षीः ॥ ६६ ॥ गीताशास्त्रेऽनधिकारिनिरासेन लक्षणयाधिकारिणमाह ॥ ॥ इदमिति । इदं गीताशास्त्रं तपोहीनाय ते-त्वया न वाच्यं । अशुश्रूषवे-सेवामकुर्वते न वाच्यं । तपोहीनोपदेशादप्यशुश्रूषोरुपदेशोमहादोषकरइति सूचनायात्र च शब्दः । "समुच्चयेथवाधिक्ये न्यूनत्वे चः प्रयुज्यते"इत्युक्तेः । चश्चकारइत्यर्थः । अशुश्रूषूपदेशादप्ययमभक्ताय कदाचन-कदापि न वाच्यमित्युक्तिः अल्पमात्रतपःशुश्रूषावतोभक्तिमतः कदाचिदुपदेशेपि भक्तिहीनायोपदेशे महान्दोषइति सूचनाय । मां योभ्यसूयति तस्मै न वाच्यमित्यत्रापि च शब्दः तपोहीनादित्रितयोपदेशादप्यसूयावतउपदेशे दोषाधिक्य-

ज्ञापनार्थः । एतेन तपःप्रभृतिगुणयुक्तोऽधिकारीति सूचितं ॥ ६७ ॥ गीताशास्त्रस्य व्याख्यानं फलोक्त्या प्रशंसति ॥ ॥ य इत्या-दिद्वाभ्यां । परमं गुह्यं-अतिगोप्यं इदं गीताशास्त्रं । योधिकारी मद्भक्तेभ्योभिधास्यति-उपदेक्ष्यति स इति योज्यं । मयि परां भक्तिं कृत्वा मामेवैष्यति-प्राप्स्यति । असंशयः-नास्तिसंशयः ॥६८॥ तस्माद्गीताव्याख्यातुः मनुष्येषु कश्चिन्मे प्रियकृत्तमः नचास्ति-नैवास्ति । तस्मा-दन्योमे प्रियतमोभविता च न । नाभूदिति च ज्ञेयं । अत्र मनुष्येष्वित्युक्त्या देवानां फलाधिक्यं सूचयति ॥ ६९ ॥ गीताध्ययन-मपि फलकथनेन प्रशंसति ॥ ॥ अध्येष्यतेचेति । धर्म्यं-धारकत्वाद्धर्मोभगवान् । तदीयं धर्म्यं-धर्मसाधनमितिवा । इममावयोः संवा-

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥ न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः । भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥ अध्येष्यते च य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥७०॥ श्रद्धावाननसूयश्च शृणु-यादपि यो नरः । सोपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥ कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा । कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनंजय ॥७२॥ ॥ ॥ ॥

दं- गीताप्रबंधं यः अध्येष्यते च-पठिष्यति च । तेन पुंसा ज्ञानयज्ञेन-ज्ञानाख्ययज्ञेनाहमिष्टः-पूजितः स्यां-भवेयं । इति मे मतिः ॥ ॥ ७० ॥ गीताश्रवणमपि फलोक्त्या प्रशंसति ॥ ॥ श्रद्धावानिति ॥ अस्मादस्ति मे फलमित्यास्तिक्यबुद्धिमान् । अनसूयः-असूयादिदोषरहितश्च नरः इममावयोः संवादं शृणुयाच्चेदपि । सोपि मुक्तः सन्पुण्यकर्मणां शुभाँल्लोकानवाप्नुयात् । अत्र सोपि श्रवणं कुर्वन्नपि मुक्तः । किमु तदध्येतेत्युक्त्या श्रवणं कुर्वतोपि तदध्येतुर्मुक्तावधिकसुखमिति सूचितं । तथा तस्मादपि व्याख्यातुर्मनुष्यस्याधिकं सुखं । ततोदेवानामिति ज्ञातव्यं ॥ ७१ ॥ एतावानुपदेशः अरण्यरुदितवज्जातोन भवति किलेति भावेन पृच्छति ॥ ॥ कच्चिदिति ॥



किमित्यर्थेऽव्ययमेतत । हे पार्थ त्वयैकाग्रेण चेतसा एतत् मदुक्तं गीताप्रमेयं श्रुतं किं । अज्ञानोत्थः संमोहः कच्चित्ते प्रणष्टः ॥ ७२ ॥ इति पृष्टस्योत्तरमाहार्जुनः ॥ ॥ नष्टइति ॥ नष्टोमोहः प्रथमाध्यायोक्तोविपरितज्ञानलक्षणोमोहोनष्टः । त्वत्प्रसादान्मया स्मृतिर्लब्धा । नारायणद्विट्तदनुबंधिनिग्रहः परमोधर्मोवश्यं कार्यएवेत्यादिस्मृतिर्मम जातास्ति । गतसंदेहः युद्धे स्थितोस्मि । यथेच्छसि तथा कुर्विति भगवत्कृताक्षेपपरिहाराय भगवंतमनुसरति । करिष्ये वचनं तवेति ॥ ७३ ॥ एकांते संजातः कृष्णार्जुनसंवादः कथं त्वया ज्ञातइति धृतराष्ट्रहृद्गतशंकां निराह संजयइत्याह ॥ ॥ इत्यहमिति ॥ इतिपदेन प्रथमाध्यायाद्युक्तस्य सर्वस्य परामर्शः । महानात्मा मनोयस्य

अर्जुनउवाच । नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत । स्थितोस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥ संजयउवाच । इत्यहं वासुदेवस्य पार्थस्य च महात्मनः । संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥ व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् । योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ॥७५॥ राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् । केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥ तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः । विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥७७॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥ ॥ ॥ ॥

तस्य महात्मनः । अद्भुतं-प्राक्कुत्रापि न श्रुतं आश्चर्यं रोमहर्षणं-रोमांचकरं ॥७४॥ व्यासेन हि संजयस्य कुरुक्षेत्रे युद्धसमाप्तिपर्यंतं तत्र प्रवृत्तस्य सर्वस्यापि दर्शनश्रवणे तव स्यातामिति दिव्यदृष्टिदानात् व्यासप्रसादादित्युक्तं । योगं-पुमार्थोपायं योगेश्वरात्सर्वोपायानामीश्वरात् । स्वयमेव कथयतः कृष्णात् । साक्षादन्याव्यवधानेन श्रुतवानित्यन्वयः ॥ ७५ ॥ तच्छ्रवणेन स्वस्य जातं तात्कालिकं फलमाह राजन्नि-ति । हे राजन् धृतराष्ट्रस्य संबोधनं । पुण्यं पारत्रिकं सुखहेत्वदृष्टकरं ॥ ७६ ॥ तच्च रूपं विश्वरूपं ॥ ७७ ॥ युद्धकरणनिश्चयं श्रुत-

ततोराज्ञः कुत्रजयादिरिति हृद्गतशंकां निराह संजयः ॥ ॥ यत्रेति । यत्र-सेनायां योगीश्वरः-सर्वोपायवतां स्वामी श्रीः-राजलक्ष्मीः भूतिः-संपत् नीतिर्न्यायः ध्रुवा-निश्चलेति मम मतिः-निश्चयइत्यर्थः ॥ ७८ ॥ अशेषगुणपूर्णाय दोषदूराय विष्णवे । नमः श्रीप्राणनाथाय

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुमर्थहेतुज्ञानसाधनस्य गुणकार्यस्य संन्यासस्य योगस्य च निरूपणं ( संन्यासयोगो ) नाम अष्टादशोऽध्यायः ॥ १८ ॥ ॥

भक्ताभीष्टप्रदायिने ॥ १ ॥ इति श्रीकृष्णगीताभाष्याद्युक्तार्थसंग्रहः । राघवेंद्रेण यतिना कृतः सज्जनसंविदे ॥ २ ॥ इति श्रीमत्सर्वतंत्रस्वतंत्रसुधींद्रपूज्यपादशिष्येण राघवेंद्रेण कृते श्रीमद्गीतार्थसंग्रहे पुमर्थहेतुज्ञानसाधनस्य गुणकार्यस्य च संन्यासस्य त्यागस्य च निरूपणं नाम अष्टादशोऽध्यायः ॥ १८ ॥ ॥ समाप्तोयं ग्रंथः ॥



# अथ गीताश्लोकाद्यचरणानुक्रमणिका.

इदं पुस्तकं श्रीनारदासभनुजोद्भव पांगरी आचार्यैः प्राचीनलिखितपुस्तकैः बहुपरिश्रमेण संशोध्य बेळगांवपट्टणस्थ दत्ताजीराव आबाजीराव सावंत
अस्मदीय " रामतत्व-प्रकाश " मुद्रणालये मुद्रयित्वा प्रकाशितम्.

॥ इति श्रीगीताविवृत्तिः समाप्ता ॥